गोचरत्वेतु चैतन्यम्, एवं पञ्चभेदाः। तत्र निराकारः॥

न यत्र कालोऽनिमिषां परः प्रभुः,
कुतोऽनुदेवा जगतां य ईशिरे।
न यत्र सत्वं न रजस्तमश्च,
नवैविकारो न महान् प्रधानम् ॥७॥

---

एवमुपाधिस्वरूपं निर्द्धार्य्योपहितेषु संख्याविशेषस्योपयोगमाह--तेष्विति। तेषु स्थितिसृष्टिसंहारेषु विष्णवादयः क्रमान्निमित्तम्। कुलाल इव घटस्य, पुरुष उपादानं समवायिकारणं घटस्येव मृत्। दृष्टा च कारणद्वयपूर्विका कार्य्यप्रकृतिः। असमवायिकारणन्तु निमित्तान्तरगतमेवेति पृथङ्नोक्तम्। अतएव "अन्वयादितरतश्च"(२)ति प्रथमश्लोके द्वयमेवोपात्तम्। गोचरत्वे प्रतीतिविषयत्वे तु निर्विशेषचैतन्यं हेतुः। "तस्य भासासर्वमिदं विभाति" (३) इति श्रुतेः। तच्च स्थित्यादिनिमित्तार्थं त्रयः उपादानार्थश्चैकः, गोचरत्वार्थमन्यश्चेति। "विष्णुं पञ्चात्मकं" इत्यत्र चयश्चैवोक्ता न न्यूनाधिका इत्यभिप्रेत्याह, एवमिति। नचैवमेकः सामान्यात्मा विशेषरूपाश्च पञ्चेति षट्कमाशङ्क्यं विशेषपरिहारे सामान्यस्यानवस्थानात्। एवं तावत् पञ्चवस्तूनि स्वयं लक्षयित्वा तदेव ग्रन्थारूढेन लक्षणेन दृढयितुमाह, तत्रेति। निराकार इति। निराकारस्य लक्षणं कथ्यत इत्यर्थः॥

---

(१) भागवत १।१।१ श्लोः।

(२) मुण्डकोपनिषद् २।१४ श्लोः।

परं पदं वैष्णवमामनन्ति तत्,
यन्नेति नेतीत्यतदुत्सिसृक्षवः।
विसृज्य दौरात्म्यमनन्य सौहृदा,
हृदोपगुह्यार्ह-पदं पदे पदे ॥८॥

तत्रापि न यहेति तटस्थस्य, परं पदमिति स्वरूपस्य, तत्परं पदं वैष्णवं आमनन्ति। विष्णुनाधिष्ठितेन राजाधिष्ठितवत्। ब्रह्मादिपदानामपि विष्णुनाधिष्ठितत्वात् परमित्युक्तं विष्णुनैवाधिष्ठितमित्यर्थः। यत्र पदे कालो नास्ति यः आनमिषां ब्रह्मादीनाम्पर: प्रभुः संहर्त्ता महाप्रलयेऽपि नाशो नास्त्येवेत्यर्थः। अतएव कालाभावे किं पुनर्न्यायेन देवा अपि तत्र न सन्तीत्याह, कुतोऽन्विति। तथा देवाभावे जीवा अपि न सन्तीत्याह जगतामिति। ये देवा जगतामुच्चावचां गतिङ्कच्छतां जीवानामीशाः। तेषां वार्त्ता तत् क्षतविघ्नगन्धोऽपि नास्तीत्याह। इशीरे इत्यनित्यत्वद्योतनार्थं लिट्प्रयोगः।

यत्र च पदे सत्वादिर्नास्ति सत्वमिन्द्रियदेवतारूपं, रज इन्द्रियं, तम इन्द्रियार्थरूपं, निराकारोऽहङ्कारस्तेषां 'त्रयाणां कारणं महान् बुद्धितत्वं तदहङ्कारस्य. प्रधानमव्यक्तं तन्महतः, सत्वाद्यभावादेतत् प्रामबनां पुनर्ज्जन्मादिशङ्कावीजलेशोऽपि नास्तीत्यर्थः॥ २।२।१७।(७)। एवं दुःखं नास्तीत्युक्त्वा सुखमस्तीत्याह, यन्नेतीति। यद् विष्णुपदं हृदा-मनसा उपगुह्याश्लिष्य अनन्यसौहृदा भवन्ति अन्यत्र विषये प्रीतिं परित्यजन्ति तादृक् सुखाभावात्। तद्धि पदे पदे क्षणे क्षणे अर्हपदं अर्हणास्वादस्य स्थानं उत्तरोत्तरचमत्कारणीयत्वात्। दौरात्म्यं विसृज्यानादिदुर्वासनावासितत्वं त्यक्त्वा विषयान्तरस्मृतिरपि (ति) नास्तीत्यर्थः। "नेति नेती"त्युपनिषदुपदेशविश्वासबलात्

इत्थं मुनिस्तूपरमेदवस्थितो-
विज्ञानदृग्वीर्यसुरन्धिताशयः ॥९॥
पुरुषः । भूतैर्यदा पञ्चभिरात्मसृष्टैः,
पुरं विराजं विरचय्य तस्मिन् ।
स्वांशेन विष्टः पुरुषाभिधान-
मवाप नारायण आदिदेवः ॥१०॥

(१)। अतत् विष्णुपदादन्यत्। उत्सिसृक्षवः स्वेच्छयैवोत्सृष्टवन्तः। नित्यनिरतिशयसुखानुभवरूपेऽनुभविता अनुभवनमनुभवनीय इति कर्तृ-करण-कर्माणि अतच्छब्देनोच्यन्ते। तानि ह्यनुभवार्थमुपादीयन्ते, सत्यनुभवे तु त्यज्यन्ते असत्यत्वादन्तरायत्वाच्च ॥२।२।१८। (८)।

एवमस्य द्विविधं लक्षणमुक्त्वाऽत्राधिकारिणमाह, इत्थमिति। इत्थं व्यवस्थितः अनेन प्रकारेण व्यवस्थामापन्नो मुनिरुपरमेद् न किञ्चित्कुर्य्यात्। यतो विज्ञानस्य विशुद्धज्ञानरूपस्य विष्णोर्दृग् दर्शनं साक्षात्कारः। तस्य वीर्य्यं बलं तेन सुरन्धितो यथा पुनर्नोदेति तथा हिंसित आशयो जीवत्वोपाधिर्येन स तथा। अयमर्थः। वक्ष्यमाण-भूमिकोपासनाक्रमबलात् सत्वपुरुषान्यताख्यातिमापन्नस्तामपि सायुज्यार्थी निरोद्धुकाम इत्येतामवस्थामापन्नो मुनिः अत्राधिक्रियते नान्यः (२)। अवश्यञ्चाधिकारि-निर्द्धारणार्थमित्थमित्यादि ज्ञेयम्। अन्यथास्योद्धरणं निष्प्रयोजनं स्यात्। शुकः राजानं प्रति ॥ २।२।१९। (९)। पुरुषलक्षणमाह भूतैरित्यादि। आत्मसृष्टैः आत्मना प्रकृतिमधिष्ठाय सृष्टैः पुरं देहं विराजं ब्रह्माण्डं विरचय्य निष्पाद्य-

(१) बृहदारण्यकोपनिषद् २।३।६। (२) योगदर्शनभाष्यं।१।१-४।

यत्‌काय एष भुवनत्रय सन्निवेशो-
यस्येन्द्रियैस्तनुभृतामुभयेन्द्रियाणि।
ज्ञानं स्वतः श्वसनतो बलमोज ईहा,
सत्त्वादिभिः स्थितिलयोद्भव आदिकर्त्ता ॥११॥
ब्रह्म विष्णु रुद्राः।
आदावभूच्छतधृती रजसाऽस्य सर्गे,
विष्णुः स्थितौ क्रतुपतिर्द्विजधर्म्मसेतुः।

---

तस्मिन् स्वांसेन जीवकलया यदा प्रविष्टः तदा पुरुषसंज्ञामवाप। पूरिशयनाद्वसनाद् वा पुरुषः (१)। अनंशेऽप्यंशोक्तिः कल्पनया नारायणः जलशायी। आदिदेवो निराकारः ११।४।३। (१०)।

एवं तटस्थं लक्षयित्वा स्वरूपं लक्षयति, यत्‌काय इति। एषः दृश्यमानो भुवनत्रयस्य सन्निवेशो यथायथं स्थितिः। यस्येन्द्रियैः "दिग् वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रप्रजापतिभिः" (२) शरीरिणामुभयानि ज्ञानकर्म्मभेदात्। इन्द्रियाणि-श्रोत्रत्वक्‌चक्षुर्जिह्वाघ्राण-वाक्‌पाणिपादपायूपस्थाः। स्वतः स्वस्मात् तत् स्वरूपादिति यावत्। तनुभृतां ज्ञानं यस्य श्वसनतः प्राणाद्बलं ज्ञानेन्द्रियाणां पाटवम्। ओजो मनश्च। ईहा कर्मेन्द्रियाणां स सत्त्वादिभिर्विशिष्टः। स्थित्यादौ आदिकर्त्ता प्रथमकारणमुपादानत्वात्। विष्ण्वादयस्तु पश्चात् कर्त्तारः निमित्तत्वात् ११।४।४। (११)।

एवं निराकारपुरुषौ लक्षयित्वा ब्रह्मादित्रयं लक्षयति। ब्रह्मेति। स प्रागुक्तः पुरुषः। आदौ शतधृतिर्ब्रह्माऽभूत्। रजसा उपाधिना।

(१) भागवत २।५।३०। (२) पूरिस्थं लिङ्गशरीरं शेते, इति पुरुषः। तत्त्वकौमुदी।

रुद्रोऽप्यये च तमसा पुरुषः स आद्य-
इत्युद्भवस्थितिलयाः सततं प्रजासु ॥१२॥

पुरुषरूपम् ।

तद्वामनं रूपमवर्द्धताद्भुतम्,
हरेरनन्तस्य गुणत्रयात्मकम् ।
भूःखं दिशो द्यौर्विवरा पयोधयः,
तिर्यङ्नृदेवा ऋषयो यदासत ॥१३॥

सर्गे निमित्ते । स एव स्थितौ विष्णुः सत्वेनेत्यर्थसिद्धम् । स्थिति-कर्त्तृत्वञ्च सन्निधिमात्रेण धर्म्मप्रवृत्तिहेतुत्वात् । तदाह । क्रत्विति । क्रतुः श्रौतो धर्म्मः । निजः पाञ्चरात्रादिस्थः । सेतुर्विधारकः । स एव तमसा रुद्रः । अप्ययः प्रलय इति एवम्विधाः सृष्ट्यादयः स्युः । सत्वं प्रतिदिनं प्रतिकल्पञ्च ब्रह्मरुद्रयोरनुक्तमपि सत्वं लभ्यते । केवलयोस्तु रजस्तमसोरस्वच्छत्वेन प्रतिबिम्बायोग्यत्वात् । अतएव सत्वेन विष्णुरिति नोक्तम् । द्रुमिलः निमिम् ११।४।५ । (१२) ।

एवं लक्षितानि पञ्चवस्तूनि । तत्र चतुर्णां ध्यानसिद्धये रूपाणि यथायथं वाच्यानि । तत्रादौ निर्विषयस्य मुमुक्षोः समोहितसिद्धौ सम्यञ्चमुपायमीक्षमाणस्य विश्वरूपधारणाख्यं प्रथमभूमिकोपासनां वक्तुं पुरुषरूपमाह, पुरुषेति । तल्लब्धप्रतिग्रहं । वामनं खर्वम् । अद्भुतं यथा स्यात्तथा । ननु खर्वञ्चेत् परिच्छिन्नं स्यादित्याह । अनन्तस्येति । अनन्तत्वे वृद्धिः कथं तत्राह । गुणेति । गुणोपाधिकमित्यर्थः । यद् यस्मिन् भ्वादयो दश आसत अदृश्यन्त । द्यौः स्वर्गः । विवराः पातालानि ।८।२०।२१ । (१३) ।

कार्ये बलिस्तस्य महाविभूतेः,
सहर्त्विगाचार्य्यसदस्य एतत्।
ददर्श विश्वं त्रिगुणं गुणात्मके
भूतेन्द्रियार्थाशय-जीवयुक्तम् ॥१४॥
रसामचष्टाङ्घ्रितलेऽथ पादयो-
र्महीं महीध्रान् पुरुषस्य जङ्घयोः।
पतत्रिणो जानुनि विश्वमूर्त्ते-
रुर्वोर्गणं मारुतमिन्द्रसेनः ॥१५॥
सन्ध्यां विभोर्वाससि गुह्य ऐक्षत्,
प्रजापतीन् जाघन आत्ममुख्यान्।

अत्राधिकारिणमाह काय इति। विभूतिरैश्वर्य्यम्। ऋत्विजो यज्ञकृतः। आचार्य्या मन्त्रव्याख्याकृतः। सदस्या उपदेष्टारः। तैः सहितः एतत्सर्व्वं प्रत्यक्षम्। भूतानि महान्ति पञ्च। इन्द्रियाणि दश। अर्थाः पञ्चतन्मात्राणि। आशयाः मनोबुद्धिरहङ्कारश्चित्तञ्चेति चत्वार्य्यन्तःकरणानि (१)। जीवः पुरुषः। एभिर्युक्तं पञ्चविंशति-तत्वात्मकमपश्यदित्यर्थः (२)। ददर्शेति सिद्धवदुक्तेर्भगवत्प्रसादा-द्दिव्यं चक्षुरस्यानुमेयम्। ननु सर्व्वस्वेन भजतो बलेः किं न-तात्त्विक-रूपोपलब्धिस्तत्राह। गुणात्मकः अद्यापरित्यज्यमाणगुणत्रयः। एते-नान्योऽपि त्रैगुण्यग्रथितचित्तोऽत्राधिकारीत्युक्तम् ॥८।२०।२२। (१४)

एवं सामान्येन रूपमुक्त्वा यदत्र चिन्त्यन्तदाह, रसामिति। रसां पातालं अचष्ट अपश्यत्। अङ्घ्रेस्तलेऽधः। अथ शब्दःसर्व्वत्र वाक्य-

(१) सांख्यमतेऽन्तःकरणानि त्रीणि, वेदान्तमते तानि चत्वारि। (२) प्रकृतिबुद्ध्यहङ्कार-तन्मात्रैकादशेन्द्रियपञ्चभूतानि पुरुषश्चेति पञ्चविंशतितत्त्वम्।

नाभ्यां नभः कुक्षिषु सप्तसिन्धू-
नुरुक्रमस्योरसि ऋक्षमालाम् ॥१६॥
हृद्यङ्गधर्म्मं स्तनयोर्मुरारे
ऋतञ्च सत्यञ्च मनस्यथेन्दुम् ।
श्रियञ्च वक्षस्यरविन्दहस्ताम्,
कण्ठे च सामानि समस्तरेफान् ॥१७॥
इन्द्रप्रधानानमरान् भुजेषु,
तत्कर्णयोः ककुभोद्यौश्चमूर्ध्नि ।

भेदार्थं योज्यः । पादयोरुपरीत्यर्थः । महीध्रान् पर्वतान् पतत्रिणः पक्षिणः । जानुनि जानुदेशे । मारुतां गणं आवहादीनां मारुतां-स्तोमम् । इन्द्रसेनोवलिः ॥८।२१।२३ (१५)

विभुर्व्यापी । जघनमेव जाघनम् । आत्ममुख्यान् दैत्यानित्यर्थः । कुक्षिषु कुक्षिप्रदेशेषु कुक्षेरेकत्वेन बहुवचनायोगात् । उरुर्महान् क्रमणं यस्य स तथा । ऋक्षमालां नक्षत्रपङ्क्तिम् ॥८।२०।२४॥ (१६)

अङ्ग अङ्गोरूपाङ्ग तत्श्रवणस्तिमितचित्तं राजानमुद्बोधयति शुकः । अङ्गेति । धर्म्मं स्मृत्यादिसिद्धम् । श्रौतस्य तु यज्ञग्रहणेन ग्रहणात् । ऋतं यथार्थं वाक्यम् । "सत्यं भूतहितप्रोक्तं ऋतमुक्तं यथार्थवाग्" इत्युक्तेः । यद्वा ऋतं सुनृतम् । सत्यं समदृष्टिः । "सत्यञ्च समदर्शनम्" (१) "ऋतञ्च सुनृतावाणी" (२)त्युक्तेः । अरविन्दहस्तामित्यनेन सर्वतत्त्वानां मूर्त्तत्वम् ज्ञेयं । रेफाः स्तोभाक्षराणि ॥८।२०।२५ ॥ (१७)

(१) भागवतं ११।१९।३७।
(२) ,, ११। १९ ।३८

कोशेषु मेघान् श्वसनं नासिकाया-
मक्ष्णोश्च सूर्य्यं वदने च वह्निम् ॥१८॥
वाण्याञ्च्छन्दांसि रसे जलेशम्,
भ्रुवोर्निषेधञ्च विधिञ्च पक्ष्मसु ।
अहश्च रात्रिञ्च परस्य पुंसो,
मन्युं ललाटेऽधर एव लोभम् ॥१९॥
स्पर्शे च कामं नृप ! रेतसाम्भ:,
पृष्ठेत्वधर्म्मं क्रमणेषु यज्ञम् ।
छायासु मृत्युं हसिते च मायाम्
तनूरुहेष्वोषधिजातयश्च ॥२०॥
नदीश्च नाड़ीषु शिलानखेषु,
बुद्धावजं देवगणान् ऋषींश्च ।

भुजेषु अष्टासु इन्द्रादीनष्टौ । १८॥ छन्दांसि वेदान् । वेदत्वाविशेषेऽपि सामवेदस्य कण्ठतलमन्तरङ्गत्वार्थम् । तच्च "वेदानां सामवेदोऽस्मि" (१) त्युक्तत्वात्, चकाराद्गायत्र्यादीनि सप्तधातुषु । रसे रसनेन्द्रिये । जलेशं वरुणं । भ्रुवोर्विधिनिषेधौ आज्ञारूपौ । पक्ष्मसूर्द्धाध:स्थितेषु अचिलोमसु अह: रात्रिञ्च मन्युं रुद्रम् । एव शब्दस्तत्त्वानां स्थाननियमार्थ:, प्रत्येकं योज्य: ॥ ८।२०।२७ (१९)

हे नृप ! रेतसा रेतसि आर्षो व्यत्यय: । सुपामितत्याकारो वा (२) । क्रमणेषु पादविक्षेपेषु छायासु करादीनां । हसिते हसने । तनूरुहेसु रोमसु । ओषधिजातय: ओषधी: जाती: ॥८।२०।२८। (२०)

(१) गीता १०।२२। श्लो: । (२) पाणिनि: ७।१।३९।

प्राणेषु गात्रे स्थिरजङ्गमानि,
सर्वाङ्गमत्रेण विषङ्गमूर्त्तेः ॥२१॥
सर्वात्मनीदं भुवनं निरीक्ष्य,
सर्वे सुराः कश्मलमापुरङ्ग ! ।
सुदर्शनं चक्रमसह्यतेजो,
धनुश्च शार्ङ्गं स्तनयित्नु घोषम् ॥२२॥
पर्ज्जन्यघोषो जलजः पाञ्चजन्यः
कौमोदकी विष्णुगदातरस्विनी ।
विद्याधरोऽसिः शतचन्द्रयुक्त-
स्तूणोत्तमा वक्षय सायकौ च ॥२३॥

बुद्धौ अजं ब्रह्माणं देवादीन् प्राणेषु अनुक्तेष्विन्द्रियेषु गणाः प्रमथाः । किं बहुना गात्रे देहे स्थिरजङ्गमानि ॥८।२०।२८॥ (२१)

कश्मलं मोहम् । एवं ध्यानार्थं मूर्त्तिमुक्त्वा आयुधान्याह सुदर्शनमिति । "सुदर्शनं मनस्तत्त्व"मिति (१) सहस्रनामभाष्ये । धनुरिन्द्रियाहङ्काररूपं चकाराच्छित्तत्वरूपं पद्मञ्च । तच्च "त्रैलोक्याख्य" मिति विष्णुधर्मोत्तरे । स्तनयित्नुर्मेघः ॥ ( ८।२०।३० ) । (२२)

पर्ज्जन्योगर्ज्जन्मेघः । जलजः शङ्खः । स तु भूताद्यहङ्कारः । कौमोदकीतु बुद्धिः । तरस्विनीवेगाढ्या बलिष्ठा च । असिर्नन्दकः । विद्याधरः सर्वविद्यामयत्वात् । शतचन्द्रं फलकं शतचन्द्राः चन्द्राकाराणि

(१) विष्णुसहस्रनामभाष्ये एकसप्ततितमश्लोकोद्धृतवचनम् ।

सुनन्दमुख्या उपतस्थुरीशम्,
स्वपार्षदमुख्याः सहलोकपालाः ॥२४॥
स्फुरत् किरीटाङ्गदमीनकुण्डलः
श्रीवत्सरत्नोत्तममेखलाम्बरैः ।
मधुव्रतस्रग्वनमालयावृतो,
रराजराजन् भगवानुरुक्रमः ॥२५॥

विम्वानि यस्मिन् तत्तथा। एतच्च तमोमयं। तूणोत्तमौ तु कर्म्ममयौ। सायकाः शराः। तेत्विन्द्रियरूपाः। ततश्चक्र शार्ङ्गौ गदापद्मौ खड्ग-फलके धनुस्तूणौ चेत्यूर्द्ध्वदक्षिणादिक्रमेण हयाद्य योर्बाह्वोश्चिन्त्यम् (१)। यथेच्छं वा। एवमष्टौभुजाः॥ ८।२०।३१। (२३)

अथ परिवारदेवतान्याह, सुनन्देति। मुख्यशब्दात् सुनन्द-जयविजय-प्रवलो-द्दल-कुमुद-कुमुदाख्य-विष्वक्सेन-श्रुतदेव-जयन्त-सात्वत-पुष्पदन्त-प्रचण्ड-बल-महाबलार्हणानां सप्तदशानां ग्रहणम्। एते च भगवत्स्वरूपा एव। विना श्रीगरुड़कौस्तुभान् ते उपतस्थुः-निकटीभूय सेवाञ्चक्रुः। सह लोकपाला इति समासेन लोकपालाना-मप्राधान्यं दर्शयति। तेन ते बहिःपरिधौ पूज्याः। पार्षदास्त्वन्तः-परिधाविति भावः ॥८।२०।३२। (२४)

एवं मूर्त्तिवैपुल्येन विचित्रं ध्यातृचित्तमैकाग्रयति, स्फुरदिति। किरीटादीनां समानां द्वन्द्वः। किरीटं मुकुटम् (२)। तच्च पारमेष्ठ्यम् पदम्। मीनो मकरः। तदाकार रेखाङ्किते कुण्डले च सांख्य-योगौ (३)। श्रीवत्सो भृगुपदन्यासः। रत्नोत्तमः कौस्तुभः। स तु आत्म-ज्योतिः। तत्प्रभा तु श्रीवत्सः। अम्बरं वस्त्रं तच्च च्छन्दो-

(१) हयशीर्षपञ्चरात्रे वामदक्षिणयोर्गदादीनि अस्त्राणि सन्ति। (२) तद्विविधं करण्ड मुकुटं किरीटमुकुटमिति शिल्पशास्त्रे प्रसिद्धम्। (३) सम्यग्विवेकेनात्मकथनं सांख्यं सिद्धर्षि-कपिलप्रोक्तम्। चित्तवृत्तिनिरोधो योगः अनन्तावतार-पतञ्जलिप्रोक्तः।

क्षितिं पदैकेन बलेर्विचक्रमे,
नभःशरीरेण दिशश्च बाहुभिः ।
पदं द्वितीयं क्रमतस्त्रिविष्टपम्,
न वै तृतीयाय तदीयमण्वपि ॥२६॥
उरुक्रमस्याङ्घ्रिरुपर्य्युपर्य्यथो-
महर्ज्जनाभ्यां तपसः परङ्गतः ।
सत्यं समीक्ष्याब्जभवो नखेन्दुभि-
र्हतस्वधामद्युमिरावृतोऽभ्यगात् ॥२७॥

मयम् । मधुव्रतैर्युक्ता स्रक् वैजयन्ती यस्य स तथा । शाकपार्थिवादित्वादुत्तरपदलोपः (१) । स्रक् च भूततन्मात्ररूपा वनमालात्वापादलम्बिनी । सा योगमाया कीर्त्तिमयी वा । मधुव्रताः सनकादयः । एतच्च सर्वं द्वादशे भगवान् भजनीयसौन्दर्य्यादिगुणवान् ॥ ८।२०।३०। (२५)

एवं विश्वात्मके भगवद्रूपे मनः प्रणिधाय तद्व्यापारे जगदनुग्रहलक्षणे प्रणिदध्यादित्याह, क्षितिमिति । क्षितिं भूलोकं पदा पादेन । बलेः सम्बन्धिनं नभः भूर्लोकं क्रमतः क्रमेण द्वितीयं पदं त्रिविष्टपं स्वर्गलोकं विचक्रमे । अत्र उरुक्रमस्येत्युत्तरवाक्यादेव तत्प्रतिपद्यर्थं आकृष्यते । तृतीयाय पदाय । तदीयं बलिसत्ताकम् ॥ ८। २०।३४ । (२६)

उरुक्रमस्येति । अथो स्वर्लोकप्राप्त्यनन्तरं अङ्घ्रिरुपर्य्युपरि गच्छन् महर्ज्जनाभ्यां तपसश्च परं सत्यलोकं गत इत्यर्थः । सत्यमिति । अब्जभवो ब्रह्मा । सः सत्यलोकस्वामी । इत्यन्तं सप्तलोक-

(१) पाणिनिः २।१।६० सूः ।

मरीचि मिश्रा ऋषयो बृहद्व्रताः,
सनन्दनाद्या नरदेव योगिनः।
वेदोपवेदा नियमा यमान्विताः,
तर्केतिहासाङ्गपुराणसंहिताः ॥२८॥
येचापरे योगसमीरदीपित-
ज्ञानाग्निनारन्धित कर्म्मकल्मषाः।
ववन्दिरे यत् स्मरणानुभावतः,
स्वायम्भुवं धामगता अकर्म्मकम् ॥२९॥

क्रमितारं त्रिविक्रमाङ्घ्रिम्। त्यक्तदीर्घकार्थे हतस्वधामद्युभिः तिरस्कृत स्वर्लोकदीप्तिभिः नखेन्दुभिः समीक्ष्य हरिचरणोऽयमित्यवधार्य्यात एवाहृतः ॥८।२०।३४। (२७)

मरीचिर्मिश्रो मिलितो येषु ते तथा। तत्सहिता इत्यर्थः। ऋषयः सत्यवाक्याः। बृहद्व्रता ब्रह्मचारिणः। हे नरदेव योगिनो निरुद्धचित्तवृत्तयः। वेदा ऋगादयः (१) उपवेदाः आयुर्वेद-गान्धर्व-धनुर्वेदाः (२)। नियमाः शौचादयः पञ्च (३)। यमा-अहिंसादयश्चत्वारः। (४) तेचाङ्गप्रकरणे वच्यन्ते। तर्काः षट्। इतिहासाः पुरावृत्तानि। अङ्गानि व्याकरणादीनि षट्। पुराणानि सर्गादिलक्षणानि। संहितास्त्रिवर्गशास्त्राणि। वेदाद्यधिष्ठातारो देवतास्तोगता इत्यर्थः ॥८।२१।१। (२८)

योगसमीरेण समाधिवायुना सन्दीपितः सम्भुक्षितो ज्ञानाग्निः तेन रन्धिते पक्वे कर्म्मकल्मषे पुण्यपापे यैस्ते तथा। रन्धितेऽपि

(१) प्रस्थानभेदे, चरणव्यूहभाष्ये च। (२) वसिष्ठविश्वामित्रादिप्रोक्ताः। (३) "शौचसन्तोषतपः स्वाध्यायेश्वरप्रणिधानानि नियमाः"। पातञ्जलम्।२।३२। सूः।

(४) "अहिंसा सत्यास्तेय ब्रह्मचर्य्या परिग्रहा यमाः" पातञ्जलम्।२।३० सूः।

अथाङ्घ्रये प्रोन्नमिताय विष्णो-
रुपाहरत्पद्मभवोऽर्हणोदकम् ।
समर्च्य भक्त्याऽभ्यगृणाच्छुचिश्रवा,
यन्नाभिपङ्केरुह सम्भवः स्वयम् ॥३०॥
धातुः कमण्डलुजलं तदुरुक्रमस्य,
पादावनेजन-पवित्रतया नरेन्द्र ।
स्वर्धुन्यभून्नभसि सा पतति निमार्ष्टि,
लोकत्रयं भगवतो विशदेव कीर्त्तिः ॥३१॥
ब्रह्मादयो लोकनाथाः स्वनाथाय समाहृताः ।
सानुगा बलिमाजह्रुः संक्षिप्तात्मविभूतये ॥३२॥

---

सापेक्षत्वेऽपि समासः आर्षः अलुग् वा । ज्ञानाग्निदग्धपुण्यपापा जीवन्मुक्ता इत्यर्थः । ते सर्वे तं अग्निं ववन्दिरे । यस्य स्मरणमा-हात्म्याद्ब्राह्मपदं प्राप्ताः । तद्धि अकर्म्मकम् । न तत्र सुखानुभवा-दन्यत् क्रियते । "न यत्र शोको नजरा न मृत्यु"(१)रित्याद्युक्तत्वात् ॥ ८।२१।२। (२८)

अथ मरीच्यादिवन्दनानन्तरम् । प्रोन्नमिताय प्रोर्द्धीकृताय । अर्ह-णोदकं अर्घ्यम् । भक्त्या तात्पर्य्येण । अभ्यगृणात् स्तुतवान् । शुचि-श्रवाः अमलकीर्त्तिः । यन्नाभीति पितृत्वादपि अस्योचिता अर्च्चा इत्यर्थः ॥ ८।२१।३। (३०)

धातुर्ब्रह्मणः कमण्डलुजलं स्वर्धूनी गङ्गाऽभूत् । सा च विष्णु-पादप्रक्षालनजातपवित्रतया त्रीन् लोकान् निमार्ष्टि विशोधयति । कीर्त्तिरिति शुभ्रत्वपावनत्वादौ दृष्टान्तः ॥ ८।२१।४। (३०)

---

(१) श्वेताश्वतरोपनिषत् २।१२ श्लोः ।

तोयैस्समर्हणैः स्रग्भिर्दिव्यगन्धानुलेपनैः ।
धूपैर्दीपैः सुरभिभिर्लाजाक्षतफलोत्करैः ॥३३॥
स्तवनैर्जयशब्दैश्च तद्वीर्य्यैर्महिमाङ्कितैः ।
नृत्यवादित्र गीतैश्च शङ्खदुन्दुभिनिःस्वनैः ॥३४॥
जाम्बवानृक्षाधिपतिर्भेरीशब्दैर्मनोजवः ।
विजयं दिक्षु सर्वासु महोत्सवमघोषयत् ॥३५॥

एवं ध्यात्वा षोड़शोपचारा पूजां भावयेदित्याह, ब्रह्मादय इति । तोयादिभिर्बलिं पूजामाजह्रुश्चक्रुः । संक्षिप्ता आत्मनः स्वस्य सर्वा-द्ब्रह्मादीनां विभूतिरैश्वर्य्यं येन स तथा । यद्वा संक्षिप्ता आत्मनो विभूतिर्वैभवं रूपवैपुल्यं येन तस्मै संक्षिप्तरूपायेत्यर्थः । अर्हणै-रुपायनैः । उत्कराः समूहाः ८।२१।५ (३२—३३)

अथ प्रदक्षिणमाह, जाम्बवानिति । विजयं जितं विष्णुनेत्यघोष-यत् । महानुत्सवो दिक्षु यस्माद्विजयात् । जाम्बवान् हि त्रिवि-क्रमं प्रदक्षिणीकृतवान् । “सुषेणेन मया चैव तदा विष्णुः सनातनः । प्रदक्षिणीकृतः पूर्वं क्रममाणस्त्रिविष्टपमिति” हि कैष्किन्ध्ये (१) तद्वाक्यम् । शुकः राजानम् ८।२१।८ । (३४)

एवं त्रैगुण्यधारणां प्रथमभूमिकामुक्त्वा तत्रस्थिरचेतसो द्वैगुण्य-धारणां द्वितीय भूमिकामाह, ब्रह्मेत्यादि । विष्णुग्रहणन्तु श्लोका-नुरोधात् । श्लोकेऽत्र यद्यपि त्रयाणां प्रतीतिस्तथापि द्वयोरेवात्राभि-निवेष्टव्यम् । इह हि द्वैगुण्य धारणाया विवक्षितत्वाद्विष्णुरूपस्य वक्ष्यमाणत्वाच्च । नचद्वयोर्युगपद्ध्यानानुपपत्तिः । हरिहरार्द्धनारी-श्वरादिवदुपपत्तेः । वृषहंससुपर्णस्थान्रुद्रादीनस्तावीदित्यन्वयः । तत्र वृषभारूढ़ः खट्टाङ्गश्मशानकाष्ठ-टाङ्ग-डमरु-परशु-कपालालङ्कृतचतु-

(१) रामायणे कैष्किन्धे ५।१५ श्लोः ।

ब्रह्मविष्णुरुद्ररूपाणि ।
वृषहंससुपर्णस्थान् स्वैःस्वैश्चिह्नैश्चचिह्नितान् ।
कृपावलोकेन हसद्वदनेनोपलम्भितान् ॥३६॥
तच्छोचिषा प्रतिहते निमील्य मुनिरक्षिणी ।
चेतस्तत्प्रवणं युञ्जनस्तावीत् संहताञ्जलिः ॥
(श्लक्ष्णया सूक्तया वाचा सर्व्वलोकगरीयसः) ॥३७॥(१)
विश्वोद्भव-स्थिति-लयेषु विभज्यमानै-
र्मायागुणैरनुयुगं विगृहीतदेहाः ।

---

भुजा चर्म्मवसना भस्माङ्गरागा फणिकपालविभूषणा (२) रुद्रमूर्त्तिश्चिन्त्या । ब्रह्ममूर्त्तिस्तु हंसारूढ़ा चतुर्म्मुखी चतुर्भुजा तप्तकाञ्चनवर्णा शुक्लवस्त्रा लम्बकूर्च्चा तुन्दिला सौम्या पिङ्गाक्षी सोत्तरीयोपवीता योगपट्टासना जटामुकुटालङ्कृताऽक्षसूत्र पुस्तक कमण्डलुस्रुवान् दधानेति। कृपयावलोकः तेन हसद्वदनेन च उपलम्भितान् प्रसन्नत्वेन ज्ञापितान् ॥ ४।१।२४। (३६)

तेषां शोचिषाप्रभया। प्रतिहते प्रतिघातं नीते। मुनिरत्रिः। अनुयुगं कल्पे कल्पे। विशब्दो वैसादृश्ये। ४।१।२५ (३७)

ते प्रसिद्धाः तेभ्यः सकाशादेक एवोपहूतः। स च क इति युष्माभिरेव कथनीयइत्याह, प्रधानं प्रकृष्टाधारणा। अचित्तं चित्तं कृतश्चित्तीकृतः। चित्ते नैक्यं नीत इत्यर्थः। प्रजननाय पुत्रोत्पत्त्यै। एकस्मिन् ध्यातेषु त्रयः कथमत्रागताः इति ब्रूत। दूरा अगोचराः। प्रसीदत प्रसादं कुरुत। इह त्रयाणामागमने।

---

(१) भागवतीय श्लोकाङ्कम् ४।१।२५।

(२) अर्द्धनारीश्वर-महाकाल-कालसंहारादीनां ध्यानेषु एतादृशरूपं वर्णितमस्ति।

ते ब्रह्मविष्णुगिरिशाः प्रणतोऽस्म्यहं वः,
तेभ्यः क एव भगवन् मयि होपहूतः ॥३८॥
एको मयेह भगवान् विबुधप्रधान-
श्चित्तीकृत प्रजननाय कथं नु यूयम्।
अत्रागतास्तनुभृतां मनसोऽपि दूरा-
द्ब्रूत प्रसीदतमहानिह विस्मयो मे ॥३९॥
देवा ऊचुः।
यथाकृतस्ते सङ्कल्पो भाव्यन्तेनैव नान्यथा।
सत्सङ्कल्पस्य ते ब्रह्मन् यद्वै ध्यायति ते वयम् ॥४०॥

इति श्रीवोपदेवकृतेमुक्ताफले विष्णोर्लक्षण-भेदाश्च।

इति प्रथमोऽध्यायः॥

एतेनात्रि तुल्याऽत्राकारीति ज्ञेयम्। अत्रि हि रजस्तमः प्रकृतिः प्रजाकामत्वात्। यथोक्तं "रजस्तमः प्रकृतयः समशीलान् यजन्ति-हि। पितृभूतप्रजेशादीन् श्रियैश्वर्य-प्रजेप्सवः" इति (१)॥ ४।१। २६-२७। (३८—३९)

एवं मूर्त्तिद्वयं ध्यायमानोऽप्यभेदं भावयेदित्याह, यथेति। ते तया। एवशब्दोभिन्नक्रमः। अन्यथा न भाव्यमेवेति। यतस्त्वं सत्य-सङ्कल्पः अतस्तवसङ्कल्पभङ्गोमाभूदिति त्रयोवयमागता इत्यर्थः। एकस्यैव त्रिष्वधिष्ठातृत्वात्। मैत्रेयोविदुरम्॥ ४।१।२९ (४०)।

इति हेमाद्रिविरचितायां कैवल्यदीपिकायां विष्णोर्लक्षणभेदाश्च।

प्रथमोऽध्यायः॥

(१) भागवतं १।२।२७ श्लोः।

## द्वितीयोऽध्यायः ।

—*—

### विष्णुरूपम् ।

तत्राद्भुतम्बं भवनं द्युमत्तमम्,
भ्राजन्मणिस्तम्भसहस्रशोभितम् ।
तस्मिन्महाभोममनन्तमद्भुतं,
सहस्रमूर्द्धन्यफणामणिद्युभिः ॥१॥
विभ्राजमानं द्विगुणोत्तणोल्वणम्,
सिताचलाभं शितिकण्ठजिह्वम् ।
ददर्श तद्भोगसुखासनं विभुम्,
महानुभावं पुरुषोत्तमोत्तमम् ॥२॥

---

एवं धारणाद्वयाभ्यामवलज्जितरजस्तमस्कस्य मुमुक्षोः सत्वजयार्थं शुद्धसत्वधारणां तृतीयभूमिकामाह । विष्णुरूपमिति । तत्र गभोंदके भवनादिकमच्युतो ददर्शेत्युत्तरेणान्वयः । द्युमत्तमं शोभाढ्यम् । भ्राजन्तो मणयो येषु स्तम्भसहस्रेषु तैः शोभितं, तस्मिन् भवनेऽनन्तं शेषं प्रधानात्मकं ददर्श । सहस्रं मूर्द्धन्याः श्रेष्ठा ये फणार्पितमणयः तेषां द्युभिर्द्विगुणं सहस्रापेक्षम् । सिताचलाभं श्वेतपर्वतसदृशम्, शितयो नीलाः कण्ठा जिह्वाश्च यस्य स तथा । तस्य शेषस्य भोगः शरीरम् । विभुं प्रकृतेरधिष्ठातारं पुरुषम् । अतएव विशेषणद्वयम् । अनुभावः, प्रभावः । पुरुषोत्तमेषु ब्रह्मादिषु उत्तमम् ।

सान्द्राम्बुदाभं सुपिशङ्गवाससम्,
प्रसन्नवक्त्रं रुचिरायतेक्षणम्।
महामणिव्रातकिरीटकुण्डल-
त्विषा परिष्वक्तसहस्रकुन्तलम् ॥३॥
प्रलम्बचार्वष्टभुजं सकौस्तुभम्,
श्रीवत्सलक्ष्मं वनमालयावृतम्।
सुनन्दनन्दप्रमुखैश्च पार्षदै-
श्चक्रादिभिर्मूर्त्तिधरैर्निजायुधैः ॥४॥
पुष्ट्याश्रिया कीर्त्त्यजयाखिलर्द्धिभि-
र्निषेव्यमानं परमेष्ठिनाम्पतिम्।

---

मुक्तेषु वा नित्यमुक्तत्वात्। तथाच सूत्रद्वयम्। "तत्र निरतिशयं सर्व्वज्ञवीजम्"। "स एष पूर्वेषामपि गुरुः कालेनानवच्छेदा"दिति (१)। अस्य च लीलया शरीरग्रहणम्।

सुपिशङ्गं पीतोज्ज्वलं आयतं दीर्घम्। महामणीनां व्रातः स्तोमो यत्र किरीटे कुण्डलयोश्च तेषां प्रभया परिष्वक्ताःव्याप्ताः सहस्रं बहवः कुन्तलाः केशा यस्य स तथा तम्॥ १०।८९।५४—५५। (१—३)

आयुधादेर्विशेषः प्रागवत् (४)।

कीर्त्तिश्चाजा माया इन्द्वैक्येऽपि न नपुंसकत्वम्। "ऊकालोऽज्झ्रस्वदीर्घप्लुत" (२) इतिवत्। अखिलर्द्धिभिरणिमादि सर्व्व-

---

(१) पातञ्जलं १।२५। सूः

(२) पाणिनिः १।२।२७ सूः।

ववन्द आत्मानमनन्तमच्युतो-
जिष्णुश्च तद्दर्शनजातसाध्वसः ॥५॥

नेदृगेवेच्छारूपत्वात् ।

त्वम्भावयोगपरिभावितहृत्सरोज-
आस्से श्रुतेक्षितपथोननुनाथ पुंसाम्
यद्यद्धिया त उरुगाय विभावयन्ति,
तत्तद्वपुः प्रणयसे तदनुग्रहाय ॥६॥

---

सिद्धिभिः । परमेष्ठिनां परमैश्वर्य्यवतां पतिं स्वामिनम् । अत्राधिकारिणमाह, ववन्द इति । आत्मानं तस्यैव कृत्स्नत्वेन वैलक्षण्याभावात् ; प्रदीपादिव प्रवृत्तस्य दीपस्य । जिष्णुरर्ज्जुनः स तु तद्दर्शनेन जातभयः । एतेन शुद्धसत्त्वोऽत्राधिकारीत्युक्तम् । शुकः ॥ १०।८९।५६। (५)

नन्वीदृशमेव चेद्विष्णुरूपं तत्कथमन्यथा तत्र तत्रोपवर्ण्यते इति तत्राह नेदृगेवेति । अत्र हेतुमाह । इच्छैव रूपं यस्य स तथा । तस्य भावः तस्मात् । भक्तेच्छैव चतुर्भुजाद्याकारेण परिणमतीत्यर्थः । अत्रैव मूलं योजयति, त्वम्भावेति । हे उरुगाय विष्णो ! त्वं भावयोगेण परिभाविते विशोधिते हृत्सरोजे आस्से अभिव्यक्तः सन्नवतिष्ठसे । तत्र हेतुः श्रुतेन शास्त्रेणेक्षितो निर्ज्ञातः पन्थाः स्वरूपस्थितिर्यस्य स तथा । वेदोऽत्र प्रमाणमित्यर्थः । अतस्ते भक्ताः यद् यद्वपुः स्वधिया विभावयन्ति चिन्तयन्ति, तत्तत्प्रणयसे प्रकटयसि । व्यापकत्वेन हृदयस्थोऽपि भक्तैर्येन केनाऽप्याकारेण विषयीकृतस्तदनुग्रहाय प्रकटोऽसीति भावः । ब्रह्माविष्णुम् ३।९।११ (६)

तान्येव तेऽभिरूपाणि रूपाणि भगवंस्तव ।
यानि यानि च रोचन्ते स्वजनानामरूपिणः ॥७॥
शुद्धसत्त्वं विष्णुरूपमेवोपास्यतमम् ।
सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तै-
र्युक्तः परःपुरुष एक इहास्य धत्ते ।
स्थित्यादये हरिविरिञ्चिहरेति संज्ञाः,
श्रेयांसि तत्र खलु सत्त्वतनोर्नृणां स्युः ॥८॥

किञ्च तान्येवेति । ते त्वयैवहेतुना । अभिरूपाणि सुन्दराणि न तु भूषणाद्युपाधिना स्वभावसुभगानीत्यर्थः । येभ्यो भक्ताः स्पृहयन्ति तान्येव ते रूपाणि न तु स्वतःसिद्धानीत्येव शब्दार्थः । अत उक्तं इच्छारूपत्वादिति । अरूपिणः वस्तुतः अरूपोऽपि भक्तेच्छया रूपवानित्यर्थः । कर्द्दमः कपिलम् ॥ ३।२४।३१ (७)

एवं भगवतः पञ्चप्रभेदान् लक्षणतो रूपतश्च विविच्य पञ्चानामपि साम्ये प्राप्ते उत्तराधरभावं विवेक्तुमाह, शुद्धसत्वेति । तदेवाह शुद्धं रजस्तमोरहितं यस्मिन् विष्णुरूपे तत्तथा । तदेवोपास्यतमम् । इदमेषामतिशयेनोपास्यम् । तमवर्थो ह्यतिशयः । स चान्यसव्यपेक्ष इत्यर्थात् । ब्रह्मरुद्ररूपमुपास्यतरमिति । अयमर्थः—स्थूलसूक्ष्मक्रमेण बुद्धयोऽर्थमवगाहन्त इति प्रथमं त्रिगुणात्मके भगवद्रूपे मनः प्रणिधाय तत्र स्थिरं सद् द्विगुणात्मके, ततः परं सत्वैकगुणे । ततश्च निर्गुणे सूक्ष्मे ब्रह्मणि प्रवेश्य नित्यनिरतिशयानन्दलाभेन ध्याता कृतकृत्यतामेतीति । ते चामी साकारध्यायिनो मृदुमध्याधिमात्रोपायत्वेन त्रयः । प्रत्येकं मृदुमध्याधिभेदत्वेन नवस्युरिति योगशास्त्रे (१) । तत्रा-

(१) योगदर्शनं १।२१—२२।

सत्त्वं विशुद्धं श्रयते भवान् स्थितौ,
शरीरिणां श्रेय उपायनं वपुः ।
वेदक्रिया योगतपः समाधिभि-
स्तवार्हणं येन जनः समीहते ॥८॥

---

द्वयोरवस्थाभेदाद् भेदषट्कः स्वयमुन्नेयः। अन्त्यस्य तु भेदत्रयं वक्ष्यति। एकत्वव्यवस्थाभेदाद् नवविध इत्यर्थः ॥

उक्तमर्थं द्रढयन्नाह सत्त्वं रज इति। अस्यप्रपञ्चस्य स्थित्यादये स्थितिसृष्टिसंहारार्थं सत्त्वादियुक्तः संज्ञात्रयं धत्ते। तत्र सत्त्वतनो-र्विष्णोः श्रेयांसि शुभफलानि स्युः। खलु शब्दो निश्चये सचातिशयं तमवर्थं गमयतीत्युपास्यतमत्वम्। यद्यप्यंशतः सत्त्वसद्भावादन्येषामपि सत्वतनुत्वम्। तथा "ऽप्यब्भक्षो वायुभक्ष" (२) इतिवत् सत्वमेव तनुर्यस्येति शुद्धसत्वत्वं रजस्तमसोः सदपि सत्वं न फलप्रदम्। किन्तु शुद्धमिवेति भावः। सुतः शौनकम् ॥ १।२।२३ (८)

तदेवाह, सत्वमिति। सत्वं वपुरिति सामानाधिकरण्यं स्थितौ निमित्ते श्रेयसि कैवल्येऽ उपायनं उपायभूतम। तदाह, वेदेति। येन सत्त्ववपुषाश्रितेन। जनस्तवार्हणं पूजां समीहते सम्यक्करोति। शुद्धस्याविषयत्वात् सत्वोपहितं भजतीति भावः। क्रियायोग इत्ये-कम्। ततश्च वेदादिभिश्चतुर्भिः क्रमादाश्रमिणः पूजयन्तीति चतुर्णा-मुक्तिः। यद्वा वेदेन वैदिकाः (१)। क्रियया पाञ्चरात्राः। योगेन प्रकृतिपुरुषविवेकोपायेन सांख्याः। तपसा तपस्विनः। शैवाः पाशुपताश्च। समाधिना पातञ्जलाः। सत्वोपाधेरेव तत्तच्छब्दैस्तत्र-तत्राभिधानमिति प्रागुक्तम्। पाञ्चैवमार्गाः। अतो मार्गपञ्चक-विषयत्वेन पञ्चानामुक्तिः १०।२।३४। (८)

---

(२) महाभाष्ये १।१।१। (१) मुक्तिवाद सन्दर्भ।

सत्त्वं नचेद्धातरिदं निजं भवे-
द्विज्ञानमज्ञानभिदापमार्ज्जनम्।
गुणप्रकाशैरनुमीयते भवान्,
प्रकाशते यस्य च येन वा गुणः ॥१०॥
न नामरूपे गुणकर्म्मजन्मभि-
र्निरूपितव्ये तव तस्य साक्षिणः।

---

सत्त्वं वपुरित्युक्तं तदसहमानं प्रति विपक्षे बाधकमाह, सत्त्वं न चेदिति। हे धातः इदं प्रागुक्तं विशुद्धं सत्त्वं निजं वपुष्ट्वेन स्वरूपं न स्यात्। चेत्तर्हि-विज्ञानं विशिष्टं ज्ञानं मार्ज्जनं लोपं आप प्राप्नुयात्। लोकोक्त्या लिट् प्रयोगः। निर्मूलत्वात्तस्यादित्यर्थः। किन्तद्वैशिष्ट्यम्? तत्राह, अज्ञानभित् सर्ववस्तुतत्त्वावेदकं न तु भ्रम-रूपमित्यर्थः। ज्ञानं हि सत्वादुत्पद्यते तच्चेत्सत्त्वं नास्ति तदा ज्ञान-मपि नस्यात्। दृश्यते च ज्ञानं,अतस्त्वं सत्त्ववपुरित्यनुमीय स इत्याह, गुणेति। गुणप्रकाशैः सत्वजन्यैर्विषयप्राकट्यैः। ननु सत्त्वस्य जड़-त्वात् कुतः प्रकाशकत्वं तत्राह प्रकाशत इति। गुणश्च यस्य सम्बन्धेन प्रकाशते प्रकाशयति अन्तर्भावितनिजर्थत्वात्। येन वा कर्त्तृभूतेनेति परमतमुक्तम्। वाशब्दो हि पक्षान्तरार्थः सर्वथा चिदुज्ज्वलितं प्रकाशकमित्यर्थः। एवमपिसत्त्वमेव प्रकाशकं न तु रजस्तमसी तयो-रस्वच्छत्वेन चिति संक्रान्त्यनुपपत्तेः। यथा रवितेजो दर्पणादिष्वेव प्रादुर्भूय मुखादि प्रकाशयति न घटादिषु॥ १०।२।२५ (१०)

अस्तु तर्हि सत्त्वयोगो नित्य एव नत्वैच्छिक इत्यत आह, न नामेति। नामरूढं यौगिकञ्च, रूपं श्यामादि। गुणःसौन्दर्य्यादिः। कर्म्म-चरित्रं निग्रहानुग्रहरूपम्। जन्म शरीरग्रहणम्। सहार्थे तृतीया।

मनो वचोभ्यामनुमेयवर्त्म नो-
देव क्रियायाम्प्रतियन्त्यथापि हि ॥११॥
शृण्वन् गृणन् संस्मरयंश्च चिन्तयन्,
नामानि रूपाणि च मङ्गलानि ते।
क्रियासु युष्मच्चरणारविन्दयो-
राविष्टचित्तो न भवाय कल्पते ॥१२॥

---

न निरूपितव्ये निरूपयितुमशक्ये। आर्षो णिलोपः। नामादिपञ्चकं तव वक्तुं न शक्यते। कुतः साक्षिणः त्वं हि तेषां साक्षी द्रष्टा द्रष्टुश्च दृश्यत्वानुपपत्तिः। साक्षित्वमेव कुत इति चेत्तत्राह तस्येति। तस्य समाधौ चिन्मात्रतयाऽनुभूयमानस्यानुभूतवाचित्वाच्चास्य तच्छब्दस्य यच्छब्दानपेक्षा। यथा,—

"उत्कम्पिनी भयपरिस्खलितांशुकान्ता।
ते लोचने प्रतिदिशं विदूरे क्षिपन्ति" ॥

इत्यादावनुभूतिमपह्नुवानं प्रत्याह, मन इति। यतश्चाचेतने मनो वचसी प्रसरतः स कश्चिदस्तीत्यनुमानम्। हे देव! अथापि एवमपि क्रियायां षोडशोपचारपूजायाम्। प्रतियन्ति जानन्ति। वस्तुतत्त्वं सत्यपि त्वयि वागा (चा)दिप्रवृत्त्यर्थं भक्ताः कल्पयन्तीत्यर्थः॥ १०।२।३७ (११)

ननु नामादेरवास्तवत्वेऽकिञ्चित्करत्वं स्यात्तत्राह शृण्वन्निति। संस्मरयन्नन्यैः रूपाणि चेति चकाराद्गुणकर्मजन्मानि च। आविष्टत्वं अवस्थान्तराविष्कारः, भवः संसारः। अवास्तवस्यापि सत्यार्थहेतुत्वं रज्जुसर्पादेरिव भयादिहेतुत्वमित्यर्थः। तस्मात्सिद्धमस्योपास्यतमत्वम्। ब्रह्माद्याः श्रीकृष्णं प्रति॥ १०।२।३८।भाः (१२)

विष्णुरूपं (अवयवशोरूपं) क्रमेण पादादिहसितान्तमुपास्यतमम् ।

तस्मिन् लब्धपदं चित्तं सर्वावयवसंस्थितम् ।
विलक्ष्यैकत्र संयुञ्ज्यादङ्गे भगवतो मुनिः ॥१३॥
सञ्चिन्तयेद्भगवतश्चरणारविन्दम्
वज्राङ्कुशध्वजसरोरुहलाञ्छनाढ्यम् ।
उत्तुङ्गरक्तविलसन्नखचक्रवाल-
ज्योत्स्नाभिराहतमहद्धृदयाऽन्धकारम् ॥१४॥
यच्छौचनिःसृतसरित्प्रवरोदकेन,
तीर्थेन मूर्ध्न्यधिकृतेन शिवःशिवाऽभूत् ।
ध्यातुर्मनःशमलशैलनिसृष्टवज्रम्,
ध्यायेच्चिरं भगवतश्चरणारविन्दम् ॥१५॥

---

अधिमात्रोपायस्त्रिविधेत्युक्तम् (१)। तत्र मृद्वधिमात्रमाह, विष्णुरूपेति। हसितस्यावधित्वं प्रकाशमात्रत्वेन निराकारसन्निकृष्टत्वात्। स्थूलमाह, तस्मिन्निति। तस्मिन् विष्णुरूपे पदं स्थैर्य्यं विलक्ष्य एकैकमङ्गं विवेकेन लक्षीकृत्य सञ्चिन्तयेदिति। चक्रवालं मण्डलं, महतोध्यातुर्हृदयम् ॥ ३।२८।२०। (१३--१४)

दक्षिणमङ्घ्रिं ध्यात्वा गङ्गायाः प्रभवं वामं ध्यायेत् इत्याह, यच्छौचेति। सरित्प्रवरागङ्गा। तीर्थं तारकम्। अधिकृतेन।

(१) 'मृदुमध्याधिमात्रत्वात्ततोऽपि विशेषः' योगदर्शनं १।२२ सूः।

जानुद्वयं जलजलोचनया जनन्या-
लक्ष्म्याऽखिलस्य सुरवन्दितया विधातुः ।
ऊर्वोर्निधाय करपल्लवरोचिषा यत्,
संवाहितं हृदि विभोरभवस्य कुर्य्यात् ॥१६॥
ऊरू सुपर्णभुजयोरधि शोभमाना-
वोजोनिधी अतसिका कुसुमावभासौ ।
व्यालम्बिपीतवरवाससि वर्त्तमान-
काञ्चीकलापपरिरम्भिनितम्बबिम्बम् ॥१७॥
नाभिह्रदं भुवनकोशगुहोदरस्थं,
यत्रात्मयोनिधिषणाऽखिललोकपद्मम् ।

स्वाभाविके शिवत्वे निमित्तोत्प्रेक्षा शिव इति। तस्याश्चेवादि-मन्तरेणाप्युपलम्भात्तदप्रयोगः। शमलं पापम्। निसृष्टं प्रहितम्। ३।२८।२२। (१५)

जानुद्वयमिति। अखिलस्य विधातुर्ब्रह्मणः जनन्या एवम्भूतया परिसंवाहितमित्यतिशयार्थं विशेषणत्रयं ऊर्वोरित्यादरार्थम् (२)। रोचिषेति स्पर्शनचातुर्य्येण एतत् परमसौकुमार्य्यार्थम् ३।२८।२३। (१६)

ऊरू इति अधि ऊर्द्ध्वभागे ओजो बलं तेजश्च। व्यालम्बि विततत्वात् विन्यासविशेषाच्च यत्पीताम्बरञ्च वासस्तस्मिन् वर्त्तमानस्तदुपरिबद्धो यः काञ्चीकलापस्तस्य परिरम्भः सर्वतः संश्लेषो यस्यास्ति तत् स्त्रीकटीवत् सौन्दर्य्यं वक्तुं नितम्बशब्दः। ३।२८।२४ (१७)

(२) अत्रयोगप्रक्रिया-योगचिन्तामणौ, त्रिपुरासारसमुच्चये, योगतारावल्यादौ चानुसन्धेया।

व्यूढं हरिन्मणिवृषस्तनयोरमुष्य,
ध्यायेद्द्वयं विशदहारमयूखगौरम् ॥१८॥
वक्षोऽधिवासमृषभस्य महाविभूतेः,
पुंसां मनोनयननिर्वृतिमादधानम्।
कण्ठञ्च कौस्तुभमणेरधिभूषणार्थम्
कुर्य्यान्मनस्यखिललोकनमस्कृतस्य ॥१९॥
बाहूंश्च मन्दरगिरेः परिवर्त्तनेन,
निर्णिक्तबाहुवलयानधिलोकपालान्।
सञ्चिन्तयेद्दशशतारमसह्यतेजः,
शङ्खञ्च तत्करसरोरुहराजहंसम् ॥२०॥

---

गुहानीरन्ध्र आश्रयः यत्र हृदे। आत्मयोनेर्ब्रह्मणः धिषण्यं स्थानं पद्ममासीत्। हरिन्मणिवृषौ मरकतश्रेष्ठाविव यौ स्तनौ तयोर्द्वयं व्यूढं विशालम्॥ ३।२८।२५ (१८)

वक्ष इति। ऋषभस्य विष्णोर्महाविभूतेः लक्ष्म्याः अधिवासं स्थानं पुंसाम्। किं पुनः स्त्रीणाम्। कौस्तुभस्याधिक्येन भूषणमर्थः प्रयोजनं यस्य स तथा। कण्ठेन कौस्तुभः शोभते इत्यतिशयः॥ ३। २७।२। (१९)

बाहूनिति। परिवर्त्तनं सव्यापसव्यभ्रमणम्। निर्णिक्तं शोधितम्। अधिलोकपालान् लोकपालाधिष्ठातॄन्। दशशतारं चक्रं शङ्खस्य सर्व्वतः शौक्ल्येन मुखमूलयोर्लौहित्येन च राजहंसोपमा॥ ३। २८।२७। (२०)

कौमोदकीं भगवतो दयितां स्मरेत,
दिग्धामरातिभटशोणितकर्द्दमेन ।
मालां मधुव्रतवरूथ गिरोपघुष्टां,
चैत्यस्य तत्त्वममलं मणिमस्य कण्ठे ॥२१॥

भृत्यानुकम्पितधियेह गृहीतमूर्त्तेः,
सञ्चिन्तयेद्भगवतो वदनारविन्दम् ।
यद्विस्फुरन्मकरकुण्डलवल्गितेन,
विद्योतितामलकपोलमुदारनासम् ॥२२॥

यच्छ्रीनिकेतमलिभिः परिषेव्यमाणम्,
भूत्यास्वया कुटिलकुन्तलवृन्दजुष्टम् ।
मीनद्वयाश्रितमधिक्षिपदब्जनेत्रम्,
ध्यायेन्मनोमयमतन्द्रित उल्लसद्भ्रू: ॥२३॥

---

कौमोदकीमिति। दिग्धां लिप्तां। भटायोद्धारः। वरूथः समूहः। उपघुष्टां वाचालीकृताम्। चैत्तस्य चेतस्य तत्त्वं कारणम् परं ज्योतिः तद्रूपं मणिं कौस्तुभम् ॥ ३।२८।२८। (२१)

भृत्येति। वल्गितं चलनं यद् वदनाब्जं श्रीनिकेतं पद्मं अधिक्षिपेत्। विशेषणप्रधानो निर्देशः। श्रीनिकेतत्वादिधर्मत्रयं विशिष्टं क्षिपतीत्यर्थः, तत्र स्वभूत्या श्रीनिकेतत्वस्याक्षेपः। कुन्तलैरलियुक्तत्वस्य नेत्रद्वयेन मीनद्वययुक्तत्वस्य। मनोमयं मनसः परिणामम् ३।२८।२८ (२२—२३) ·

तस्यावलोकमधिकं कृपयातिघोर-
तापत्रयोपशमनाय निसृष्टमक्ष्णोः ।
स्निग्धस्मितानुगुणितं विपुलप्रसादम्,
ध्यायेच्चिरं विततभावनया गुहायाम् ॥२४॥
हासं हरेरवनताखिललोकतीव्र-
शोकाश्रुसागरविशोषणमत्युदारम् ।
सम्मोहनाय रचितं निजमाययास्य,
भ्रूमण्डलं मुनिकृते मकरध्वजस्य ॥२५॥
ध्यानायनं प्रहसितं बहुलाधरोष्ठ-
भासारुणायिततनुद्विजकुन्दपङ्क्तिः,
ध्यायेत् स्वदेहकुहरेऽवसितस्य विष्णो-
र्भक्त्यार्द्रयार्पितमना न पृथग् दिदृक्षेत् ॥२६॥

---

तस्येति। अनुगुणितं युक्तम् ॥ विपुलो बहुः गुहायां हृदि ॥ ३। २८।३१ (२४)

हासमिति। निजमायया अस्य जगतः सम्मोहनाय रचितं हासं ध्यायेत्। मुनीनामपि सम्मोहनं माभूदिति तत् संमोहनाय प्रवृत्तस्य कामस्य सन्तर्जनेन सम्मोहनाय रचितं भ्रूमण्डलं ध्यायेत् ॥ ३।२८।३२ (२५)

अव्यक्तं हसितमुक्त्वा प्रव्यक्तं हसितमाह, ध्यानायनमिति। प्रहसितं प्रकाशध्यानातिमात्रत्वाद् निराकारेण स्मर्यते। अतएव ध्याना-यनं व्यवधानोत्पत्त्यादि बहुलया अधरोष्ठस्य भासा अरुणायिता

एवं हरौ भगवति प्रतिलब्धभावो-
भक्त्या द्रवद्धृदय उत्पुलकः प्रमोदात् ।
औत्कण्ठ्यबाष्पकलया मुहुरर्द्यमान-
स्तच्चापि चित्तवड़िशं शनकैर्वियुङ्क्ते ॥२७॥
मुक्ताश्रयं यर्हि निर्विषयं विरक्तम्,
निर्वाणमृच्छति मनः सहसा यथार्चिः ।

---

लौहित्यं नीता । तनूनां द्विजानां एवं कुन्दकलिकानां पङ्क्तिर्यत्र तत् देहकुहरं हृदयाकाशं (१) । अवमितस्य निर्ज्ञातस्य आर्द्रया भक्त्या आनन्दरसेन पृथक् तद्व्यतिरिक्तं न द्रष्टुमिच्छेत् ३।२८।३३ (२६)

ध्यानमुक्त्वा समाधिमाह, एवमिति । एवं दृश्यविशिष्ट द्रष्टृ-ध्यानेन हरौ द्रष्टरि प्रतिलब्धभावः पुनर्लब्धरतिः । तद्दृश्यं शनकै वियुङ्क्ते त्यजति । यतः तच्चित्तवड़िशं चपलस्य चित्तमत्स्यस्य बन्धनार्थमुपात्तम् । यद्यपि तस्मिन् भक्त्या गृहीते प्रमोदाद् द्रवद्धृदय इत्युत्पुलकश्च भवति । अतस्तदपि त्याज्यम् । क्रियाजन्यं हि तत् सुखम् । क्रियाच द्वितीये क्षणे नश्यति । स च क्षणः औत्कण्ठ्येन दुःखेन दुःसहः इदमत्र तत्त्वं—ध्येयालम्बनस्य प्रत्ययस्य सदृश प्रवाहः प्रत्ययान्तरेणापरामृष्टो ध्यानम् (२) । ध्यानमेव ध्येयाकारनिर्भास-प्रत्ययात्मकं न स्वरूपेण शून्यमिव ध्येयस्वभावावेशाद्यदा भवति तदा समाधिरित्युच्यते (३) इति ॥ ३।२८।३४ (२७)

(१) छान्दोग्य ३।१२।४।८-९ श्रोः ।

(२) "तत्र प्रत्ययैकतानता ध्यानम्" पातञ्जलं ३।२ । सूः ।

(३) "तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिवसमाधिः"—योगदर्शनं, ३।३ सूः ।

**आत्मानमत्र पुरुषोऽव्यवधानमेक-**
**मन्वीक्षते प्रतिनिवृत्तगुणप्रवाहः ॥२८॥**
**सोऽप्येतया चरमया मनसो निवृत्त्या,**
**स्वस्मिन्महिम्न्यवसितः सुखदुःखबाह्ये ।**
**हेतुत्वमप्यसति कर्त्तरि दुःखयोर्यत्,**
**स्वात्मन् विधत्त उपलब्धपरात्मकाष्ठः ॥२९॥**

---

अथास्य योगस्य फलमाह,मुक्तेति । तत्रैव तु वडिशे मनः सहसा निर्वाणमृच्छति नाशं प्राप्नोति । यथेन्धनाभावात् अर्च्चिः कदा यर्हि यदा मुक्ताश्रयं निराश्रयत्वात् । निर्विषयं प्रक्षीणकर्मत्वात् । विरक्तं छिन्नसंशयत्वात् । अत्र अस्यां दशायां पुरुषः आत्मानं अन्वीक्षते । अनुवृत्ताखण्डं पश्यति । अव्यवधानव्यवधायकस्य मनसो भावात् । अतएवैकं जीवपरयोर्भेदाभावात् । यतः प्रतिनिवृत्तो यथादितस्तत्रैव लीनो गुणप्रवाहः कार्य्यकारणभावो यस्य स तथा ३।२८।३५ । (२८)

सोऽपीति । सोऽपि आत्मा स्वस्मिन्महिम्नि नित्यनिरतिशयानन्द-(१)घने पदे अवसितः अवबद्धः संश्लिष्टो भवति । घटाकाशमिव महाकाशे । कया मनसो निवृत्त्या एतया योगाभ्यासलब्धया । अतएव चरमया पुनरावृत्तिशङ्कारहितया । सुखदुःखबाह्ये पुण्यपापफलभोगाभावात् । हेतुत्वमसतिकर्त्तर्य्यवसितं कर्त्ता सात्त्विकोऽहङ्कारः । स चासन् मायामयत्वात् । दुःखयो सुखदुःखयोः । युगपदधिकरण

---

(१) छान्दोग्योपनिषत् ७।१।२४ श्रोः ।

देहन्तु तं न चरमः स्थितमुत्थितं वा,
सिद्धो विपश्यति यतोऽध्यगमत् स्वरूपम् ।
दैवादुपेतमथ दैववशादपेतम्,
वासो यथा परिकृतं मदिरामदान्धः ॥३०॥
देहोऽपि दैववशगः खलु कर्म यावत्,
स्वारम्भकं प्रतिसमीक्षत एव सासुः ।
तं स प्रपञ्चमधिरूढसमाधियोगः,
स्वाप्नं पुनर्न भजते प्रतिबुद्धवस्तुः ॥३१॥

---

वचनतायां इन्द्रस्मरणात् । "द्यावोस्तथेतिचेदि"तिवत् । यत् स हेतुत्वं स्वात्मन् विधत्ते । अहङ्कारकृतं आत्मकृतं मन्यते । तदिदानीं येन कृतं तत्रैवावसितमित्यर्थः । यत उपलब्धपरमात्मकाष्ठः । साक्षात्कृतपरमात्मस्वरूपः ३।२८।३८ ॥ (२९)

ईदृशस्य च देहाभिमानो नास्तीत्याह, देहमिति । तं देहं सिद्धो विपश्यति । आभासमात्रेण पश्यति । किन्तु स्थितमुत्थितं वेति विवेकेन न पश्यतीति वेरर्थः । यतः स्वरूपं अध्यगमत् साक्षात्कृतवान् । परिकृतं प्रावृतम् । तथाच श्रुतिः "यथाहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ताशयीतैवमेवेदं शरीरं शेते" (१) इति ३।२८।३७ (३०)

ननु त्वयाऽभिमानश्चेद्देहस्तदैव पतेदिति नेत्याह, देहोऽपीति । यावत् स्वारम्भकं कर्मास्ति तावत् प्रतिसमीक्षत एव । कुतः दैव-

---

(१) बृहदारण्यकं ४।४।७ श्रोः ।

एकैकशोऽङ्गानि धिया नु भावयेत्,
पादादि यावद्धसितं गदाभृतः।
जितं जितं स्थानमपोह्य धारयेत्,
परं परं शुध्यति धीर्यथा यथा ॥३२॥

वशगो यतः। दैवं प्राक्कर्म्म। खलु शब्दोऽवधारणे। ननु आत्मना त्यक्ताभिमानस्यास्य कुतः प्रवृत्तिनिवृत्ती तत्राह। सासुः सलिङ्ग-शरीरः। ननु ज्ञानोदयेऽपि चेत् कर्म्माणि न निवर्त्तन्ते तर्हि सञ्चितैः कर्म्मभिर्देहान्तराणिस्युस्तत्राह, तमिति। तं देहं स प्रपञ्चं स कारणं पुनर्न भजते। तत्र हेतुः अधीति। स्वाप्नमिव प्रतिबुद्धवस्तुः, अयमर्थः "तस्य तावदेव चिरं यावन्नविमोक्ष्येऽथसम्पत्स्ये" (१) इति श्रुतिः। न विमोक्ष्यते अथ ब्रह्मसम्पत्स्यते प्राप्स्यति। उभयत्र तकारलोपः च्छान्दसः। अस्मादवधिश्रवणात् प्रारब्धफलं कर्म्म भोगादेव नश्यति। अनारब्धफलन्तु ज्ञानादिति एषा च फलाभिस्तृतीय-योगी तीव्राधिमात्रस्य ज्ञेया, अन्यथाऽनेनैव कृतार्थत्वात् उत्तरयोगद्वयोर्वैयर्थ्यं स्यादतएव तत्र फलं नोक्तम्। अत्र तु फलसंकीर्त्तनमस्यैव तृतीये फलभूमिकामधिरूढस्यैतत् फलं भवतीति दर्शयितुम्, कपिलः देवहुतिम्॥ ३।२८।३८ (३१)

अवयवशोरूपं क्रमेण चिन्त्यं इत्युक्तम्। तस्यावधिमाह एकेकेति। अपोह्य त्यक्त्वा पादौ ध्यायन्तोधीर्यदा शुध्यति ध्येयं विनाबतिष्ठते तदागुल्फौ ध्यायेत्। गुल्फौ ध्यायन्तो यदा प्राग्वत्तदा जङ्घे धारयेदित्यादिक्रमेण हसितं त्यक्त्वा निर्विषयैवावतिष्ठते स समाधिः। शुकः॥ २।२।१३ (३२)

(१) छान्दोग्यं ६।१४।२

हृत्पुण्डरीकमन्तःस्थ मूर्द्धनालमधोमुखम् ।
ध्यात्वोर्द्ध्वमुखमुन्निद्रमष्टपत्रं स कर्णिकम् ॥३३॥
कर्णिकायां न्यसेत् सूर्य-सोमाग्नीनुत्तरोत्तरम् ।
वह्निमध्ये स्मरेद्रूपं ममैतद्ध्यानमङ्गलम् ॥३४॥ (१)
इन्द्रियाणीन्द्रियार्थेभ्यो मनसा कृष्यतन्मनः ।
बुद्ध्या सारथिना धीरः प्रणयेन्मयि सर्वतः ॥३५॥

---

अथ सधाराधिनाचमाह हृदिति । अन्तस्थं हृन्मध्यस्थं स्वतोऽधोमुखम् । सदीति तीक्ष्णेन प्राणवाग्रेणोच्चलनाद् ऊर्द्ध्वमुखं ध्यात्वेत्यर्थः । उन्निद्रं उत्फुल्लं अष्टौ भूम्यादितत्त्वानि पत्राणि यस्य स तथा ॥ ११।१४।३६ (३३)

कर्णिकायां प्रणवं न्यसेद् ध्यायेत् सत्त्वादिरूपाणि सूर्य्यादिबिम्बानि उत्तरोत्तरं क्रमेणैतत् उक्तेषु अन्यतमं ध्यानेषु मङ्गलं स्वस्त्ययनम् । ११।१४।३७ (३४)

ध्यानमुक्तं प्रत्याहारमाह, इन्द्रियाणीति । इन्द्रियाणि अश्वान् मनसाप्रग्रहेण धीरो विषयैरजितः । सर्वतः सर्वावयवरूपे मयि ॥ ११।१४।४२ (३५)

धारणामाह तदिति । एकत्रचरणादौ । "देशबन्धश्चित्तस्य धारणा" (२) इति हि पातञ्जलम् । एवं प्रागुक्तदिशा स्मितान्तं ध्यायेत् । सुस्मितमिति हि विशेषणे तात्पर्य्यम् ॥ ११।१४।४३ (३६)

---

(१) मैत्रेयी उपनिषद् १।८ श्लोः ।
" योगशिखा ३।३ श्लोः ।
" " १३७-१३८ श्लोः ।
(२) पातञ्जलदर्शनं ३।१ सूः ।

तत् सर्वव्यापकश्चित्तमाकृष्यैकत्र धारयेत्।
नान्यानि चिन्तयेद्भूयः सुस्मितं भावयेन्मुखम् ॥३६॥
तत्र लब्धपदं चित्तमाकृष्य व्योम्नि धारयेत्।
तच्च त्यक्त्वा मदारोहो न किञ्चिदपि चिन्तयेत् ॥३७॥
एवं समाहितमतिर्मामेवात्मानमात्मनि।
विचष्टे मयि सर्वात्मन् ज्योतिर्ज्योतिषि संयुतम् ॥३८॥
अन्तकाले तु पुरुष आगते गतसाध्वसः।
छिन्द्यादसङ्गशस्त्रेण स्पृहां देहेऽनु ये च तम् ॥३९॥

समाधिमाह तत्रेति। तत्र स्थिते पदं स्थैर्य्यं व्योम्नि मायोपाधावीश्वरे। तच्च व्योमं, मदारोहोनिरुपाधिमत्स्वरूपमारूढ़ः न किञ्चिच्चिन्तयेत्। ध्यातृध्येयविभागमपि त्यजेदित्यर्थः। प्रत्याहारधारणे ध्यानात् प्राक्। पश्चात् समाधिः। यमादिचतुष्कन्तर्थं सिद्धम्। तदेवमष्टाङ्गोयोग इत्युक्तः॥ ११।१४।४४ (३७)

तस्य फलमाह, एवमिति। एवं सप्तभिरङ्गैः समाधिं प्राप्ता मतिर्यस्य स तथा। मां आत्मानं जीवम्। मय्यात्मनि परमात्मनि सर्वात्मन् सर्वात्मके विचष्टे विशेषात् पश्यति। मां मयीति जीवपरयोरभेदे उक्ते ज्योतिरिति दृष्टान्तः। यथा प्रतिबिम्बभूतं ज्योतिरूपाध्युपरमे बिम्बीस्यात् तथेत्यर्थः। अत्रापि फलोक्तिः प्राग्वत्। श्रीकृष्णोद्धवम्। ११।१४।४५ (३८)

तीव्राधिमात्रमाह। अन्तकाल इति। गतसाध्वसः त्यक्तमरण-

गृहात् प्रव्रजितो धीरः पुण्यतीर्थजलाप्लुतः ।
शुचौ विविक्त आसीनो विधिवत् कल्पितासने ॥४०॥
अभ्यसेन्मनसा शुद्धं त्रिविद्ब्रह्माक्षरं परम् ।
मनो यच्छेज्जितश्वासो ब्रह्मबीजमविस्मरन् ॥४१॥
नियच्छेद्विषयेभ्योऽक्षान् मनसाबुद्धिसारथिः ।
मनः कर्म्मभिराक्षिप्तं शुभार्थे धारयेद्धिया ॥४२॥

भयः। असङ्गशस्त्रेण "असङ्गोह्ययं पुरुष" (१) इत्युपदेशदार्ढ्येन। तं देहं अनु ये पुत्रकलत्रादयस्तेषु। २।१।१५ (३८-४०)

प्रव्रजितः सन्न्यस्य निर्गतः। धीरो गृहस्थाश्रमी विधिवत्। "नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम्" (२)। मनसा न तु वाचा। शुद्धं उदात्तादिधर्म्मरहितम्। त्रिवृत् त्रिभिरकारोकार-मकारैर्वर्त्तितं ग्रथितम्। ब्रह्मणः प्रथमं रूपम्। अक्षरं वर्णं परं स्फोटात्मकम्। यच्छेत् स्थिरीकुर्य्यात्। जितश्वासः प्राणायामैः (३) ब्रह्मबीजमोङ्कारं अविस्मरन्। स एव जपगर्भः प्राणायामः। २।१ १६ (४१)

अक्षान् इन्द्रियाश्वान्। मनसाप्रग्रहेण। कर्म्मभिः कर्म्मवासनाभिः। आक्षिप्तं इतस्ततोनीतम्। शुभार्थे धारयेत्। हृदय-पुण्डरीके मूर्द्ध ज्योतिषि नाभिचक्रे नासिकाग्रे (४) अन्यस्मिन् वा पापक्षयकरे वस्तुनि चतुर्भुजादौ बध्नीयात्। २।१।१७। (४२)

---

(१) बृहदारण्यक ४।३।१५ श्लो:।

(२) गीता ६।११ श्लो:।

(३) "प्राणायामैर्दहेद्दोषान्धारणाभिश्च किल्बिषान्"—महाभारतं ३।२८।११।

(४) योगदर्शने—"नाभिचक्रे कायव्यूहज्ञानम्" "मूर्द्धज्योतिषिसिद्धदर्शनम्" कूर्म्मनाड्यां स्थैर्य्यम्" ३।३०-३१-३२-३२। अन्यत् एतदीयभाष्ये ऽनुसन्धेयम्"।

तत्रैकावयवं ध्यायेदव्युच्छिन्नेन चेतसा ।
मनोनिर्विषयं युक्त्वा ततः किञ्चन न स्मरेत् ॥४३॥
पदं तत् परमं विष्णोर्मनो यत्र प्रसीदति ॥४४॥

इति वोपदेवकृते मुक्ताफले विष्णुरूपं नाम तृतीयं प्रकरणम् । द्वितीयोऽध्यायः समाप्तः ॥२॥

---

तत्रापि क्रमादेकैकावयवं ध्यायेत् । अव्युच्छिन्नेन ध्येयान्तररहितेन । युक्त्वा समाधाय तत्र (१) निर्विषयं मनः । २।१।१८ (४३)

पदं विष्णोर्निराकारस्य परमं पदं स्फूर्त्तिस्थानम् । यत्र यस्यान्दशायाम् । प्रसीदति सत्त्वमात्रशेषमवतिष्ठते । अयमर्थः—उक्तभूमिकाभ्यासबलात्, सर्व्ववृत्तिप्रलयस्तमये संस्कार शेषे चेतसि निरुद्धे असम्प्रज्ञातसमाधिना निर्विशेषचैतन्यलाभः । ततश्च स संस्कारं चित्तं निवर्त्तते । तस्मिंश्च निवृत्ते पुरुषः स्वरूपं प्रविष्टः शुद्धः केवलो मुक्त इत्युच्यते । (२) तथाच सूत्रम् 'तदा द्रष्टुः स्वरूपेऽवस्थानम्' अयमेव मुक्तिशब्दार्थः । "मुक्तिर्हित्वान्यथारूपं स्वरूपेण व्यवस्थितिः" (३)इत्यत्रोक्तः । तदेवमाप्नुतो धीर इति यमनियमोपलक्षणम् । आसीन इत्यासनमुक्तम् । अभ्यसेदिति प्राणायामः । नियच्छेदिति प्रत्याहारः । ततो धारयेद् इत्यविषयस्य क्रमाद्विषयीकरणरूपा धारणा । ध्यायेदिति तस्यैव क्रमत्यागो ध्यानम् । युक्त्वेति निर्विषयतारूपसमाधिरित्यष्टाङ्गोयोग उक्तः । शुकः राजानं प्रति । २।१।१६-१८ (४४)

इति हेमाद्रिविरचितायां कैवल्यदीपिकायां विष्णुरूपाणि ।
द्वितीयोऽध्यायः ॥२॥

---

(१) पातञ्जली—"तत्र प्रत्ययैकतानताध्यानम्" "ध्यानं निर्विषयं मनः" इत्यन्यत्र च ।

(२) पातञ्जल १।१।२ सुः भाः ।   (३) भागवत २।१०।६ श्लोः ।

# अथ तृतीयोऽध्यायः।



अथ विष्णोरवताररूपाणि चत्वारिंशत्।
हरियज्ञवामनमन्वन्तरेशानां पुनरुक्तत्वात्।

तत्र वराहः।

यत्रोद्यतः क्षितितलोद्धरणाय बिभ्रन्,
क्रौडीं तनुं सकलयज्ञमयीमनन्तः।
अन्तर्महार्णव उपागत आदिदैत्यम्,
तं दंष्ट्रयाद्रिमिव वज्रधरो ददार ॥१॥

एवमावदियताप्रबन्धेन मुमुक्षोः समाधिसामग्रीं समग्रामुक्त्वे-दानीं अस्यैव व्युत्थानदशायां योगान्तरायपरिहारार्थमिष्टावाप्त्यर्थञ्च भगवज्जन्मकर्मानुसन्धानं विधातुमाह, विष्णोरवताररूपाणीति। तत्रान्तरायाः—"व्याधि-स्त्यान संशय-प्रमादालस्याविरति-भ्रान्तिदर्श-नालब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपाः"। "दुःखदौर्मन-स्याङ्गमेजयत्व श्वासप्रश्वास विक्षेपसहभुवः" (१) तत्र स्त्यानं अक-र्मण्यता। प्रमादः समाधिभूमेरलाभः। अनवस्थितत्वं यल्लब्धायां

(१) पातञ्जलं १।३०-३१ सूः।

जातो रुचेरजनयत् सुयमान् सुयज्ञ:,
आकूति सूनुरमरानथ दक्षिणायाम्।
लोकत्रयस्य महती महरद्यदार्त्तिम्,
स्वायम्भुवेन मनुनाहरिरित्यनुक्त: ॥२॥

कपिल:।

यज्ञे च यर्द्दमगृहे द्विजदेवहूत्याम्,
स्त्रीभि: समं नवभिरात्मगतिं स्वमात्रे।
ऊचे ययात्मनमलं गुणसङ्ग पङ्क-
मस्मिन् विधूय कपिलस्य गतिं प्रपेदे ॥३॥

---

भूमौ चित्तस्याप्रतिष्ठा। जन्मकर्म्मानुसन्धानेन महांल्लाभ:। तदुक्तम्। "जन्मकर्म्म च मे दिव्यं एवं यो वेत्ति तत्त्वत:" (१) इति। कुतस्तत्त्वान्निग्रदेव। चतुर्णामन्येषामप्युपलम्भात्। तत्राह। हरीति। पौनरुक्त्यञ्च मन्वन्तरावतारार्थम्। ते चावताराश्चतुर्द्धा। कल्पमन्वन्तरयुगस्वल्पभेदात्। तत्र कल्पावतारान् शृण्वन् अध्वविघ्नोपशान्तये वराहं भावयेदित्याह। तत्रेति। आदिदैत्यं हिरण्याक्षम् २।७।१। (१)

लोकापवादनिरासार्थं यज्ञमाह, जात इति। रुचि: पिता। आकूतिर्म्माता। दक्षिणापत्नी। सुयमा नामदेवा: पुत्रा:। स्वायम्भुवो मनुर्म्मातामह:। तेन सुयज्ञ इति प्रथममुक्त: पश्चाद् हरिरिति। यतो लोकानामार्त्तिमहरत्॥ २।७।२ (२)

राजसत्वादिदोषहानार्थं कपिलावतारमाह। कपिल इति।

---

(१) गीता ४।९ श्लो:।

अत्रेरपत्यमभिकाङ्क्षत आह तुष्टो—,
दत्तो मयाहमिति यद्भगवान् स दत्तः ।
यत्पादपङ्कजपराग-पवित्रदेहा,
योगर्द्धिमापुरुभयीं यदु हैहयाद्याः ॥४॥

चतुःसनः ।

तप्तं तपो त्रिविध-लोकसिसृक्षयाम,
आदौ सनात् स्वतपसः स चतुःसनोऽभूत् ।
प्राक्कल्प संप्लव विनष्टमिहात्मतत्त्वम्,
सम्यग् जगाद मुनयो यदचक्षतात्मन् ॥५॥

---

कर्दमः पिता। देवहूतिर्माता। नव भगिन्यः। आत्मगतिं ब्रह्मविद्याम्। यया माता पुत्रस्य गतिं मुक्तिं प्रपेदे। आत्मशमलं मलिनीकरणम्। गुणसंगाख्यं पङ्कं विधूयास्मिन्नेव जन्मनि। हे द्विज! नारदः॥ २।७।३ (३)

अलब्धभूमिकत्वनिवृत्त्यर्थं दत्तात्रेयमाह। अत्रेरिति। आत्मैव माया तवपुत्रोदत्तः इत्यत्रिं प्रत्याह। तस्माद्दत्तः। अत्रपत्यत्वादात्रेयः। "इतश्चाऽनिञः" (१) इत्यपत्यार्थे ढक्। ऋद्धिं सिद्धिम्, उभयीं भुक्तिमुक्तिरूपाम्। हैहयः कार्त्तवीर्य्यः। आदिशब्दादलर्कप्रह्लादौ॥ २।७।४ (४)

कामोपशमार्थं चतुःसनमाह। तप्तमिति। यन्मया तपस्तप्तं स चतुःसनोऽभूत्। तप एव चतुर्द्धावतीर्णम्। सनत्कुमारः। सनकः।

(१) पाणिनिः १-४—११२ सू.।

नारदः ।

तृतीयमृषिसर्गं वै देवर्षित्वमुपेत्य सः ।

तन्त्रं सात्वतमाचष्ट नैष्कर्म्म्यं कर्म्मणां यतः ॥६॥

नरनारायणः ।

धर्म्मस्य दक्षदुहितर्य्यजनिष्ट मूर्त्त्याम्,

नारायणो नर इति स्वतपःप्रभावः ।

दृष्ट्वात्मनो भगवतो नियमावलोपम्,

देव्यस्त्वनङ्गपृतना घटितुं नशेकुः ॥७॥

सनन्दनः । सनातन इति । सनशब्दोपलक्षितचतुर्भेदः सनात्—अखण्डितं यत् स तपः तस्मादिमानि नामानि सत्वात्मतत्त्वं जगाद च यद् गदितं मुनयः आत्मन्यपश्यन् । उपदेशादेव साक्षात्कारोऽभूदित्यर्थः ॥ २।७।५ (५)

प्रमादहानार्थं नारदावतारमाह । तृतीयेति । सात्वतं पञ्चरात्रम् (१) । नैष्कर्म्म्यं फलाभावत्वेन कर्म्मत्वाभावः । सूतः शौनकम् ॥ १।३।६ (६)

उग्रधर्म्महानार्थं नारायणावतारमाह । धर्म्मस्येति । धर्म्मः पिता । मूर्त्तिर्माता । दक्षो मातामहः । नरो भ्राता । स्वः अकृत्रिमः तपः प्रभावो यस्य स तथा । नियमावलोपं घटितुं निष्पादयितुम् । देव्योऽप्सरसः । नशेकुः । यद्यप्यनङ्गपृतनाः काम सैन्यानि आत्मनः आत्मरूपाणि अन्या अप्सरसः भगवतो नारायणस्य देहादुत्पन्ना दृष्टाः ॥ २।७।६ (७)

(१) नारदपञ्चरात्रम्, (भारद्वाजसंहिता) पाहिर्बुध्न्यसंहिता, हयशीर्षपञ्चरात्रम्, कपिलसंहिता, कपिलपञ्चरात्रमित्यादि ।

कामं दहन्ति कृतिनो ननु रोषदृष्ट्या,
रोषं दहन्तमुत तेन दहन्त्यसह्यम् ।
सोऽयं यदन्तरमलं प्रविशन् बिभेति,
कामः कथं न पुनरस्य मनः श्रयेत ॥८॥
विद्धः सपत्न्युदित पत्रिभिरन्ति राज्ञो,
बालोऽपि सन्नुपगतस्तपसे वनानि ।
तस्मा अदाद् ध्रुवगतिं गृणते प्रसन्नो-
दिव्याः स्तुवन्ति मुनयो यदुपर्य्यधस्तात् ॥९॥

पृथुः ।

यद्वेणमुत्पथगतं द्विजवाक्यवज्र-
निष्प्लुष्टपौरुषभगं निरये पतन्तम् ।

---

नारायणस्य धैर्य्यं वर्णयन्ति काममित्यादिना। केचित् कृतिनः। कामं तावद्रोषं आविष्कृत्य दहन्ति। रोषं पुनस्तानेव दहन्तं नो दहन्ति। न च सहन्ते। सोऽयं रोषः यस्यान्तःकरणं प्रविशन् अत्यर्थं बिभेति। कामस्य तु का वार्त्ता ॥ २।७।७ (८)

उद्दिष्टसिद्ध्यर्थं ध्रुवप्रियं भावयेदित्याह। विद्ध इति। मातुः सुनीतेः सपत्नी या सुरुचिः तस्या उदितानि वाक्यानि तान्येव पत्रिणो बाणाः ते राज्ञः उत्तानपादस्यान्तिके समीपे। ध्रुवगतिं ध्रुवपदम्। गृणते स्तुवते। दिव्यामुनयः सप्तर्षयः। यद् यत्र आत्मन उपरिस्थितं अधस्तात् स्थिताः ॥ २।७।८ (९)

क्षुत्पिपासा शान्त्यर्थं पृथुमाह। यद्वेणेति। त्राता रक्षिता।

त्वात्वार्थितो जगति पुत्त्रपदञ्च लेभे,

दुग्धा वसूनि वसुधासकलानि येन ॥१०॥

ऋषभः ।

नाभेरसौ वृषभ आस सुदेविसूनु-

र्यो वै चचार समदृग् जड़योगचर्य्याम् ।

यत्पारहंस्य मृषयः पदमामनन्ति,

स्वस्थः प्रशान्तकरणः परिमुक्तसङ्गः ॥११॥

हयग्रीवः ।

सत्रे ममास भगवान् हयशीरषाथो-

साक्षात् स यज्ञपुरुषस्तपनीयवर्णः ।

---

यत् पुत्र इति पदं नाम लेभे । "पुन्नाम्नो नरकात्त्रायते" (१) इति पुत्त्रः । तेन च वेणः पिता त्रातः । अर्थितो द्विजैः । जगति जगदर्थं, वसूनि रत्नानि ॥ २।७।९ (१०)

अनवस्थितत्व हानार्थं ऋषभमाह । नाभेरिति । नाभिः पिता । सुदेवी माता । जड़वद्‌योगेन नित्यसमाधिना, चर्य्या जड़योगचर्य्या । स्वस्थो न तु विषयस्थः ॥ २।७।१० (११)

देवहेलन कृतदोषहानार्थं हयग्रीवावतारमाह । सत्र इति ।

---

(१) "पुन्नाम्नो नरकाद् यस्मात्त्रायते पितरं सुतः । तस्मात् पुत्र इति प्रोक्तः पितॄन् यः पाति सर्वतः" ॥ "तस्मात् पुत्र इति प्रोक्तः स्वयमेव स्वयम्भुवा ॥" महाभारतम् १।७४।३७ । रामायणम् २।१०७।१२ ।

छन्दोमयो मखमयोऽखिलदेवतात्मा,
वाचो बभूवुरुशतीः श्वसतोऽस्य नस्तः ॥१२॥

मत्स्यः ।

मत्स्यो युगान्तसमये मनुनोपलब्धः,
क्षोणीमयो निखिलजीवनिकायकेतः ।
विस्रंसितानुरुभये सलिले मुखान्म-
आदाय तत्र विजहार ह वेदमार्गान् ॥१३॥

कूर्म्मः (१) ।

क्षीरोदधावमरदानव यूथपाना-
मुन्मथ्नताममृतलब्धय आदिदेवः ।
पृष्ठेन कच्छपवपुर्विदधार गोत्रम्,
निद्राक्षणोऽद्रि परिवर्त्तकषाणकण्डूः ॥१४॥

---

सत्रे यज्ञे । मम ब्रह्मणः । हरशिराः आस बभूव । अथो पूर्णाहुते-रनन्तरम् ।

यज्ञपुरुषत्वमेव व्यनक्ति छन्दोमय इति । सार्द्धं स्विभिः । तपनीयं सुवर्णम् । उशतीः कमनीयाः (वेदाख्याः) श्वसन्तः श्वासं मुञ्चन्तः । नस्तः नासापुटात् । २।७।११ (१२)

जित्वोपसर्गहानार्थं मत्स्यमाह । मत्स्य इति । क्षोणीं नौरूपां मिनोति स्वशृङ्गे प्रक्षिपतीति क्षोणीमयः । निकायः समूहः । केतः

(१) शुक्लयजुर्वेदः २४।३४
शतपथब्राह्मणम् ७।५।१।५ ।
कूर्मपुराणं १२।४—५ ।

नृसिंहः।

त्रैपिष्टपोरुभयहा स नृसिंहरूपम्,

कृत्वा भ्रमद्भ्रकुटिदंष्ट्रकरालवक्त्रम्।

दैत्येन्द्रमाशु गदयाभि पतन्तमारा-

दूरौ निपात्य विददार नखैः स्फुरन्तम् ॥१५॥

हरिः।

अन्तःसरस्युरुबलेन पदे गृहीतो

ग्राहेण यूथपतिरम्बुजहस्त आर्त्तः।

आहेदमादिपुरुषाखिललोकनाथ!

तीर्थश्रवः श्रवणमङ्गलनामधेयः ॥१६॥

---

आश्रयः। नावि प्राणिस्थापनात्। मम मुखादुद्भये सलिले विस्रं-सितान् पतितान् वेदमार्गान् आदाय तत्र सलिले विजहार। वेदा एव मार्गा भुक्तेमु क्तेश्च २।७।१२ (१३)

नरकहेतुहानार्थं कूर्म्ममाह. क्षीरोदधाविति॥ गोत्रं मन्दराद्रिम्। निद्रां क्षणयति क्षणवतीं लब्धावसरां करोतीति निद्राक्षणः। तत्करोतीति णिच्। "विन्मतो लुक्" (१)। अद्रेः परिवर्त्तः सव्यापसव्य भ्रमः। कषाणः। कषणं घर्षणं सुखप्रदो यस्यां सः। कण्डूयस्य स तथा॥ २।७।१३ (१४)

अरण्यभयहानार्थं नृसिंहावतारमाह। त्रैविष्टपेति। त्रैविष्टपा देवाः। तेषामुरुभयं हन्तीति तथा। भ्रमद्भ्रकुटीदंष्ट्रेण करालं रौद्रं वक्त्रम् यस्य स तथा। भ्रकुटिदंष्ट्रेणेति 'प्राणयङ्गत्वादेकवद्भावः'। आरात् समीपे। स्फुरन्तं स्वत्वोद्रेकेण २।७।१४॥ (१५)

---

(१) पाणिनिः ५।३।६५ सूः।

श्रुत्वा हरिस्तमरणार्थिनमप्रमेय-
श्चक्रायुधः पतगराजभुजाधिरूढः ।
चक्रेण नक्रवदनं विनिपाट्य तस्मा-
द्धस्तेप्रगृह्य भगवान् कृपयोज्जहार ॥१६॥

ग्राहात् प्रपन्नमिभराजममुञ्चदार्त्तम्,
संस्तुन्वतोऽब्धिपतितान् श्रमणान् ऋषींश्च ।
शक्रश्च वृत्रवधतस्तमसि प्रविष्टम्,
देवस्त्रियोऽसुरगृहे पिहिता अनाथाः ॥१७॥

वामनः ।

ज्यायान् गुणैरवरजोऽप्यदितेः सुतानाम्,
लोकान् विचक्रम इमान् यदथाधियज्ञः ।

---

आर्त्तिहानार्थं हरिमाह, श्रुत्वेति । ग्राहोनक्रः २।७।१५ (१७) तारणार्थिनं शरणार्थिनम् । पतगराजोगरुड़ः । विनिपाट्य विदार्य्य २।७।१६॥ (१६)

ग्राहादिति । प्रपन्नं शरणागतं । संस्तुन्वतः संस्तुवतः । अब्धिपतितान् कश्यपस्य समिदाहरणे गोष्पदे मग्नान् । श्रमणान् ऊर्द्ध्वरेतसो वालखिल्यान् । अपिहिता अवरुद्धाः । द्रुमिलो नेमिम् । ११।४।१८ ॥ (१७)

स्थलोपसर्गहानार्थं वामनमाह । ज्यायानिति । कुतो ज्यायान् यद् यस्मादिमान् लोकान् विचक्रमे । अथ प्रतिग्रहानन्तरम् । प्रतिग्रहश्च वामनरूपेण । अधियज्ञो विष्णुः । यज्ञाधिष्ठातृत्वात् । किमस्य

त्वां वामनेन जगृहे विपदच्छलेन,
याञ्चामृते पथिचरन् प्रभुभिर्नचाल्यः ॥१८॥
नार्थोबलेरयमुरुक्रमपादशौच-
मापः शिखाधृतवतो विबुधाधिपत्यम्।
यो वै प्रतिश्रुतमृते नचिकीर्षदन्य-
दात्मानमङ्ग मनसा हरयेऽभिमेने ॥१९॥

याचने कारणम्। यतः पथिचरन् स्वधर्मस्थः पुरुषः प्रकारान्तरेण न चाल्यो 'न पदाद्भ्रंशनीयः' इति नीतिः २।७।१७॥ (१८)

बलेर्न पदभ्रंशः किन्तु अधिकपदलाभ इत्याह। नार्थ इति। अतस्तस्य नायं पुरुषार्थः। यद्विबुधाधिपत्यं। यतोऽसौ ऊरुक्रमपाद-शौचं या आपः ताः शिखायां शिरसि धृतवान्। यत आत्मानं प्रतिश्रुत-शेषपूरणत्वेन शिरसा अत्यादरेणाभिमेने अङ्गीकृतवान्। कथम्भूत-मात्मानं यः प्रतिश्रुतं विना अन्यद् न चिकीर्षत् कर्त्तुं नैच्छत्। "बहुलं छन्दस्यमाङ्योगे" (१) इत्यड़भावः। यद्यपि गुरुणा वारितः श्रमस्य २।७।१८॥ (१९)

---

(१) पाणिनिः ६।४।७५ सूः।

हंसः।

तुभ्यञ्च नारदभृशं भगवान् विवृद्ध-
भावेन साधुपरितुष्ट उवाच योगम्।
ज्ञानञ्च भागवतमात्मसतत्त्वदीपम्,
यद्वासुदेवशरणा विदुरञ्जसैव ॥२०॥

मन्वन्तरेशः ।

चक्रञ्च दिक्षु वहितं दशसु स्वतेजो-
मन्वन्तरेषु मनुवंशधरो बिभर्त्ति ।
दुष्टेषु राजसु दमं व्यदधात् स्वकीर्त्तिम्,
सत्ये त्रिपृष्ठ उशतीं प्रथयं स्वरिवैः ॥२१॥

धन्वन्तरिः ।

धन्वन्तरिश्च भगवान् स्वयमेव कीर्त्ति-
र्नाम्नां नृणां पुरुरुजां रुज आशु हन्ति ।
यज्ञे च भागममृतायुरवावरुन्धे (३)
आयुष्यवेदमनुशास्त्यवतीर्य लोके ॥२२॥

मोहिनी ।

धान्वन्तरं द्वादशमं त्रयोदशममेव च ।
अपाययत् सुरानन्यान् मोहिन्या मोहयन् स्त्रिया॥२३॥

परशुरामः ।

क्षत्रं क्षयायविधिनोपभृतं महात्मा,
ब्रह्मध्रुगुज्झितपथं नरकार्त्तिलिप्सुः ।
उद्धन्त्यसाववनिकण्टकमुग्रवीर्यः,
त्रिःसप्तकृत्व उरुधारपरश्वधेन ॥२४॥

स्त्याननाशस्य प्रहाणार्थं हंसावतारमाह । तुभ्यमिति । योगं भक्तियोगम् । सतत्त्वं तात्त्विकं रूपम् २।७।१९ ॥ (२०)

दुर्गोपसर्ग (दुर्गोपसर्ज) हानार्थं मन्वन्तरेशमाह । चक्रमिति । स्वमकृत्रिमस्तेजो यस्य तत् स्वतेजश्चक्रं विभर्त्ति । येन चक्रवर्त्तीति नाम । त्रयाणां लोकानां पृष्ठे यत् सत्यं तस्मिन् ब्रह्मसभायामित्यर्थः २।७।२० ( (२१)

व्याधिहानार्थं धन्वन्तरीति । नाम्ना कीर्त्तिः नामकीर्त्तनादित्यर्थः । वैद्यैरलभ्यं यज्ञे भागं अवरुन्धे ऽलभत । सोऽदृश: अमृतायु. । सुस्वादुत्वादमृतम् । परिणामहितत्वादायुरायु:साधनं वेदं वैद्यकम्, अनुशास्ति करोतीति लोकेऽवतीर्य काशिराजगृहे उत्पद्य (२) २।७।२१ ॥ (२२)

अविरतिहानार्थं मोहिनोमाह । धान्वन्तरमिति, धन्वन्तरिरूपं स्त्रीरूपञ्च सुरानपाययत्सुधामिति शेष: । अन्यान् सुरान् । मोहयन् केन रूपेणामृतानयनम् । पायनं मोहिनीस्त्रीरूपेणेत्यर्थः । सूत: शौनकम् १।३।१७ ॥ (२३)

(२) वैद्यके भावप्रकाश पूर्वखण्डे, एवं हरिवंशे हरिवंशपर्व्व २९ अः । ९-१० श्लो: ।

श्रीराम: ।

अस्मत्प्रसादसुमुखः कलया कलेश,
इक्ष्वाकुवंश अवतीर्य गुरोर्निदेशे ।
तिष्ठन् वनं सदयितानुज आविवेश,
यस्मिन् विरुध्य दशकन्धर आर्त्तिमार्च्छत् ॥२५॥
यस्मा अदादुदधिरूढ़ भयाङ्गवेपो-
मार्गं सपद्यरिपुरं हरवद्दिधक्षोः ।
दूरे सुहृन्मथितरोषसुशोणदृष्ट्या,
तातप्यमानमकरोरगनक्रचक्रः ॥२६॥

वक्षःस्थलस्परशरुग्नमहेन्द्रवाह-
दन्तैर्विड़म्बितककुब्जुषरूढ़हासम् ।
सद्योऽसुभिः सह विनेष्यति दारहर्त्तु-
र्विस्फूर्ज्जितैर्धनुष उच्चरतोऽधिसैन्ये ॥२७॥

श्रीकृष्णः ।

भूमेः सुरेतरवरूथविमर्द्दितायाः,
क्लेशव्ययाय कलया सितकृष्णकेशः ।
जातः करिष्यति जनानुपलक्ष्यमार्गः,
कर्म्माणिचात्ममहिमोपनिवन्धनानि ॥२८॥

अद्रिकूटोपसर्गहाणार्थं जामदग्न्यावतारमाह । क्षत्रमिति । विधिना, दैवेन । उपभृतं समर्पितम् (सम्बर्द्धितम्) । क्षयाय मृत्यवे । असौ विष्णुः । त्रिःसप्तकृत्वः । एकविंशतिवारान् । परश्वधः परशुः २। ७।२२ ॥ (२४)

प्रवासदुःखप्रहानार्थं रामावतारमाह । अस्मासु ब्रह्मादिषु प्रसादेन सुमुखः प्रहसितमुखः । कलेशोविष्णुः । सर्वशक्तिमयत्वात् । कलया अंशेन । गुरुः पिता । निदेशः आज्ञा । यस्मिन् विरुध्य वैरं कृत्वा । दशकन्धरो रावणः । आर्त्तिमार्च्छत् दुःखसम्प्राप्तः २।७।२३(२५)

यस्मा इति । यस्मै रामाय उदधिर्मार्गमदात् । रूढ़ः प्राप्तभय-जनितसर्वाङ्गकोपो येन । स तथा ॥ सपदि शीघ्रम् । कस्माद् भयं दिधक्षोः रामादेव । यथा त्रिपुरं हरो दिधक्षुः । दूरे सुहृदा सीतया मथितो विलोड़ितो यो रोष । तेन सुशोणा अतिरक्ता या दृष्टिस्तया । चक्रं समूहः २।७।२४ ॥ (२६)

वक्षःस्थलेति । दारहर्त्तुर्द्दशाननस्यहासं गर्व्वम् । विनेष्यति

नाशयिष्यति। असुभिः प्राणैः सह। अधिसैन्ये वानरसैन्यमध्ये। उच्चरत उत्कर्षेण विचरतः। धनुषो विस्फूर्जितैः उग्रशब्दैर्वानरान् विद्रावयत इत्यर्थः। रावणस्य वक्षःस्थलस्पर्शेन रुग्ना भग्ना ये महेन्द्रस्यैरावणस्य दन्ताः। तैर्विडम्बितो नटैरिवानुकृतः, ध्वनिरूपेण यः ककुभां दिशां जयस्तेन रूढ़ो हासः। अहो मे अद्भुतं वीर्य्यमिति। विस्मयस्यानुभावो हासः। स च भग्नैरैरावणदन्तैः तत्र तत्राभिनीत इत्यर्थः २।७।२५॥ (२७)

अथ सर्वान्तराय प्रहाणार्थं सर्व्वकामसिद्ध्यर्थञ्च कृष्णावतारं भावयेदित्याह। भूमेरिति। वरूथः समूहः। कलया पूर्णरूपेण नत्वंशेन "कृष्णस्तु भगवान् स्वयम्" (१) इत्यनेन विरोधात्। सितं निर्म्मलं मुक्तिरूपम्। कृष्णं मलिनं (अनिर्म्मलम्) भुक्तिरूपम् यत् कं सुखं तस्येशः। केशव्याख्याने तु पूर्ववद् विरोधः। इत्थमेव। "उज्जहारात्मनः केशौ सितकृष्णौ महामुने!" (२) इति तन्त्रान्तरोक्तिरपि व्याख्येया। केशौ सुखस्वामिनौ। सितो रामः। आत्मनः स्वमूर्त्तेः सकाशादुज्जहारोद्धृतवान् कल्पितवान्। हरिवंशे हि भगवान् कस्यांश्चिद्गिरिगुहायां स्वमूर्त्तिं निक्षिप्य गरुड़ञ्च तत्रावस्थाप्य 'स्वयमत्रागत' इत्युक्तम्। तदुक्तं हरिवंशे "स देवानभ्यनुज्ञाय विविक्ते त्रिदशालये। जगाम विष्णुः स्वं देशं क्षीरोदस्योत्तरां दिशम्। तत्र वै पार्व्वतीनाम गुहादेवैः सुदुर्गमा। त्रिभिस्तस्यैव विक्रान्तैर्नित्यं पर्वसु पूजिता। पुराणं तत्र विन्यस्य देहं हरिरुदारधीः। आत्मानं योजयामास वसुदेवगृहे विभुः॥" यैस्तु यथा श्रुतमेवेदं व्याख्यातम्। तेन सम्यग्दृष्टवन्तः। यतः सुरमात्रस्यापि निर्जड़त्वरूपप्रसिद्धौ अकालकलिते भगवति जरानुदयेन केशशौक्ल्यानुपपत्तेः। न चास्य केशेषु नैसर्गिकी सितकृष्णतेति प्रमाणमस्ति।

(१) भागवत १।३।२८ श्लोः।

(२) विष्णुपुराण ५ अंश ; १म अः, ५९ श्लोः।

अतएव नरसिंहपुराणे कृष्णावतारप्रसङ्गे शक्तिशब्द एव प्रयुक्तो न तु केशशब्दः। तथाहि "वसुदेवाच्च देवक्यामवतीर्य्यमहीतले। सित-कृष्णौ च तच्छक्तीकंसाद्यान् घातयिष्यत"—इत्यादिना। अस्तु तर्हि अंशोपलक्षणः केशशब्दः (नाऽ) अविलुप्त सर्वशक्तित्वेन साक्षादादि पुरुषत्वस्यैव निश्चेतुं शक्यत्वात्। विष्णुकृष्णादिशब्दानामविशे-षतः पर्य्यायत्व प्रतीतेश्च। नैवमवतारान्तरेषु कस्य वान्यस्य जन्मदिनं जयन्त्याख्ययातिप्रसिद्धम्। अतएवोक्तम् महाभारते "भगवान् वासुदेवश्च कीर्त्यतेऽत्र सनातनः। शाश्वतं ब्रह्मपरमं योगिध्येयम् निरञ्जनम्" इति। यत्तूक्तम् "ततो जगन्मङ्गलमच्युतांश"(१)मिति। तत्र बहुव्रीहिः। यच्च तत्रांशिनावतीर्णस्येति। तत्रांशेन सह इत्यर्थः। अंशो बलभद्रः। एवं सर्वत्र। एते "मत्केशौ वसुधातलम्" इत्यपि व्याख्यातम्। यत्तु (२)ताविमौ वै भगवतो हरेरंशाविहागता"विति। तदन्य कल्पविषयम्। यद्वा अंशश्च अंशश्च अंशौ। तत्रैकोऽंशशब्दो यथास्थितोऽर्ज्जुनविषयः। अन्यस्तु अंशाः सन्त्यस्येत्यंशः। "अर्शा-द्यच्"प्रत्ययान्तो भगवद्विषयः। यत्राद्यभिन्न इत्यादि हि प्रागुक्त इत्यलमति प्रसङ्गेन। आत्मनः श्रीकृष्णस्य महिमा उपनिबध्यते। सम्बद्धो दृश्यते येषु कर्म्मसु तानि। अनन्य साध्यानीत्यर्थः २।१। २६ ॥ (२८)

---

(१) भागवत १०।२।१८ श्लोः

(२) भागवत ४।१।५९ श्लोः

तोकेन जीवहरणं यदुलूकिकाया-

स्त्रैमासिकस्य च पदा शकटोपवृत्तः।

यद्रिङ्गतान्तरगतेन दिविस्पृशो र्वा,

उन्मूलनं त्वितरथार्ज्जुनयोर्न भाव्यम् ॥३९॥

यर्ह्रे व्रजे व्रजपशून् विषतोयपीतान्,
गोपांस्त्वजीवयदनुग्रहदृष्टिवृष्ट्या।
तच्छुद्धयेऽतिविषवीर्य्यविलोलजिह्व-
मुच्चाटयिष्यदुरगं विहरन् ह्रदिन्याम् ॥३०॥
तत्कर्म्म दिव्यमिव यन्निशि निःशयानम्,
दावाग्निना शुचिवने परिदह्यमाने।
उन्नेष्यति व्रजमतोऽवसितान्तकालम्,
नेत्रे पिधाप्य सबलोऽनधिगम्यवीर्य्यः ॥३१॥
गृहीतयद्‌द्‌यदुपबन्धममुष्य माता-
शुल्वं सुतस्य न तु तत्तदमुष्य माति।
यज्जृम्भतोऽस्य वदने भुवनानि गोपी,
संवीक्ष्य शंकितमनाः प्रतिबोधितासीत् ॥३२॥

तानि च कुर्व्वतोऽस्य मार्गोजनैर्नोपलभ्यते। तान्येवाह, तोकेनेति। तोकोबालः। उलूकिका पूतना। पदा-पादेन। उपवृत्तः पर्य्यस्तीभूतः। रिङ्गताजानुभ्याम् गच्छता। अन्तरङ्गतेन मध्यं प्राप्तेन। दिविस्पृशोः अर्जुनयोः। उन्मूलनं एतत्कर्म्मत्रयम्। न भाव्यम्। यदि स्व महिमानं न दर्शयत् २।७।२७॥ (२९)

यर्ह्रे व्रज इति। विषरूपे तोये पीतं पानं येषां ते तथा। तु शब्दश्चार्थ। तच्छुद्धये ह्रदिनी शुद्धये। उच्चाटयिष्यन् उच्चाटितवान्। अतीतभावे लुङ्। अतीतकल्पापेक्षया उन्नेष्यतीत्यादि भविष्यत्त्वम्। उरगं कालियम्। ह्रदिनी यमुना २।७।२८॥ (३०)

तत्कर्म्मेति। इवशब्दो वाक्यालङ्कारे। शुचिवने ग्रीष्मवने।

उन्नेष्यति उद्धरिष्यति । अतो दावाग्नेः यत्रमितो निर्णीतः । अन्त-कालो मृत्युर्यस्य तत्तथा । नेत्रे पिधाय पिहिते कारयित्वा । स बलः भद्र २।७।२८ ॥ (३१)

माता यशोदा । शुल्वं दाम नमाति यावद्दावध्यति तावन्मानं नलभते । सम्बोध्यदृष्ट्वा । प्रति वोधिता विश्वरय मिति सञ्जात-बोधा ॥२।७।३०॥ (३२)

नन्दञ्च मोक्ष्यति भयाद्वरुणस्य पाशा-
द्गोपान् बिलेषु पिहितान् मयसूनुना च ।
अह्न्यापृतं निशिशयानमतिश्रमेण,
लोकं विकुण्ठमुपनेष्यति गोकुलं स्म ॥३३॥
गोपैर्मखे प्रतिहते व्रजविप्लवाय,
देवेऽभिवर्षति पशून् कृपया रिरक्षुः ।
धर्त्तोच्छिलीन्ध्रमिव सप्तदिनानि सप्त-
वर्षो महीध्रमनघैक करे सलीलम् ॥३४॥
क्रीड़न् वने निशिनिशाकररश्मिगौर्य्याम्,
रासोन्मुखः कलपदायत मूर्च्छितेन ।
उद्दीपितस्मररुजां व्रजभृद्वधूनाम्,
हर्त्तुर्हरिष्यति शिरो धनदानुगस्य ॥३५॥

नन्दञ्चेति । पाशाद् भयं तस्मात् । मयसूनुर्व्योमः । आपृतं-व्यापृतम् । विकुण्ठे वैकुण्ठे । उपसमीपेनेष्यति ॥२।७।३१ (३३)

रिरक्षुः रक्षितुमिच्छुः । आर्षमणिट्त्वम् । ऊच्छिलीध्रं छत्राकारं वर्षासु भवति । (१) ।महीध्रं गोवर्द्धनम् । हे अनघ ! नारद २।७।३२।३४॥

येच प्रलम्बखरदर्दुरकेश्यरिष्ट-
मल्लेभकंसयवनाः कुजपौण्ड्रकाद्याः।
अन्ये च साल्वकपिबल्वलदन्तवक्र-
सप्तोक्षशम्बरविदूरथरुक्मिमुख्याः ॥३६॥
येवामृधे समितिशालिन आत्तचापाः,
काम्बोजमत्स्य कुरु सृञ्जयकैकयाद्याः।
यास्यन्त्यदर्शनमलं बलपार्थभीम-
व्याजाह्वयेन हरिणा निलयं तदीयम् ॥३७॥

---

क्रीड़न्निति। गौर्य्यां शुक्लायाम्। रामोन्मुखः रासक्रीड़ायामासक्तः कलैर्मधुरैःपदैः आयतं आलापेन दीर्घतां नीतं यद् मूर्च्छितं-मूर्च्छनाख्यं गीतम्। तेनोद्दीपितो यः स्मरः। स एव रुग्मदनज-पीड़ा यासां तास्तथा। धनदानुजः शङ्खचूड़ः २।७।३३ ॥ (३५)

ये चेति। प्रलम्बाद्याः रुक्मिपर्य्यन्ताः एकोनविंशतिः। कुजो भौमः। कपिर्द्विविदः। बल्वलो यो नैमिषे बलभद्रेण हतः। सप्तोक्षं सप्तवृषाः २।७।३४ ॥ (३६)

ये वेति। समितौ संग्रामे शालन्ते ते समितिशालिनः। हरिणा सह मृधे संग्रामे सति काम्बोजाद्याः तदीयं निलयं यास्यन्ति। न विद्यते दर्शनमलो रागादिर्यत्रनिलये स तथा। बलभीमपार्थव्याजा-ह्वयाः कपटनामानि यस्य तेन। तत्त्वतस्तु बलभद्रादयो हरिनामान एव २।७।३५ ॥ (३७)

---

(१) छवाकारं छवाकं गूरणम् इति केचिद्वदन्ति। तत्तु अभक्ष्यम्। तथाच स्मृतिः "छत्राकं ग्राम्य कुक्कुट अभक्ष्याणि द्विजातीना"मिति।

व्यासः ।

कालेन मीलितधियामवमृश्य नृणाम्
स्तोकायुषां स्वनिगमो बत दूरपारः ।
आविर्हितस्त्वनुयुगं स हि सत्यवत्याम्,
वेदद्रुमं विटपशो विभजिष्यति स्म ॥३८॥

बुद्धः ।

देवद्विषां निगमवर्त्मनि निष्ठितानाम्,
पूर्भिर्मयेन रचिताभिरदृश्यतूर्भिः ।
लोकान् घ्नतां मतिविमोहमतिप्रलोभम्,
वेषं विधाय बहुभाष्यत औपधर्म्यम् ॥३९॥

---

अशेषसन्देहहानार्थं व्यासावतारमाह । (*) कालेनेति । स्वनिगमः स्वकृतो वेदराशिः । बत अहो दूरपारः दूरस्थितपर्य्यन्तः । अवमृश्य । आविर्हितः अवतीर्णः । अनुयुगं द्वापरे । विटपशः शाखाभेदेन २।७।३६-३७ ॥ (३८)

भ्रान्तिदर्शननिवृत्त्यर्थं बुद्धावतारमाह । देवेति । पूर्भिः पुरोभिः । अदृश्यतूर्भिरलक्षितभ्रमणवेगाभिः । विमोहो गृहीतत्यजने शक्तिः । प्रलोभः (ऽन्या) त्यक्तार्थग्रहणे । भाष्यते उच्यते विष्णुना । औपधर्म्यं

---

(*) एवं हि वेदान्तकल्पतरुकृत पराशरोपपुराणवचनाज् ज्ञायते । तथाच "द्वापरे द्वापरे विष्णुर्व्यासरूपी महामुनिः । कृत्वा वेदं सुबहुधा कुरुते जगतो हितम् ।" सूतसंहिताभाष्यप्रारम्भे चाप्येवमस्ति ।" "नह्यन्यः पुण्डरीकाक्षान्महाभारतकृद् भवेत् ।" अयमेव हि अष्टादशपुराणकर्त्ता । तथाच सर्वत्रैव "अष्टादशपुराणानां कर्त्ता सत्यवतीसुतः ।" योगदर्शन भाष्यकृच्चायम् । तथाच सर्व्वतन्त्रापरतन्त्रश्रीमद्वाचस्पतिमिश्रः "नत्वा पतञ्जलिमृषिं वेदव्यासेन भाषिते" इति ।

कल्किः।

यर्ह्यालयेष्वपि सतां न कथाहरेः स्युः,
पाषण्डिनो द्विजजना वृषला नृदेवाः।
स्वाहा स्वधा वषड़िति स्म गिरो न यत्र,
शास्ता भविष्यति कलेर्भगवान् युगान्ते ॥४०॥

मन्वन्तरावताराः। यज्ञः।

इति मन्त्रोपनिषदं (२) व्याहरन्तं समाहितम्।
दृष्ट्वाऽसुरायातुधाना जग्धुमभ्यद्रवन् क्षुधा ॥४१॥

---

धर्म्माभासः। स्वार्थे (१) ष्यङ् २।७।३७॥ (३९)

कलिदोषनिरासार्थं कल्किनमाह। यर्ह्येति। यर्हि यदा पाषण्डिनो वेदबाह्याचाराः। नृदेवा राजानः। यदा वृषलाः। शूद्राः एषाञ्च परलोकिः। षष्ठस्याष्ट (नव)मेऽध्यायेऽनुक्तो तु लिङ्गैकं फलमुह्यम्। ब्रह्मा नारदम् २।७।३८॥ (४०)

एवं कल्पावतारानुक्त्वा मन्वन्तरावतारानाह। मन्वन्तरेति। स्वायम्भुवीये मन्वन्तरे जातं यज्ञमाह। यज्ञ इति। इति पूर्वोक्तप्रकारेण मन्त्रोपनिषदं "ईशावास्ये"ति रहस्यमन्त्रम् व्याहरन्तं जपन्तं स्वायम्भुवं जग्धुं खादितुं क्षुधाविष्टाः ८।१।१७॥ (४१)

---

अपरञ्च गीतायाम्भगवतो व्यासावतीर्णरूपेण वेदविभागकर्तृत्वं वेदान्तदर्शनप्रणेतृत्वञ्च। तथाहि "वेदान्तकृद्वेदविदेव चाह"मिति चतुर्व्यूहावतारतत्त्वन्तु श्रीमच्छाङ्करभाष्ये यथा वासुदेवाद्भगवतो ह्येकस्मात् परमपुरुषाद् वासुदेवः सङ्कर्षणः प्रद्युम्नः अनिरुद्धाश्चत्वारः भवन्ति। वेदाः द: २।२।८।४२ सूः।

(१) पाणिनिः ५।४।२४ सूः।

(२) ईशोपनिषत् १।१।१ श्लोः।

तांस्तथावसितान् वीक्ष्य यज्ञः सर्व्वगतो हरिः ।
यामैः परिवृतोदेवैः हृत्वाऽशासत्त्रिविष्टपम् ॥४२॥
ऋषेस्तु वेदशिरसस्तुषिता नामपत्न्यभूत् ।
तस्यां यज्ञे ततो देवो विभुरित्यभिविश्रुतः ॥४३॥
अष्टाशीति सहस्राणि मुनयो ये धृतव्रताः ।
अन्वशिक्षन् व्रतं तस्य कौमाराद् ब्रह्मचारिणः ॥४४॥
सत्यसेनः धर्म्मः ।
धर्म्मस्य सूनृतायान्तु भगवान् पुरुषोत्तमः ।
सत्यसेन इति ख्यातो जातः सत्यव्रतैः सह ॥४५॥
सोऽनृतव्रतदुःशीलान् असतो यक्षराक्षसान् ।
भूतद्रुहो भूतगणान् अवधीत् सत्यजित् सखः ॥४६॥

---

अवसितान् । अवेति गतमित्यर्थे । सितं बन्धनं ततो बहुव्रीहिः । एतेनोच्छृङ्खलानित्यर्थः ८।१।१८ ॥ (४२)

स्वारोचिषीये (१) विभुमाह । ऋषेरिति । तस्यां तु(त)षितायां ततो वेदशिरसः ८।१।२१ ॥ (४३)

तस्य विभोः कौमारात् कुमारत्वात् । ब्रह्मचारिणः व्रतं भावात्वाद् ब्रह्मचर्य्यम् ८।१।२२ ॥ (४४)

उत्तमे मन्वन्तरे (२) सत्यसेनमाह । धर्म्मस्येति । धर्म्मः पिता । सूनृता माता । सत्यव्रता देवा भ्रातरः । सत्यजित्तदानीन्तन इन्द्रः ८।१।२५ (४५—४६) ।

---

(१) "स्वारोचिषेऽन्तरे पूर्वम्" इति मार्कण्डेय पु:, देवीमाहात्म्ये १।१। श्लो: ।

(२) मार्कण्डेयपुराणे ५३।६—८ श्लो: । देवीभागवत १०।१—१२ श्लो: ।

हरिः।

तत्रापि यज्ञे भगवान् हरिण्यां हरिमेधसः।
हरिरित्याहृतो येन गजेन्द्रो मोचितो ग्रहात् ॥४७॥

वैकुण्ठः।

पत्नीविकुण्ठा शुभ्रस्य वैकुण्ठैः सुरसत्तमैः।
तयोः स्वकलया यज्ञे वैकुण्ठो भगवान् स्वयम् ॥४८॥
वैकुण्ठः कल्पितो येन लोको लोकनमस्कृतः।
रमया प्रार्थ्यमानेन देव्या तत्प्रियकाम्यया ॥४९॥
तस्यानुभावः कथितो गुणाश्च परमोदयाः।
भौमान् रेणून् सविममे यो विष्णोर्वर्णयेद्गुणान् ॥५०॥

अजितः।

तत्रापि देवसम्भूत्यां वैराजस्याभवत्सुतः।
अजितो नाम भगवान् अंशेन जगतीपतिः ॥५१॥

---

तामसीये हरिमाह। तत्रापीति। हरिणीमाता। हरिमेधा पिता। शुकः राजानम् ८।१।३० ॥ (४७)

रैवतीये वैकुण्ठमाह। पत्नीति। शुभ्रः पिता। तत्प्रियकाम्यया लक्ष्म्याः प्रियचिकीर्षया ८।५।४ ॥ (४८—५०)

चाक्षुषीयेऽजितमाह। अ(त)त्रापीति। षष्ठे मन्वन्तरे संभूतिर्माता। वैराजः पिता ८।५।९ ॥ (५१)

कूर्म्मः ।

पयोधिं येन निर्म्मथ्य सुराणां साधिता सुधा ।
भ्रममाणोऽम्भसि धृतः कूर्म्मरूपेण मन्दरः ॥५२॥

वामनः ।

अत्रापि भगवज्जन्म कश्यपाद्दितेरभूत् ।
आदित्यानामवरजो विष्णुर्वामनरूपधृक् ॥५३॥

सार्व्वभौमः ।

देवगुह्यात् सरस्वत्यां सार्वभौम इति प्रभुः ।
स्थानं पुरन्दराद्‌ हृत्वा बलये दास्यतीश्वरः ॥५४॥

ऋषभः ।

आयुष्मतोऽम्बुधारायां ऋषभो भगवान् किल ।
भविता येन संराद्धां त्रिलोकीं भक्ष्यते श्रुतः ॥५५॥

---

येन अजितेन । शुकः राजानम् ८।५।१० ॥ (५२)

वैवस्वतीये वामनमाह । अत्रापीति । अत्रापि सप्तमे मन्वन्तरे । आदित्याः अदितिपुत्राः । अवरजः कनिष्ठः ८।१३।६ (५३)

सावर्णीये (१) सार्वभौममाह देवेति । सरस्वती माता । स्थानं इन्द्रपदम् । पुरन्दरो वर्त्तमान इन्द्रः ८।१३।१७ ॥ (५४)

दक्षसावर्णीये ऋषभावतारमाह । आयुष्मतेति । अम्बुधारा माता । श्रुतोऽनव इन्द्रः ८।१३।२० (५५)

---

(१) "सावर्णिको नाममनुर्भवान् भुविभविष्यति" । मार्कण्डेयपु:, देवीमाहात्म्ये १३ अ: ।

विष्वक्सेनः।

विष्वक्सेनो विसूच्यान्तु शम्भोः सख्यं करिष्यति।
जातः स्वांशेन भगवन् गृहे विश्वजितो विभुः ॥५६॥

धर्म्मसेतुः।

आर्य्यकस्य सुतस्तत्र धर्म्मसेतुरिति स्मृतः।

स्वधामा।

वैधृतायां हरेरंशःत्रिलोकीं धारयिष्यति ॥५७॥
स्वधामाख्योहरेरंशः साधयिष्यति तन्मनोः।
अन्तरं सत्य सहसः सूनृतायाः सुतो विभुः ॥५८॥

योगेश्वरः।

देवहोत्रस्य तनयः उपहर्त्ता दिवस्पतेः।
योगेश्वरो हरेरंशो बृहत्यां सम्भविष्यति ॥५९॥

---

ब्रह्मसावर्णीये विष्वक्सेनमाह। विष्वगिति। शम्भुरिन्द्रः। विश्वजित्पिता ८।१३।२६ (५६)

धर्म्मसावर्णीये धर्म्मसेतुमाह। आर्य्यकस्येति। वैधृत इन्द्रः ८।१२।२६ ॥ (५७)

भद्रसावर्णीये स्वधामानमाह। स्वधामेति। तस्य भद्रसावर्णेर्मनोः। अन्तरं मन्वन्तरम्। साधयिष्यति पालयिष्यति। सत्यसहाः पिता ८।१३।२९ ॥ (५८)

देवसावर्णीये योगेश्वरमाह। देवहोत्रस्येति। उपहर्त्ता अर्पयिष्यति। दिवस्पतेरिन्द्रस्य। अर्थादिन्द्रपदम् ८।१३।३२ ॥ (५९)

बृहद्भानुः ।

सत्रायणस्य तनयो बृहद्भानुस्तदा हरिः ।
वितानायां महाराज ! क्रियातन्तून् वितायिता ॥६०॥

युगावताराः । (तत्र शुक्लः)

कृते शुक्लश्चतुर्बाहुर्जटिलो वल्कलाम्बरः ।
कृष्णाजिनोपवीताक्षान् विभ्रद्दण्डकमण्डलू ॥६१॥
हंसः सुपर्णो वैकुण्ठो धर्मो योगेश्वरोऽमलः ।
ईश्वरः पुरुषोऽव्यक्तः परमात्मेति गीयते ॥६२॥

---

इन्द्रसावर्णीये बृहद्भानुमाह । सत्रायणेति । तदा चतुर्दशे मन्वन्तरेशानां कल्पावतारत्वं मन्वन्तरावतारत्वञ्च काकतालीय (१) न्यायेन यौगपद्यासम्भवात् मन्वन्तरेशस्तु प्रागुक्तोऽप्यनुसन्धेयः । शुकः राजानम् ८।१३।३५ ॥ (६०)

युगावतारानाह । कृतेति । शुक्ल इति नामतो वर्णतश्च, अक्षः अक्षसूत्रम्, कृष्णाजिनादीनि विभ्रत् । ब्रह्मचारिवेश इत्यर्थः ११।५।२१ ॥ (६१)

तन्नामान्याह । हंस इति । हन्ति गच्छति जानाति सर्वमिति हंसः ॥ हन्तेर्गत्यर्थस्य कर्त्तर्य्यौणादिकः सः । सुपर्णः परमात्मा । "द्वासुपर्णेति" (२) श्रुतेः । विकुण्ठा माया तामधितिष्ठतीति वैकुण्ठः "शैषिकोऽण् ।" (३) धारयतीतिधर्म्मः । योगः समाधिः परमात्मा ब्रह्म ११।५।२२ ॥ (६२)

(१) काकागमनकाले तालपतनमिव इति काकतालीयम् । एतदाख्योन्यायः ।

(२) मुण्डक उ: ३।१।१ ।

(३) पाणिनीये "शेषे" ४।२।९२। "शैषिकात् सरूपः शैषिकोण्" सि:, कौ, ।

रक्तः।

त्रेतायां रक्तवर्णोऽसौ चतुर्बाहुस्त्रिमेखलः।

हिरण्यकेशस्त्रय्यात्मा स्रुक्स्रुवाद्युपलक्षणः ॥६३॥

विष्णुर्यज्ञः पृश्निगर्भः सर्ववेद उरुक्रमः।

वृषाकपिर्जयन्तश्च उरुगाय इतीर्य्यते ॥६४॥

पीतः।

द्वापरे भगवान् श्यामः पीतवासा निजायुधः।

श्रीवत्सादिभिरङ्कैश्च लक्षणैरुपलक्षितः ॥६५॥

नमस्ते वासुदेवाय नमः सङ्कर्षणाय च।

प्रद्युम्नायानिरुद्धाय सर्वभूतात्मने नमः (१) ॥६६॥

---

(त्रेतायामिति)। त्रिमेखलः। त्रिगुणा मेखला दीक्षाङ्गभूता यस्य स तथा। दीक्षितवेश इत्यर्थः। असौ विष्णुः ११।५।२४॥ (६३)

विष्णुरिति। पृश्निः सुतपसः प्रजापतेर्भार्य्या। तस्याः पुत्रः। सर्ववेदा यस्मिन् स तथा। वर्षति पुण्यफलं आकम्पयति च पापफलं दानेनेति वृषाकपिः। जयत्येव सदेति जयन्तः। उरुर्महान् गायोगानं यस्य स तथा ११।५।२६॥ (६४)

निजानि चक्रानि। आदिशब्दात् वज्राब्ज जसरोज-यवाङ्कुशादीनि। सहजं चिह्नमङ्कः। आगन्तुकं लक्षणं कौस्तुभादिराजवेश इत्यर्थः ११।५।२७॥ (६५)

तन्नामान्याह, नम इति। वासुदेव-संकर्षण-प्रद्युम्नानिरुद्धाः,

---

(१) 'तुभ्यं भगवते नमः' 'सात्वतां पतये नमः' इत्येते पाठान्तरे स्तः। व्याख्याचानयोः भागवतटीकायामनुसन्धेया।

कृष्णः कलौ ।

कृष्णवर्णं त्विषा कृष्णं साङ्गोपाङ्गास्त्र-पार्षदम् ।
यज्ञैः संकीर्त्तनप्रायैर्यजन्ति हि सुमेधसः ॥६७॥
नारायणाय ऋषये पुरुषाय महात्मने ।
विश्वेश्वराय विश्वाय सर्वभूतात्मने नमः ॥६८॥
ध्येयं सदा परिभवघ्नमभीष्टदोहम्,
तीर्थास्पदं शिवविरिञ्चिनुतं शरण्यम् ।

---

महदहङ्कारमनोबुद्धीनां सङ्कल्पाभिमान-संशय-निश्चयहेतूनां अन्तः-करणानामधिष्ठातारः ११।५।२८ ॥ (६६)

कृष्णः कलौ। त्विषा अकृष्णं इन्द्रनीलोज्ज्वलम्। अङ्गः मुखादि। उपाङ्गं कर्णादि। अस्त्रं चक्रादि। पार्षदः सुनन्दादि। तैः सहितम्। वैषस्यच विशेषानिर्द्देशात् यथाभिमतत्वं गम्यते। यज्ञैः देवताचनैः आराधयन्तीत्यर्थः। संकीर्त्तनप्रायैः नामसंकीर्त्तन-प्रधानैः। द्वापरे तु पूजायाः प्राधान्यम्। तदुक्तं (१) "ध्यायन् कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्चयन्। यदाप्नोति तदाप्नोति कलौ संकीर्त्त्य केशवम्।" इति ११।५।३२ ॥ (६७) (२)

कलौ यत्किञ्चिन्महिमानुवर्णनं तत्सर्वं नामावृत्तितुल्यमिति सूचयितुं नामावसरे स्तुतिमाह। ध्येयमिति। हे प्रणतपाल! ते चरणारविन्दं वन्दे। तत् किम्? यथाराजादिसेवा लघुत्वापादिका तथास्याऽवनतिर्नेत्याह। महापुरुषेति। न च योगादिवत्तत्सेवा-

---

(१) विष्णुपुराणं ६।२।१७ श्लोः।

(२) भागवतं ११।५।३० संख्यक श्लोक-स्वामिपादटीकाऽनुसन्धेया। अत्रास्य टीकानास्ति।

भृत्यार्त्तिहं प्रणतपालभवाब्धिपोतम्,
वन्दे महापुरुष ते चरणारविन्दम् ॥६९॥
त्यक्त्वा सुदुस्त्यज सुरेप्सित राज्यलक्ष्मीम्,
धर्म्मिष्ठ आर्य्यवचसा यदगादरण्यम्।
मायामृगं दयितयेप्सितमन्वधाव-
द्वन्दे महापुरुष ते चरणारविन्दम् ॥७०॥

---

यामायास इत्याह। ध्येयमिति। सुखहेतुतया सदाध्यातुमुचितम्। तदुक्तम् (१) "आयासः स्मरणे कोऽस्य स्मृतो यच्छति यः शुभम्। पापक्षयश्च भवति स्मरतां तमहर्निशम्।" इति। तर्हि किन्तावदेव-फलम्? नेत्याह, परीति। परिभवं हन्ति मनोरथं पूरयतीत्यर्थः। यद्यप्यन्यदेवता अप्येवं तथापि ता नाशेष पापक्षये क्षमा। इदन्तु क्षमत इत्याह। तीर्थेति। तीर्थं गङ्गा। आस्पदं आश्रयः। अतएव भवविरिञ्चिभ्यां अपिस्तुतम्। कावार्त्ताऽन्यदेवतानाम्। तस्मादाश्रयण-योग्यमित्याह। शरण्यमिति। महद्भिःसेव्यमानत्वाद् गम्भीरम्। ततश्च नगणयत्यल्पकानित्यपि नास्तीत्याह। भृत्येति। प्रसन्न-गम्भीरश्चेत्यर्थः। यथाचान्यैः समिताप्यार्त्तिः पुनरुदेति। न तथा-ऽत्रेत्याह। भवेति ११।५।३३॥ (६८—६९)

प्रसन्नगम्भीरता मेवाह। त्यक्त्वेति। अरण्यगमनमपि घटते प्रति-कूलपरिजनादुपक्षीणाद्वा राज्यादित्यत आह। सुदुस्त्यज सुरेप्सितेति। तर्हि किं नित्यपरिम्लानाद् बलवद्भयाद्वा। नेत्याह। आर्य्येति। यथा पिता प्रख्यापयितुं शक्नोति तथा किमपि किं निगूढ़ं दूषणमस्ति। नेत्याह। धर्म्मिष्ठ इति। अनिच्छतोऽपि पितुः सत्यपालनायेत्यर्थः।

---

(१) विष्णुपुराणं १।१७।७८ श्लोः।

स्वल्पावतार: ।

सर्गे तपोऽहमृषयो नव ये प्रजेशाः,
स्थानेऽथधर्म्ममखमन्वमरावनीशाः ।
अन्ते त्वधर्म्महरमन्युवशा सुराद्याः,
मायाविभूतय इमाः पुरुशक्तिभाजः ॥७१॥

इति श्रीबोपदेवविरचिते मुक्ताफले विष्णोरवताराः ।
समाप्तस्तृतीयोऽध्यायः ॥

गाम्भीर्य्यमुक्ता । प्रसन्नतामाह । मायेति । मृगरूपं मारीचम् । दयिता सीता । धर्म्मिष्ठत्वादिको रामव्यापारः । तच्चरणे समारोप्यतेऽतिशयार्थम् । यथा "यामि मनोवाक्‌कायैः शरणं करुणात्मकं । जगन्नाथं जन्मजरामरणार्णवतारणतरिमुदाराङ्घ्रियुगम्" इति । करभाजनः निमिम् ११।५।३४ ॥ (७०)

स्वल्पावतारमाह सर्गेति । अहं ब्रह्मा, प्रजेशाः प्रजापतयः । स्थानं पालनम् । धर्म्मो यज्ञाधिष्ठातृदेवता । हरो रुद्रः । मन्युवशाः सर्पादयः । ब्रह्मा नारदम्प्रति २।७।३९ ॥ (७१)

एषाञ्च स्वल्पत्वेन युगमन्वन्तरकल्पावतारेषु क्रमादल्पत्वं महत्त्वं महत्तरत्वं महत्तमत्वञ्चेति गम्यते ॥

इति हेमाद्रिविरचितायां कैवल्यदीपिकायां विष्णोरवतार रूपाणि । तृतीयोऽध्यायः ॥३॥

---

# अथ चतुर्थोऽध्यायः ।

## विष्णोरधिष्ठानरूपाणि द्वाविंशतिः ।

अथ मां सर्वभूतेषु भूतात्मानं कृतालयम् ।
अर्हयेद्दानमानाभ्यां मैत्र्याऽभिन्नेन चक्षुषा ॥१॥
जीवाः श्रेष्ठा ह्यजीवानां ततः प्राणभृतः शुभे ।
ततः सचित्ताः प्रवराः ततश्चेन्द्रियवृत्तयः ॥२॥
तत्रापि स्पर्शवेदिभ्यः प्रवरा रसवेदिनः ।
तेभ्यो गन्धविदः श्रेष्ठाः ततः शब्दविदो वराः ॥३॥

एवं योगान्तरायप्रतिघातार्थं भगवज्जन्मकर्मानुसन्धानमुक्त्वेदानी-मभेदभावनया विक्षिप्तादि (१) चित्तभूमिकाजयार्थमेकाग्रतासम्पाद-नार्थञ्च भगवतोऽधिष्ठानान्याह । विष्णोरिति । विष्णोरधिष्ठितानि रूपाणि द्वाविंशतिः । तेषां पूज्यत्वमाह । अथेति । भूतानां देहे कृतालयं क्षेत्रज्ञम् । दानं दीनेषु । मानमुत्तमेषु (२) मैत्री समेषु । अभिन्नेन चक्षुषा सर्वात्मा विष्णुरिति तेषां बुद्ध्या ३।२९।२७ ॥ (१)

जीवा इति । हे शुभे देवहूते ! सजीवनिर्जीवयोः सजीवः श्रेष्ठः । प्राण्यप्राणिनोः सजीवयोः प्राणी । स चित्ताचित्तयोः प्राणिनोः स चित्तः । स्पर्शज्ञाऽस्पर्शज्ञयोः स चित्तयोः स्पर्शज्ञः । रसज्ञारसज्ञयोः स्पर्शज्ञयोः रसज्ञः । गन्धज्ञागन्धज्ञयोरसज्ञयोर्गन्धज्ञः । शब्दज्ञा

---

(१) योगदर्शनं १।२-३ । सू;,—राजमार्त्तण्डः, तत्त्ववैशारदी ।

(२) योगदर्शनं—"मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्य विषयाणां भावनातश्चित्त प्रसादनम्" ।१।३३ सू; ।

रूपभेदविदस्तत्र ततश्चोभयतोदतः ।
तेषां बहुपदाः श्रेष्ठाश्चतुष्पादस्ततो द्विपात् ॥४॥
ततो वर्णाश्च चत्वारः तेषां ब्राह्मण उत्तमः ।
ब्राह्मणेष्वपि वेदज्ञो ह्यर्थज्ञोऽभ्यधिकस्ततः ॥५॥
अर्थज्ञात्संशयच्छेत्ता ततः श्रेयान् स्वधर्म्मकृत् ।
मुक्तसङ्गस्ततो भूयानदोग्धाधर्म्ममात्मनः ॥६॥
तस्मान्मय्यर्पिताशेष-क्रियार्थात्मा निरन्तरः ।

---

शब्दज्ञयोर्गन्धज्ञयोः शब्दज्ञः । रूपज्ञारूपज्ञयोः शब्दज्ञयो रूपज्ञः । उभयतादन्तैकदन्तयोः रूपज्ञयोः उभयतोदतः । सपादाऽपादयोः उभययतोदन्तयोः सपादः । चतुष्पद बहुपदयोः सपादयो श्चतुष्पादः हस्तीभूतपादद्वयाऽहस्तीभूतपादद्वययोः चतुष्पाद(द्वय) योः हस्तीभूत-पादद्वयः । वर्णावर्णयोर्हस्तीभूतपादयोर्वर्णः । ब्राह्मणाऽब्राह्मणयो वर्णयो र्ब्राह्मणः । वेदज्ञावेदज्ञयोर्ब्राह्मणयो र्वेदज्ञः । वेदार्थज्ञा वेदार्थज्ञयो र्वेदज्ञयो र्वेदार्थज्ञः ॥ ३।२९।२७-२८ २९-३०-३१-(२—५) ॥

संशयच्छेद्यसंशयच्छेदिनो र्वेदार्थज्ञयोः संशयच्छेदी । स्वधर्म्म-निष्ठाधर्म्मनिष्टयोः संशयच्छेदिनोः स्वधर्म्मनिष्ठः श्रेयान् । यथालाभ-सन्तुष्टाऽयथालाभसन्तुष्टयोः स्वधर्म्मनिष्टयोः यथालाभसन्तुष्टः श्रेयान् । धर्म्मानुजीविधर्म्मोपजीविनोर्यथालाभसन्तुष्टयोः धर्म्मानुजीवी ॥३।२९ ३२। (६) ॥

विष्णुभक्ताऽविष्णुभक्तयोर्धर्म्मानुजीविनोर्विष्णुभक्तः । इन्द्रिय-वृत्तित्वं स्पर्शज्ञानादि सामान्यं न स्वतन्त्रम् । क्रिया उद्यमः अर्थस्तत्-फलम् । आत्माकर्त्ता भोक्ताच । विष्णुप्रीत्यर्थ मेवोद्यमः । फल-

मय्यर्पितात्मनः पुंसो मयि सन्न्यस्तकर्म्मणः।
न पश्यामि परं भूतमकर्त्तुः समदर्शनात् ॥७॥
नाहं तथाद्मि यजमानहविर्वितानं,
श्च्योतद्‌घृतप्लुतमदन्‌हुतभुङ्‌मुखेन।
यद्‌ब्राह्मणस्य मुखतश्चरतोऽनुघासम्,
तुष्टस्य मय्यवहितैर्निजकर्म्मपाकैः ॥८॥
येषां बिभर्म्यहमकुण्ठविकुण्ठयोग-
मायाविभूतिरमलाङ्घ्रिरजः किरीटैः।
विप्रांस्तु कोन विषहेत यदर्हणाम्भः,
सद्यः पुनाति सहचन्द्रललामलोकान् ॥९॥

न्त्वानुषङ्गिकं विष्णुप्रीत्यर्थमेव फलंभोगः। आत्मतुष्टिस्त्वानुषङ्गिकी विष्णुप्रीत्यर्थमेवात्मधारणम्। मुक्तिस्त्वानुषङ्गिकी अर्पणशब्दार्थः। निरन्तरमस्याश्चित्तवृत्तेरखण्डता मय्यर्पितेति श्लोकषट्‌केन विष्णुभक्त प्रशंसा। परं श्रेष्ठम्। कपिलः देवहूतिम् ३।२९।३३। ॥ (७)

हुतभुङ्‌मुखेन वितानेयज्ञे, अदन् अश्नन् तथा नाद्मि। किम्भूतं च्योतताच्चरता घृतेनप्लुतं आलोड़ितम्। यद् यथा ब्राह्मणस्य मुखेन चरतः अश्नतः अनुघासं प्रतिग्रासं अद्मि। (अभि) सन्तुष्टस्य मयि नारायणे अवहितैः अर्पितैः निजकर्म्मजपाकैः प्रारब्धकर्म्मजनितैः शुभाशुभैः। अर्पणञ्च नारायणायेति समर्पयेत्तदितिवक्ष्यति ॥३।१६।८।(८)

येषामिति। कः पुरुषः विप्रान् न विषहेत। तत्कृतं क्रोधं न सहेत। यैर्विप्रैः सत्यलोकवासिभिः त्रिविक्रमत्वे मच्चरणार्हणोक्षितं पदं नभोगङ्गारूपम्। चन्द्रललामेन शिवेन सह त्रीन् लोकान्

ये मे तनुर्द्विजवरान् दुहतीर्मदीया,
भूतान्यलब्धशरणानि च भेदबुद्धया ।
द्रक्ष्यन्त्यघक्षतदृशो ह्यहिमन्यवस्तान्,
गृध्रारुषा ममकुशन्त्यधिदण्डनेतुः ॥१०॥
ये ब्राह्मणान् मयि धिया क्षिपतोऽर्चयन्त-
स्तुष्यद्धृदः स्मितसुधोक्षितपद्मवक्त्राः ।
वाण्यानुरागकलयात्मजवद्गृणन्तः,
सम्बोधयन्त्यहमिवाहमुपाकृतस्तैः ॥११॥

---

अद्यापि सद्यः पुनाति । तथा येषाममलमङ्घ्रिरजोऽहं साहस्रैः किरीटैः बिभर्मि । अकुण्ठा अखण्डा देशकालाभ्याम् । विकुण्ठाख्य लोकरूपा योगमाया विभूतिर्यस्य सतथा ॥३।१६।८।(८)

येम इति । द्विजवरान् ब्राह्मणान् । मदीया दुहतीर्दुहितॄः धेनूः । गावो हि सूर्य्यात् प्रसूताः सूर्य्यश्च विष्णुः । अलब्धशरणानि रक्षकहीनानि भूतानि च । एता ममतनवः ममाधिष्ठानानि तानि । ये भेदबुद्धया अनधिष्ठानबुद्धयाद्रक्ष्यन्ति विष्णुं भजन्तोऽपि तेषामपकारं करिष्यन्ति नोपकारम् । यद्यपि सर्वं विष्णोरधिष्टानं तथाप्यत्र कृतावुपकारापकारौ झटिति विष्णुं स्पृशतो ममत्वातिरेकात् । अघक्षतदृशः पापैरन्धीकृतदृष्टयः । अहिमन्यवः सर्पक्रोधाः । सर्पाः खल्वतेनैव क्रुध्यन्ति, न च क्रोधं त्यजन्ति । तान् पुरुषान् गृध्राः गृध्राकाराः यमदूताः कुशन्ति छिन्दन्ति घातयन्ति । ममरुषा प्रेरिताः । अहं हि दण्डनेतॄणां यमादीनामधिष्ठाता ३।१६।१० ॥ (१०)

ये ब्राह्मणानिति । ये ब्राह्मणान् सम्बोधयन्ति तैरहमुपाकृतः कृतषोडशोपचारः । मयि धिया अर्चयन्तः । विष्णुबुद्धया पूजयन्तः ।

यस्यात्मबुद्धिः कुणपे त्रिधातुके,
स्वधीः कलत्रादिषु भौम इज्यधीः।
यत्तीर्थबुद्धिः सलिले न कर्हिचि-
ज्जनेष्वभिज्ञेषु स एव गोखरः ॥१२॥
मनसैतानि भूतानि प्रणमेद्बहुमानयन्।
ईश्वरो जीवकलया प्रविष्टो भगवानिति ॥१३॥
अहं सर्वेषु भूतेषु भूतात्मावस्थितः सदा।
तमवज्ञाय मां मर्त्यः कुरुतेऽर्चा-विडम्बनम् ॥१४॥

क्षिपतः तिरस्कारान् कुर्व्वतोऽपि तुष्यद्धृदः प्रीयमाणचित्ताः। पापमये रित्यतस्तिरस्कारादिति। पद्मोपमं ब्राह्मणवक्त्रं क्रोधाग्निना शुष्यन् सि(स्मि)तसुधयासिञ्चन्तः। आत्मजवत् पुत्रानिव गृणन्तः स्तुवन्तः। अह मिव अहं यथा सम्बोधयामि। भगवान् चतुःसनम् ३।१६।११ ॥(११)

व्यतिरेकभङ्ग्यापि प्रशंसन्ति यस्येति। कुणपम्। निर्ज्जीवम् शरीरम्। त्रिधातुकं तेजोऽबन्नात्मकत्वात्। वातपित्तकफवत्त्वाद्वा। स्वधीः। आत्मीयबुद्धिः। भौमे प्रतिमादौ इज्यधीः पूज्यबुद्धिः। यद् यस्य जले तीर्थबुद्धिः। नत्वभिज्ञेषु भक्तेषु। कर्हिचित् कदाचित्। गोखर इति अज्ञत्वे निन्द्यत्वे उक्तो। भगवान् कुरुक्षेत्रे मिलितान् मुनीन् १०।८४।१३ ॥(१२)

तत्त्वतस्तु सर्व्वं विष्णोरधिष्ठानमित्याह। मनसेति। भगवान् प्रविष्ट इति। मनसा बहुमानयन्। ३।२९।३४ ॥ (१३)

प्रतिमैकपूजकं निन्दन्ति। (१) अहमिति। अर्च्चा प्रतिमा ३। २९।२१ ॥ (१४)

---

(१) "अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात् तत्क्रतुश्च"। वेदान्तदर्शनं ४।३।१५-१६ सूः।

"प्रतिमासु शिलाबुद्धिं कुर्व्वाणो नरकं व्रजेत्" मन्त्रशास्त्रे।

यो मां सर्व्वेषु भूतेषु सन्तमात्मानमीश्वरम् ।
हित्वार्च्चां भजते मौढ्याद् भस्मन्येव जुहोति सः ॥१५॥
द्विषतः परकाये मां प्राणिनो भिन्नदर्शिनः ।
भूतेषु बद्धवैरस्य न मनः शान्तिमृच्छति ॥१६॥
अहमुच्चावचैर्द्रव्यैः क्रिययोत्पन्नयाऽनघे ।
नैवतुष्येऽर्च्चितोऽर्च्चायां भूतग्रामावमानिनः ॥१७॥
अर्च्चादावर्च्चयेत्तावदीश्वरं मां स्वकर्म्मकृत् ।
यावन्नवेद स्वहृदि सर्व्वभूतेष्ववस्थितम् ॥१८॥

---

योमामिति। सत्त्वं नित्यत्वम्। आत्मत्वान्निर्निमित्तप्रेमास्पदत्वम्। ईश्वरत्वात् फलदातृत्वम्। हित्वा त्यक्त्वा योऽर्च्चां प्रतिमां भजते सोऽग्निं हित्वा भस्मन्येव जुहोति ३।२९।२२ ॥ (१५)

भस्मवत्प्रतिमापूजनस्य निष्फलहेतुत्वमाह द्विषत इति। मनःशान्तिर्हि फलम्। साच द्वेषहानेः सा च सर्व्वात्मा विष्णुरिति दर्शनात्। तच्च प्रतिमैव विष्णुरिति पश्यतो नास्ति ३।२९।२३ ॥ (१६)

प्रतिमार्च्चनाद्विष्णुस्तुष्टिस्ततो मनः शान्तिरिति चेत् सापि नास्तीत्याह अहमिति। उच्चावचैर्व्विविधैः। क्रियया पूजया हे अनघे देवहूते! द्रव्यैरुत्पन्नया न तु कर्त्तृगुणेन। स हि मां द्वेष्ट्यर्च्चयति च ३।२९।२४ ॥ (१७)

यस्तुनोद्वेष्टि किन्तु सर्वात्मा विष्णुरिति न जानाति। स यावन्नजानातितावदर्च्चादावर्च्चयेदित्याह। अर्च्चादाविति। आदिशब्दा-

---

"अप्सु देवा मनुष्याणां दवौ देवामनीषिणाम्।
प्रतिमा स्वल्पबुद्धीनां योगिनां हृदये हरिः॥" आह्निकाचारतत्त्वे।

आत्मनश्च परस्यापि यः करोत्यन्तरोदरम्।
तस्यभिन्नदृशो मृत्युर्विदधे भयमुल्वणम् ॥१९॥

इति श्रीमुक्ताफले विष्णोर्महिमा
विष्णोरधिष्ठानानि च ॥

विष्णोर्नुवीर्य्यं गणनां कतमोर्हतीह,
यः पार्थिवान्यपि कविर्विममे रजांसि।
चस्कम्भ यः स्वरहसा स्खलता त्रिपृष्ठम्,
यस्मात्त्रिसाम्यसदना-दुरुकम्पयानम् ॥१॥

---

इत्येष्वधिष्ठानेषु। क्रमाद् विष्णुबुद्धिं कुर्व्वन् सर्व्वात्मा विष्णुरिति जानीयात् ३।२९।२५॥ (१८)

तज्ज्ञानं विना मृत्युभयं न निवर्त्तते। "उदरमन्तरं कुरुते अथ तस्य भयम्भवती"ति (१) श्रुतिः। तदेवाहात्मन इति। अन्तरं भेदं उदरम् अत्यल्पं भयं कालचक्रपरिभ्रमणं विदधे अहं सृजामि। मृत्योर्हिमद्रूपम्। कपिलः देवहूतिम् ३।२९।२६॥ (१९)

इति हेमाद्रिविरचितायां कैवल्यदीपिकायां मुक्ताफले
विष्णोरधिष्ठानानि॥

एवं भगवतोऽधिष्ठानान्युक्त्वा इदानीं "यत् स्तूयते तद्विधीयत"(२) इति न्यायान्मुमुक्षोर्भगवति स्वातिरेकमनुरागं विधातुं भगवतो-माहात्म्यमाह। विष्णोरिति। अत्रापि श्लोकसप्तकेन पूर्व्वरङ्गं विधा-स्यन् सामस्त्येन महिमा ब्रह्मादिभिरपि दुर्व्विज्ञात इति द्वाभ्यामाह, विष्णोरिति। नु अहो इह एषु त्रैलोक्यस्थेषु कविषु मध्ये कतमः

(१) मैत्रेय्युप: ६।२६ श्रो:।

(२) मीमांसाभाष्यम्, (द:) १।२।

'नान्तं विदाम्यहममी मुनयोऽग्रजास्ते,
मायाबलस्य पुरुषस्य कुतोऽवरा ये ।
गायन् गुणान् दशशतानन आदिदेवः,
शेषोऽधुनापि समवस्यति नास्यपारम् ॥२॥
येषां स एव भगवान् दययेदनन्तः,
सर्व्वात्मनाऽऽश्रितपदो यदि निर्व्यलीकम् ।
ते दुस्तरामतितरन्ति च देवमायाम्,
नैषां ममाहमितिधीः श्वशृगालभक्ष्ये ॥३॥

किं जातीयः ? योऽपि कविरतीन्द्रियदर्शी पृथ्वी परिभ्रमण संख्यातवान् सोऽपि नार्हति अन्यस्य का वार्त्ता । "कोऽसौ विष्णुर्यस्त्रिपृष्ठम्, चस्कम्भष्टतवान् । त्रयो लोकाः पृष्ठे यस्य तत् । त्रिपृष्ठं कालचक्रम् । स्वरंहसा स्वेन बलेनास्खलता अप्रतिहतेन । यस्माद्विष्णोः महत्तत्त्वमासीत् । त्रयाणां गुणानां साम्यं मूलप्रकृतिः (१) । सदनमधिष्ठानं यस्य स तथा । कम्पयानं कम्पयमानम् । सर्वाणि वस्तूनि सर्वेषां सर्व्वचेष्टाप्रदमित्यर्थः २।७।४० ॥ (१)

नान्तमिति । अहं ब्रह्मा ते तव नारदस्य । अग्रजाः सनकादयः । व्यधिकरणे षष्ठी । अवरे इन्द्राद्याः । यतः शेषोऽपि नाद्यापि समवस्यति जानाति । स यदयस्यादिदेवो दशशताननश्च २।७।४१ ॥ (२)

एवमपि श्रेयत्वमुक्त्वाऽस्य भगवतः प्रसादतः सुज्ञाततामाह । येषामिति । स एव नान्योदययेद्दयां कुर्य्यात् । निर्व्यलीकं निष्कपटम् । चकारात्तिदन्ति च । एषां तीर्णमायानां श्वसृगालभक्ष्ये शरीरे तत्र स्व

(१) "मूले मूलाभावादमूलम्" सांख्यदः १।६६ सूः । "सत्त्वरजस्तमसां साम्यावस्थाप्रकृतिः" इति तत्रैव । "मूलप्रकृतिरविकृतिः"—सांख्यकारिका, ४ श्लोः ।

वेदाहमङ्ग परमस्य हि योगमायाम्,
यूयं भवश्च भगवानथ दैत्यवर्य्यः।
पत्नीमनोः स च मनुश्च तदात्मजाश्च,
प्राचीनवर्हिरिभुरङ्ग उत ध्रुवश्च ॥४॥
इक्ष्वाकुरैलमुचकुन्दविदेह गाधि-
रघ्वम्बरीषसगरा गयनाहुषाद्याः।
मान्धात्रलर्कशतधन्वनुरन्ति देवा,
देवव्रतो बलिरमूर्त्तरयो दिलीपः ॥५॥
सौभर्य्युतङ्क शिविदेवल पिप्पलाद-
सारस्वतोद्धवपराशरभूरिषेणाः।
येऽन्ये विभीषणहनुमदुपेन्द्रदत्त-
पार्थार्ष्टिषेण विदुरश्रुतदेववर्य्याः ॥६॥

शरीरेऽहं धीः परशरीरे ममधीः तीर्णमायत्वेऽविक्रमेदित्यर्थः २।७।४२॥ (३)

भगवत् प्रसादाज् ज्ञायत इत्यत्र निदर्शनान्याह। वेदाहमिति। अहं ब्रह्मा हे अङ्ग नारद! मणिमन्त्रादिभिर्व्विना या समाधि मात्रा दाविर्भवति सा योगमाया। दैत्यवर्य्यः प्रह्लादः। मनुः स्वायम्भुवः तत्पत्नीशतरूपा। आत्मजा प्रियव्रताद्याः। उत अहो।२।७।४३। (४)

ऐलः पुरूरवाः विदेहो जनकः। नाहुषो ययातिः देवव्रतो भीष्मः २।७।४४। (५)

उत्तङ्को भगवतादर्शित विश्वरूपः। हितकारस्यायंशब्दः।

तेवै विदन्त्यतितरन्ति च देवमायाम्,
स्त्रीशूद्र हूण शवरा अपि पाप जीवाः ।
यद्यद्भुतक्रम परायण शील शिक्षा-
स्तिर्य्यग्जनाअपि किमु श्रुत धारणा ये ॥७॥
शश्वत् प्रशान्तमभयं प्रति बोधमात्रम्,
शुद्धं समं सदसतः परमात्मतत्त्वम् ।
शब्दो नयत्र पुरुकारकवान् क्रियार्थो-
माया परै त्यभिमुखे च विलज्जमाना ॥८॥

आर्षो द्वितीयतकारलोपः । श्रुतदेवो भगवदातिथ्यकारो ।२।७।-४५। (६)

तेवै इति । अद्भुतक्रमो विष्णुः । तत्परायणं यच्छीलं सद्वृत्तं तत्र शिक्षा येषां ते तथा । श्रुते गुरूपदेशे धारणा येषां ते तथा २।७।४६॥ (७)

एवं पूर्व्वरङ्गं कृत्वा प्राधान्यान्निराकारमहिमानन्तावदाह । शश्वदिति । शश्वन्नित्यं । कुतः यतः प्रशान्तं निष्क्रियम् । कुतः यतोऽभयम् भयञ्चद्वितीयात् (१) । तच्च प्रतिबोधमात्रम् । कुतः यतः शुद्धम् । शुद्धस्य ज्ञानस्य तस्य न कर्त्रादियोगः । न च तद सिद्धम् । यतः समम् । ज्ञानविशेषेषु सामान्यरूपेण स्थितम् । तच्च सदसतः परम् । नकार्य्यम् नापि कारणम् । विशेष-स्यैव तथात्वात् । नचात्मान्यस्याद्वितीयः । यत आत्मरूपम् । तदुक्तं श्रीशङ्कराचार्य्यैः । "ज्ञानज्ञेयविहीनोऽपि सदाज्ञ" (२) इति ।

(१) बृहदारण्यकं-१।४।२। (२) श्रीमच्छङ्कराचार्य्य ग्रन्थावल्यामस्ति ।

तद्वै पदं भगवतः परमस्य पुंसो-
ब्रह्मेति यद्विदुरजस्रसुखं विशोकम्।
सध्राङ् नियम्य यतयो यमकर्त्तहेतिम्,
जह्युः स्वराडिव निपानखनित्रमिन्द्रः॥९॥
स श्रेयसामपिविभुर्भगवान् यतोऽस्य,
भावस्य भावविहितस्य सतः प्रसिद्धिः।

न च तत्ज्ञानशब्देन सद्वैतम् यतोऽ(य)त्र नो शब्दः। शब्दोहि कारकार्थः क्रियार्थो वा। न च तत्तद्रूपम्। नापि मनसाद्वैतम्। मनोऽपिहि माया साच परैति दूरे गच्छति अभिमुखे स्थातुं विलज्जमानेव॥२।७।४७। (८)

तदेव ज्ञानं भगवतः पदं ब्रह्मेति प्रसिद्धं नच निष्प्रमाणकम्। यद् यतयोविदुः अनुभवन्ति। अजस्रसुखं विशोकञ्च। "यच्चित्ततोदः कृपया" (१) इत्युक्तम्। शोकविहीनत्वात्। किंकृत्वाविदुः सध्राङ् सहचरंचित्तं नियम्य लयविक्षेपाभ्यां निवर्त्त्य सहाञ्चतीति सध्यक्। ततो यमकर्त्तहेतिं जह्युः त्यजन्ति। यमश्चित्तवृत्ति यमनप्रयत्नः (२)। स एव कर्त्तृ हेतिः। हृदयग्रन्थिच्छेदनशस्त्रम्। प्राप्तोपिया उपायन्त्यजन्तीत्यर्थः। स्वराड्दरिद्रः सहि स्वस्यराड् न तस्यभृत्योनस्वामी स-यदानिपानस्य जलाशयस्य खननार्थं मुपात्तेन खनित्रेण जीवन् धनसञ्चयादिन्द्रः सम्पन्नोभवति। तदा निपान खनित्रं जहाति। एवं संसारी यममभ्यसन् यदा मुक्तो भवति। तदाच यमं जहाति।२।७।४८। (९)

(१) भागवत २।२।२७। श्लोः।

(२) "अहिंसासत्यास्तेयब्रह्मचर्य्यापरिग्रहायमाः—योगदर्शनं २।३० सूः।

देहे स्वधातु विगमेऽनुविशीर्य्यमाणे,
व्योमेव तत्र पुरुषो न विशीर्य्यतेऽजः ॥१०॥
सोऽयन्तेऽभिहित स्तात! भगवान् विश्वभावनः।
समासेन हरेर्नान्यदन्यस्मात् सदसच्चयत् ॥११॥
इदं भागवतं नाम यन्मे भगवतोदितम्।
संग्रहोऽयं विभूतीनां त्वमेतद्विपुलीकुरु ॥१२॥

---

यदेतदुक्तं पदं यच्च तस्योपार्जकः स भगवानित्याह। सश्रेयसामिति। योऽपि श्रेयसां पदसाधनानां विभुः सम्पादकः सोऽपि भगवान्। यतः कारणादस्य श्रेयसःप्रसिद्धिर्निष्पत्तिः। सतः सद्रूपात्। भावानां पदार्थानां स्वभावो ब्राह्मणत्वाद्यसाधारणरूपम्। तेन विहितस्य ब्राह्मणस्येदम् क्षत्रियस्येदमिति विभागेनोक्तस्य सद्रूपस्य स एव। सहि देहे विशीर्य्यमाणे नहिविशीर्य्यते। अजः स्वजायमाने नहि जायते। व्योमेव स्वधातूनां देहकारणानां विगमे नाशे। २।७।४८॥ (१०)

निराकार महिमानमुक्तोपसंहरति। सोऽयमिति। यत्सद् यच्चासत्। तत् सर्वं हरेरन्यन्नभवति। हरिस्तु अस्मादन्य एवेति संक्षेपः २।७।५०। (११)

साकार महिमानं ब्रुवन् चतुर्भिःपूर्वरङ्गमाह। इदमिति। यद् यस्माद्भगवतोक्तं तेन भागवतं प्रोक्तार्थेऽण् (१) विभूतयोलीलावताराः विपुलीकुरु विस्तारय।२।७।५१। (१२)

(१) पाणिनिः ४।२।६४ सूः।

यथा हरौ भगवति नृणां भक्तिर्भविष्यति ।
सर्वात्मन्यखिलाधार इति सङ्कल्प्य वर्णय ॥१३॥

मायां वर्णयतोऽमुष्य ईश्वरस्यानुमोदत. ।
शृण्वतः श्रद्धयानित्यं माययात्मा नमुह्यति ॥१४॥

नैवात्मनः प्रभुरयं निजलाभपूर्णो-
मानं जनादविदुषः करुणो वृणीते ।
यद्यज्जनो भगवते विदधीत मानम्,
तच्चात्मने प्रतिमुखस्य यथामुखश्रीः ॥१५॥

---

यथेति । अनेन वर्णितेन हरौ नृणां भक्तिर्भविष्यतीति सङ्कल्पं मनसि वि(नि)धाय भागवतं यथावद्वर्णय । अत्र हि हरेर्भगवत्त्वं सर्व्वात्मकत्वं सर्व्वाधारत्वञ्चवर्ण्यते । तच्च भक्तिं द्रढ़यति २।७।५२। (१३) ॥

ननु चिदेकरसेवस्तुनि लीलावतारादि मायाद्वारकम् । मायामयस्यच वर्णनेन समीहित सिद्धिः । नहि जलाभासात् पिपासा शाम्यतीत्यतआह मायामिति । अयमर्थः । यद्यपि चरित्रं मायामयं तथापि तच्छ्रद्धया वर्णितम् । श्रुतमनुमोदितं वा मायां निवर्त्तयति । तत्र हेतुः ईश्वरस्येति । तथाच शास्त्रः "त्वां स्तोष्यामीति" ब्रह्मा नारदम् २।७।५३॥ (१४)

नन्वीश्वरोऽपि चेत्स्वगुणवर्णनेन तुष्यति तर्हि राजादि तुल्यत्वं स्यादत आह । नैवेति । अयं विष्णुः मानं न वृणीते । कुतः निजस्य

तत् पादशौचं कलिकल्मषापहम्,
स्वधर्म्मविन्मूर्द्ध्नदधात् सुमङ्गलम्।
यद्देवदेवो गिरिशश्चन्द्रमौलि-
र्दधारमूर्द्ध्ना परया च भक्त्या ॥१६॥

---

नित्य निरतिशयानन्दस्वरूपस्य लाभेन पूर्णत्वात्। पूर्णा अपि क्वचित् परोद्वेगेन उद्विग्ना दृश्यन्ते। अयन्तु न तथा इत्यत आह। करुण इति। तथापि लब्धनिर्व्वाहार्थं मन्यापेक्षयाभाव्यम्। नेत्याह। प्रभुः ईशिता। अविदुष इति। जन एवाज्ञतया तं सापेक्षं मन्यत इत्युक्तम्। ननु सेव्यमानोऽप्ययमखण्डतातिशयस्तत् किमर्थं सेव्यत इत्यत आह। यद् यदिति। भगवत इति चतुर्थ्यामङ्गल्यस्य तादर्थ्यमुक्तम्। भजनस्य कृतस्यातिशयस्य भगवत्यभावेऽपि तत् प्रीति बुद्ध्या कृतं आत्मनि फलतीत्यर्थः। अतएवविदधीतेत्युक्तम्। नतुविदध्यादिति। मानं पूजारूपम्। आत्मनेपदादेव क्रियाफलस्य कर्त्तृगामित्वे सिद्धे चतुर्थी निर्द्देशोऽतिशयार्थः। नन्वन्यार्थंकृतं कथमन्यस्य स्यादिति तत्राह। प्रतीति। प्रतिमुखं मुखप्रतिविम्बम्। युक्तञ्चेदम्। विष्णावात्मनोविम्ब प्रतिविम्बत्वात्। प्रह्लादः बालान् ७।८।११॥ (१५)

एवं पूर्व्वरङ्गं कृत्वा पादयोर्म्महिमानं द्वाभ्यामाह। तत्पादेति। तस्य वामनस्य चरणक्षालनमुदकं। कल्मषं पापं। स्वेषां पित्रादीनाम्। धर्म्मं विप्रपूजारूपं वेत्तीति स्वधर्म्मविद् वलिः। सुमङ्गलतामाह। यदिति। देवदेवत्वादप्राकृतत्वं। गिरिशत्वान्निरपेक्षत्वम्, चन्द्रमौलित्वात् सालङ्कारत्वम्। एवम्भूतोऽपि दधारेति वस्तुशक्तिः। तत् किमवज्ञया धृतवान्। नेत्याह मूर्द्ध्नेति। नापि व्यलीकेन इत्याह परयेति। शुकः राजानं ८।१८।२८॥ (१६)

यत्पादयोरशठधीः सलिलं प्रदाय-
दुर्वाङ्कुरैरपि विधाय सतीं सपर्य्याम् ।
अप्युत्तमां गतिमसौ भजते त्रिलोकीम्,
दाश्वान विक्लवमनाः कथमार्त्तिमृच्छेत् ॥१७॥
गायन्ति ते विशदकर्म्मगृहेषु देव्यो-
राज्ञां स्वशत्रुवधमात्मविमोक्षणाञ्च ।
गोप्यश्च कुञ्जरपतेर्जनकात्मजायाः,
पित्रोश्च लब्धशरणा मुनयो वयञ्च ॥१८॥
यद्विस्रुतिः श्रुतिनुतेदमलं पुनाति,
पादावनेजनपयश्च वचश्च शास्त्रम् ।
भूःकालभर्ज्जितभगापि यदङ्घ्रिपद्म-
स्पर्शोत्थशक्तिरभि(भि)वर्षति नोऽखिलार्थान् ॥१९॥

---

यदिति। यस्य तव पादयोः सतीं निष्कामाम् सपर्य्यां पूजाम्। उत्तमागतिर्मोक्षः। असौ बलिः। पुनः त्रिलोकीं दाश्वान् दत्तवान्। ऋच्छेत् प्राप्नुयात्। ब्रह्मा त्रिविक्रमम् ८।२३।२७॥ (१७)

अथ चतुर्भिः कीर्त्तिमहिमा गायन्तीति। देव्योदेवस्त्रियः। राज्ञोजरासन्ध बद्धराज्ञां पत्नयः। शत्रुर्जरासन्धः आत्मनां आत्मभूतानाम् प्रेयसीविमोक्षणम्। तस्य च वर्त्तिष्यमाणत्वेऽप्यधुनैव गानम्। निष्फलेनाध्यवसायात्। गोप्यस्त्र शत्रोः शङ्खचूड़स्य वधम्। कुञ्जरपतेर्गजेन्द्रस्यमोक्षणम्। सीतायाश्च। पित्रोर्वसुदेवदेवक्योः। उद्धवः श्रीकृष्णम् १०।७१।९॥ (१८)

यदिति। यद् विस्रुतिर्यस्य श्रीकृष्णस्य विस्रुतिः कीर्त्तिः। इदं

तद्दर्शन स्पर्शानु पथ प्रजल्प-
शय्यासनाशन सयौनसपिण्डबन्धः ।
येषां गृहे निरय वर्त्मनि वर्त्ततां वः,
स्वर्गापवर्गविरमः स्वयमास विष्णुः ॥२०॥
यस्यामलं दिवियशः प्रथितं रसायाम्,
भुमौच ते भुवनमङ्गल दिग्वितानम् ।

---

जगत्पुनाति विश्रुतिनुना वेदैस्तुता । पयोवचश्च जगत्पुनाति । वचः शास्त्रं श्रीभागवतं वेदरूपत्वेनवा हितोपदेशकत्वात् । भगो भजनीयत्वम् । यदङ्घ्रिपद्म स्पर्शेन उद्भूतशक्ति सर्व्वार्थान् वर्षति १०।८२। २८ ॥ (१८)

तद्दर्शनेति । दर्शनं स्पर्शनञ्च अनुपथः अनुगतिश्च । प्रजल्पो-गोष्ठीच शय्याशयनञ्च आसनञ्च अशनं भोजनञ्च । सयौनबन्धः विवाह-सम्बन्धः, सपिण्डबन्धः दैहिकसम्बन्धः । तेन श्रीकृष्णेनसह दर्शना-द्युपलक्षित सयौनसपिण्डबन्धो येषां वोऽस्ति किञ्च येषां वो यदूनां अनुपथः अनुगमनम् । सयौनं योनिसम्बन्धः। सापिण्ड्यं बन्धः सम्बन्धः येषां युष्माकं तस्य विष्णोर्दर्शनादिलक्षणः । गृहेस्थिताना-मप्यास, स्वर्गापवर्गयोर्विरामोयस्मात् सम्बन्धात् । स च स्वयं साक्षात् विष्णोर्वेरास नतु युष्मत् प्रयत्नात् कुरुक्षेत्रेमिलिता राजानः १०।८२। ३० ॥ (२०) (१)

(१) कुरुक्षेत्रम् परमपूततीर्थम्, तथाहि—"इदं वै कुरुक्षेत्रं देवानांदेव यजनं सर्व्वेषां भूतानां ब्रह्मसदनम्" "अविमुक्तं वै कुरुक्षेत्रम्" * * * * इति जावालोपनिषत् १।२। ३।४ श्लोकः ।

मन्दाकिनीति दिवि भोगवतीतिचाधो-
गङ्गेतिचेह चरणाम्बु पुनाति विश्वम् ॥२१॥

इति श्रीवोपदेवविरचिते मुक्ताफले विष्णुप्रकरणं
अधिष्ठानम् नाम प्रथमं समाप्तम् ।
समाप्तश्चतुर्थोऽध्यायः ॥

---

यस्येति। हे भुवनमङ्गल यस्य ते यशो मन्दाकिन्यादि व्याजेन जगत् पुनाति रसा पातालम्। वितानं उल्लोचः। नारदः श्रीकृष्णम् १०।७०।४४॥ (२१) ।*।

इति हेमाद्रिविरचितायां कैवल्यदीपिकायां विष्णु प्रकरणम्
अधिष्ठानम् नाम ( प्रथमम् समाप्तम् ) ॥४॥

# पञ्चमोऽध्यायः ।

## अथ विष्णुभक्तिप्रकरणम् ।

### विष्णुभक्तेर्लक्षणं भेदाश्च ।

तस्मात् केनाप्युपायेन मनः कृष्णे निवेशयेत् ॥१॥

एवं विष्णुं प्रपञ्च्य क्रमप्राप्तं भक्ति प्रकरणमारभते। अथेति वो गृहे विष्णोः विष्णुः स्वयमास आविरभूत् । निरय वर्त्मनि प्रवृत्ति मार्गे वर्त्तमानानां स्वर्गापवर्गाभ्यां विरमति। वितृष्णं करोति। तथा स। ते युष्मं जन्मभाज इति। यद्वातदिति सामान्य निर्देशः। स इत्यर्थः। स विष्णुः स्वयं येषां वो निरयवर्त्तनि संसारकारणे गृहे वर्त्तमानानां अपि बध्यते। मब्बध्यत इति सम्बन्धः। दर्शनादिभिः सम्बन्धः। सतु स्वर्गापवर्गविरमः। आस परमसुखप्रदो वभुव इत्यर्थः। इति श्रीधरी। तत्रापि भक्तेः सामान्य लक्षणं वक्तुमाह। तत्रेति। तत्र विष्णुभक्तेर्लक्षणं भेदाश्च। तस्मादिति। यस्मात् कृष्णएव कैवल्यप्रदः। यद्वा तस्मादुपाय विशेषस्य विवक्षितत्वात्। केनापि विहितेन अविहितेन वा। उपायेन साध्य सिद्धवद्भूत सामर्थ्येन "ननुस्मादादिना कृष्णे सत्त्वोपाधौ ब्रह्मणि निवेशयेत् स्थिरीकुर्य्यात्। लिङ् निर्देशस्यापि विवक्षितत्वात्। उपाय पूर्व्वं भगवति मनः स्थिरीकरणं भक्तिरिति लक्षणार्थः(१)। नतावदस्यासम्भवः-

(१) "सावेश्वरे परानुरक्तिर्भक्तिः इति शाण्डिल्य सू: ११।

—"चतुर्व्विधाभजन्ते मां जनाः सुकृतिनोऽर्ज्जुन" गीता ७।१६ श्लोः।

"पूज्यादिष्वनुराग" इति पाराशर्यः "कथादिष्विति गार्ग्यः"

"आत्मरत्या विरोधेनेति" शाण्डिल्यः, "नारदस्तदर्पिताखिलाचारता तद्विस्मरणे परम व्याकुलतेति"। नारदभक्तिसूत्रम १६।१९ ।

**सा द्वेधा। विहिता अविहिता च, तत्र विहिता-**
**देवानां गुणलिङ्गाना मानुश्रविक-कर्म्मणाम्।**
**सत्त्व एवैका मनसोवृत्तिः स्वाभाविकी तु या ॥२॥**

---

प्रह्लादादौ सुप्रसिद्धत्वात्। न च कर्म्मक्षयार्थे विधिसिद्ध्यर्थयोर्भक्त्योरव्याप्तिः। तयोरपि अन्तःकरणशुद्धिहेतुत्वेन मनोनिवेशहेतुत्वात्। नाप्युन्मादादावभक्तिभूतेष्वव्याप्तिः। तस्यानुपायत्वेन निरस्तत्वात्। शुद्धाया भक्तावुपायानिर्देशादुपायेनेतिलक्षणे नान्तर्भूतमितिशक्यम्। श्रौताभावेऽप्यानुमानिकस्य सम्भवात्। तस्मादनवद्यं लक्षणम्। नारदः युधिष्ठिरं ७।२।३१। (१)

एवं सामान्य भक्तिं लक्षयित्वा इदानी मुपाय भेदात्तद्विशेषानाह। सेति। सा सामान्यरूपा विहिता वेदोक्ता। देवानिति। देवानां चक्षुराद्यधिष्ठातॄणां सूर्य्यादीनाम्। गुणाएव लिङ्गानि ज्ञापकानि येषां ते तथा। ग्राह्यत्वात् तद्यथा 'रूप प्रतिपत्ति कारणपूर्व्विका क्रियात्वात् छिदिक्रियावत् (१) गुणा एव लिङ्गानि नतु गुणवन्तः। तेषां नाशे दुःखापत्तेः। गुणस्य न नाशः ततोऽन्यत्र भावात्। एवञ्च तत्तद्विशेषत्यागात् महासामान्ये सत्वएववृत्तिः। आनुश्रविकानि वेदोक्तान्येव कर्म्माणि (२) तेषां देवानाम्। तद्यथा चक्षुरादिभिर्विहिताएवरूपादयो ग्राह्या नतुसर्वे। आनुश्रविकान्येव कर्म्माणि नतुदृष्टानि। तेषां फलाभावे दुःखापत्तेः, इतरेषां नफलार्थत्वम्। तन्निवृत्त्यर्थत्वात्। यथोक्तम्

"परोक्षवादो वेदोऽयं बालानामनुशासनम्।
कर्म्ममोक्षाय कर्म्माणि विधत्ते ह्यगदं यथा।"

(१) सांख्यतत्त्वकौमुदी ५ श्लोः टीः। इन्द्रियानुमानप्रसङ्गे तत्त्वकौमुदी टीका।

(२) गुरुमुखादनुश्रूयते इत्यनुश्रवो वेदः तत्र भवः आनुश्रविकः वेदोक्तकर्म्मकलापः। सांख्यकारिका ५ टी.।

अनिमित्ता भागवती भक्तिः सिद्धेर्गरीयसी ।
जरयत्याशु या कोशं निगीर्णमनलो यथा ॥३॥

सा द्वेधा, मिश्रा शुद्धा च । मिश्रा त्रेधा । कर्म्ममिश्रा ।१। कर्म्मज्ञानमिश्रा ।२। ज्ञानमिश्रा च ।३। कर्म्ममिश्रा त्रेधा । राजसी, सात्विकी, तामसी च । तामसी त्रेधा । हिंसार्था, दम्भार्था, मात्सर्य्यार्था च ॥४॥

---

इति (१)। सत्वएव न रूपादौ। एकमनसः पुरुषस्य देवानाम्। एकत्रैव मनोयस्य नोभयत्र। अयमर्थः। यद्यपि देवानां सत्त्वे सत्वव्यङ्ग्ये च विष्णौ वृत्तिः तथापि मनसो विष्णावेव। सा च स्वाभाविकी स्वभावेन जाता नोन्मादादिना विकारेण ३।२५।३२ ॥ (२)

अनिमित्तेति। निमित्तेन ख्यातिलाभपूजादिना हीना। भागवती भगवत इयं भजमान भज्यमानयोर्भगवत्त्वात्। यथोक्तं "सर्वभूतेषु यः पश्ये" (२) दित्यादिना सिद्धेर्गरीयसी कैवल्यादधिका। कैवल्ये सुखत्वं। भक्तौतु सुखानुभवः। जरयति नाशयति। कोशं मायावरणम्। निगीर्णभुक्तमन्नम् अस्याश्च विहितत्वे आनुश्रविक कर्म्मणामिति लिङ्गम्। कपिलः देवहूतिम् ३।२५।३३॥ (३)

अथ विहितायाः प्रभेदानाह, सेति। सा विहिता कर्म्मक्रिया धात्वर्थः ज्ञानमात्म विषयः परोक्षोबोधः। हिंसा प्राणवियोजकः व्यापारः दम्भः परवञ्चना। मात्सर्य्यं परोत्कर्षासहिष्णुत्वम्। अभिसन्धायेति। अभिसन्धायोद्दिश्य संरम्भो सक्रोधः। भिन्नदृक्

(१) भागवत ११।२।४४ श्लोः।
(२) " ११।२।४५ "।

अभिसन्धाय यद्धिंसां दम्भमात्सर्य्यमेव वा।
संरम्भीभिन्नदृग्भावं मयि कुर्य्यात् स तामसः ॥५॥

राजसी त्रेधा, विषयार्थी, यशोऽर्थी,
ऐश्वर्य्यार्थी च।

विषयानभिसन्धाय यश ऐश्वर्य्यमेव वा।
अर्च्चादावर्च्चयेद्योमां पृथग्भावः स राजसः ॥६॥

सात्त्विकी त्रेधा। कर्म्मक्षयार्थी, विष्णुप्रीत्यर्थी,
विधिसिद्ध्यर्थी च।

---

भेदं सत्यं मन्यमानः। भावं भक्तिम्। एवं पृथग्भावः। तामसः। तामसभक्तियोगात्। एवं राजसः राजसभक्तियोगात्। एवं सात्त्विकश्च। भक्तस्वरूप कथनेन भक्तिर्लक्षिता। भक्तिप्रयुक्तत्वात्। भक्तशब्दस्य। तत्राभिसन्धानं कर्म्म। तस्य च हिंसादि विषयत्वात्तामसत्वम्। विहितत्वं (१) श्येन न्यायेन। राजसी त्रेधा। विषयार्थी। यशोऽर्थी। ऐश्वर्य्यार्थी च। ता एवाह विषयेति। यशः साधुवादः। ऐश्वर्य्यं अप्रतिहताज्ञत्वम्। अर्च्चादाविति तामसे सात्त्विके च ज्ञेयम् ३।२९।८॥ (५।६)

सात्त्विकी त्रेधा। कर्म्मक्षयार्थी। विष्णुप्रीत्यर्थी, विधिसिद्ध्यर्थी च। कर्म्मेति। कर्म्म पापं। निर्हारः क्षयः। परस्मिन्निति। यदीश्वरं भगवति कर्म्म ब्रह्मनि भावित" (२) मित्युक्तो भगवदादिरूपे तत्त्वे। अतएव हि भगवदादयः सत्त्वगुण त्रिगुणनिर्गुणानां वाचका इत्युक्तम् पर-

---

(१) "श्येनेनाभिचरन् यजेत" इति श्रुत्वधनिमित्तः अभिचाराख्योयागविशेषः। अर्थसंग्रहः १।१।

(२) भागवतं १।५।१२ श्लोकः।

कर्म्मनिर्हारमुद्दिश्य परस्मिन् वा तदर्पणम् ।
यजेद् यष्टव्य मिति वा पृथगभावः स सात्विकः॥७॥

कर्म्मज्ञानमिश्रा त्रिधा । उत्तमा । मध्यमा अधमा च । सत्त्वतारतम्यात् तत्रोक्तम् ।

---

महंस प्रियायाम् (१) यजेत् पूजयेत् । यष्टव्यमिति विधौ कृत्य प्रत्यय अयमर्थे चित्तंहि प्रख्या-प्रवृत्ति स्थिति शीलत्वात् त्रिगुणम् । (तत्र) प्रख्यारूपं (२) हि चित्तसत्त्वं भूयसा तमसा संसृष्टं हिंसाद्युपगं भवति । तथा रजसा संसृष्टमैश्वर्य्यादिप्रियं भवति । तदेव प्रक्षीण-मोहावरणं सर्वतः प्रद्योतमान मनुविद्धं रजोमात्रया भगवत्प्रियादिषु धर्म्मेषु प्रवर्त्तते ॥" कपिलः देवहूतिम् ३।२८।१० ॥ (७)

एवं कर्म्ममिश्रांनवभेदामुक्त्वा कर्म्मज्ञानमिश्रां त्रिभेदामाह । कर्म्मेति । त्रित्वे हेतुमाह । सत्वेति । अयमर्थः ज्ञानं हि सत्वा-दुत्पद्यते । "सत्वात् संजायते ज्ञान" मिति वचनात् (३) । अतः सत्वस्य प्रकर्ष साम्यापकर्षौ । ज्ञानस्य त्रिरूपत्वात् भक्तेस्त्रैविध्यम् । (४) । अथोत्तमा सर्वेति, सर्व्वभूतेषु स्थितस्यात्मनो जीवस्य भगवत्त्वम् । उत्तमभक्तियोगात् । एवं मध्यम प्राकृता । अन्वयः पश्येत् दर्शनंकुर्य्यादिति कर्म्म दर्शनस्य चात्म विषयत्वं ज्ञानम् । आत्मनश्च

(१) एतन्नाम्नी श्रीमद्भागवतस्य वेदान्तसम्मता सुप्राचीना टीका । कैवल्यदीपिका च एतदनु-सारिणी हैमाद्रीया । तदुक्तं कैवल्यदीपिकाप्रारम्भे चान्ते च हरिलीला-भाष्ये "टीकां प्रियां परमहंसजनस्य दृष्ट्वे"ति । (२) योगदर्शनभाष्यं १।२ सूः ।

(३) गीता १४.१७ श्लोः ।

(४ गीता १४।१८ ।

(उत्तमा)

सर्व्वभूतेषु यः पश्येद्भगवद्भावमात्मनः।
भूतानि भगवत्यात्मन्येष भागवतोत्तमः ॥८॥

(मध्यमा)

ईश्वरे तदधीनेषु बालिशेषु द्विषत्सु च।
प्रेममैत्री कृपोपेक्षा यः करोति स मध्यमः ॥९॥

(अधमा)

अर्च्चायामेव हरये पूजां यः श्रद्धयेहते।
न तद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृतः ॥१०॥

भगवत्त्वं भक्तिः। उत्तमत्वं चास्याः सर्व्वभूतस्थितैकात्मविषयेण ज्ञानेन मिश्रत्वात्। ११।२।४५। (८)

अथ मध्यमा। ईश्वरेति। अत्रेश्वरादीनां प्रेमादिभिः क्रमात् सम्बन्धः। ईश्वरे प्रेम्णा विषयरागः पराक्रियते। मैत्र्या ईर्षा। कृपया गर्व्वः। उपेक्षया द्वेषः। ईश्वरो जगत्कारणं मायोपाधिः पुरुषः। तदधीना ईश्वरार्पितप्राणाः। बालिशा मूर्खाः। अत्रेश्वरस्य जगत्कारणत्वाद्यनुसन्धानं ज्ञानं तत्र प्रेमभक्तिः। तत्सिद्धये तदधीनादिषु मैत्र्यादिकरणं कर्म्म। अस्याश्च मध्यमत्वमीश्वरस्य सर्वात्मकत्वे नावगमात् ॥ ११।२।४६ (९)

अथाधमा। अर्च्चायामिति। ईहते करोति। अत्रार्च्चायामेव हरिरस्तीति बोधोज्ञानम्। श्रद्धया तत्पूजनं भक्तिः। तद्भक्तेषु पूजाया अकरणं कर्म्म। अधमत्वञ्चास्यास्तुज्ञानमिश्रत्वात्। हरिः निमित्तम् ॥ ११।२।४७ (१०)

मद्गुणश्रुतिमात्रेण मयि सर्वगुहाशये ।
मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ ॥११॥
लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृतम् ।
अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे ॥१२॥

---

एवं सगुणां भक्तिं निरूप्य निर्गुणामाह। मदिति। सर्वगुहाशये सर्वात्मनि। गङ्गाम्भो हिमपर्वतैः प्रतिबाध्यमानं मयि यथा समुद्रमेवाभिनिविशति। तथा विषयैर्विच्छिद्यमानापि मनोवृत्तिस्तानतीत्य विष्णुमेवेति। अविच्छेदे दृष्टान्त उक्तः निर्गुणो ज्ञानमिश्रः। अत्र च निर्गुणत्वं प्रागुक्तानां गुणकार्य्याणामनुपलम्भात्॥ न चास्या ऐकात्म्यविषयत्वे नोत्तमकर्म्मज्ञानमिश्रयासहाविशिष्टत्वमिति शङ्क्यम्। अत्र प ऐदितिवत् कर्म्मनिर्द्देशाभावात्। नचात्रापि मनोगतिरिति मनोगमनं कर्म्म। यदृच्छोपस्थितगुणश्रुतिमात्रेण स्वभावत एव मनसः प्रवृत्त्या प्रयत्नेन प्रेषणाभावात्। अत्र मयि मनो गतिरिति भक्तिः। तत्रापि सर्वगुहाशये मयीति ज्ञानमिश्रत्वे वीजम्॥३।२९।११ (११)।

एवं मिश्रां भक्तिमुक्त्वा शुद्धामाह। शुद्धेति। अहैतुकीफलाकाङ्क्षारहिता (१)। अव्यवहिता निरन्तरा। अहैतुकीत्वमेवाह। सालोक्येति। यस्यां भक्तौ क्रियमाणायां तुष्टेन भगवता दीयमानमपि सालोक्यादिभक्त्या न गृह्णन्ति। सालोक्यं एकस्मिन् लोके अवस्थानम्। सामीप्यं समीपे अवस्थानम्। सारूप्यं तुल्यरूपप्राप्तिः। सार्ष्टिर्जगत्सृष्ट्यादि वर्ज्जं तुल्यप्रभावत्वम्। एकत्वं चतुर्भुजादिमूर्त्त्यधिष्ठाता पुरुषेण सालोक्यम्। उत अहो देवहूते!॥ ३।२९।१३ (१२)

---

(१) गीता ५।१२।—"युक्तः कर्म्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम्" इति।

सालोक्य सार्ष्टिसामीप्य सारूप्यैकत्वमप्युत।
दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः ॥१३॥
स एव भक्तियोगाख्य आत्यन्तिकमुदाहृतः।
येनातिव्रज्य त्रिगुणान् मद्भावायोपपद्यते ॥१४॥

अयमात्यन्तिकः ततः परं प्रकारान्तराभावात्। एष एव भक्तियोग इत्याख्या इत्याह। (दीयमानमिति)। अन्वर्थत्वेन भक्तिशब्दस्यात्रैव मुख्यत्वात् इतरेषु हि फल एवानुरागो न विष्णौ। फललाभे भक्तित्यागात्। अस्याश्च शुद्धत्वं कर्मज्ञानाभ्यामामिश्रत्वात्। अथास्य चतुर्द्दशविधस्यापि विहितभक्तियोगस्य फलमाह। येनेति। येन भक्तियोगेन। अतिव्रज्य अतीत्य त्रीन् गुणान् तामसादीन् भावान्। मद्भावाय ब्रह्मसायुज्याय उपपद्यते योग्यो भवति। अधमभक्तियोगादुत्तमभक्तियोग्यत्वं अकाम्यमानमपि भवतीति सर्वेषामेकमेव फलम्। कालावलम्बकृतो विशेष इत्यर्थः। कपिलः देवहूतिम्प्रति॥ ३।२९। १४ (१३)

एवं विहितां चतुर्द्दशभेदामुक्त्वा चतुर्भेदामविहितामाह। अविहितेति। कामोऽत्र परपरिगृहीताया अनूढाया वा स्त्रिया परपुरुषे दुरभिसन्धिः। द्वेषोऽप्रीतिः। भयं त्रासः। स्नेहः कामातिरिक्तः सन्निकर्षादिजः परस्परमकृत्रिमश्चित्तबन्धः। कामादित्यादि। यथा विहितया भक्त्येश्वरे मनो निवेश्य केचित्तद्गतिं गच्छन्ति। तथाऽविहितेनापि कामादिना बहवो गता इत्यर्थः। तद्दुरुच्छेदमपि अघं हित्वा त्यक्त्वा। तत्र हेतुरीश्वर इति हेतुगर्भो निर्द्देशः। अयमर्थः। ईश्वरो हि कृपाशालित्वात् प्रभुत्वाच्च कथमेष्वनिविष्टमन्तःकरणम्। अवेक्ष्य भक्तानां फलं प्रसूते। नतूपायविशेषेणैवेति गच्छन्तीत्युक्तत्वा

अविहिता चतुर्धा। कामजा। द्वेषजा। भयजा। स्नेहजा च॥

कामाद्द्वेषाद्भयात् स्नेहाद् यथाभक्त्येश्वरे मनः।
आवेश्य तदघं हित्वा बहवस्तद्गतिं गताः॥१४॥

इति मुक्ताफले विष्णुभक्तेर्लक्षणं भेदाश्च।

---

गता इति भूतत्वनिर्देशादविहितानुष्ठानेऽपि कृतार्थत्वमुक्तम्। तेनान्येषामिह प्रवृत्तिविशेष इत्यर्थः। अविहितत्वं तस्याः कामादेः स्वभावसिद्धत्वेन विध्यनुपयुक्तत्वात्। अप्राप्तो ह्यर्थो विधिगोचरः। (१) "विधिरत्यन्तमप्राप्तौ" इत्युक्तत्वात्। न च 'मनः कृष्णे निवेशये'दिति लिङ्प्रत्ययेन विहितत्वात् अविहितत्वं विप्रतिषिद्धमिति शङ्क्यम्। लिङस्त्वर्थवादविरचितत्वस्य दर्शितत्वात्। नापि बहवस्तद्गतिं गता इत्यर्थवादसामर्थ्यात् अत्रैव विधिकल्पनेति वाच्यम्। अर्थवादेऽपि विधिकल्पनस्याप्राप्तविषयत्वात्। न च गोप्यादिषु साधनतया तस्य दृष्टत्वाद् विहितत्वम्। न हि गोपीनामीश्वरत्वबोधेन भजनं किन्तु जारत्वेन भजमानानां तासां दैवात् तस्येश्वरत्वात्सिद्धिलाभः। तदुक्तम् (२) "तमेव परमात्मानं जारबुद्ध्यापि सङ्गताः। जहुर्गुणमयं देहं सद्यः प्रक्षीणबन्धनाः" इति। ननु यथा गोप्यादीनां भगवत्सन्निधानात् कामाद्युपस्थितिः नाधुनिकेषु सन्निकर्षाभावेन कामाद्युदयाभावाद् व्यर्थः तदुपदेशः। नैवं इदानीमपि विष्णुस्थूलमूर्त्यधिष्ठातरि भगवति कामाच्चित्त स्त्रीणां भावबन्धस्य दृश्यमान

---

(१) "विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति। तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते॥" विधिरसायने. अर्थसंग्रहे च।

(२) भागवते १०।२९।११ श्लो:।

भक्तिष्वधिकारिणः।

**गोप्यः कामाद् भयात् कंसो द्वेषाच्चैद्यादयो नृपाः।**
**सम्बन्धाद् वृष्णयः स्नेहाद् यूयं भक्त्या वयं विभो !॥२५॥**

---

त्वात्। एवमन्यत्र। तस्मात् सिद्धमस्याभक्तौ अविहितत्वम्॥१४॥

इति कैवल्यदीपिकायां विष्णुभक्तौ लक्षणं भेदाश्च॥

एवं द्विरूपायामपि भक्तौनां स्वरूपं निष्कृष्य तास्वधिकारिणं कथयितुमाह। भक्तिष्विति। अवान्तरप्रकरणत्वात् अथशब्दाभावः। तत्राप्युद्दिष्टक्रमानुसारेण विहिताधिकारिषु वाच्येषु प्रत्यासन्नत्वेन बुद्धिस्थत्वात् अविहिताधिकारिण एव प्रथममाह। गोप्य इति॥ कामादिना गोप्यादयः। वयं नारदादयो भक्त्या विहितया तद्गतिं गता इति पूर्वेणैवान्वयः। नन्वत्र कामादीनां पञ्चानामुपलम्भात् कथमविहितायाश्चातुर्व्विध्यम्? तत्राह। सम्बन्धादिति। सम्बन्धेन स्नेहाविशेषः। सम्यग् बन्धः चित्तस्य वशीकारो यस्मात् स्नेहात्। निरतिशयादित्यर्थः। यदि हि सम्बन्धस्नेहयोभिन्नविषयत्वमुच्येत तदा सम्बन्धस्य वृष्णिषु पाण्डवेषु च कृतार्थत्वात् स्नेहग्रहणानर्थक्यं स्यात्। स्नेहादित्यवोच्यमाने स्नेहाभासेति प्रसक्तिः। तदर्थं सम्बन्धविशेषणम्। यद्वा स्नेहेनैव सम्बन्धोविशेषः। स्नेहोऽस्त्यतिशयेन यस्मिन् सम्बन्धे मत्वर्थीयाऽर्शआद्यच् प्रत्ययः (१)। सम्बन्धशब्दस्तु यथास्थितार्थः। अक्रियमाणेऽपि स्नेहग्रहणे दुर्य्योधनादिषु सम्बन्धसद्भावादतिप्रसक्तिः। सम्बन्धादयः स्नेहः। तस्मादिति तु व्याख्याने सम्बन्धग्रहणानर्थक्यम्। कथञ्चित् सम्बन्धस्य सर्व्वत्रसम्भवात्। तस्मात् सम्बन्धस्नेहयोर्विशेषणविशेष्यभावेनैकत्वाद्युक्तम्। चातु-

(१) पाणिनि ५।२।१२७ सू०।

सम्बन्धात् स्नेहाद्वा यूयं युयं चेत्येकभक्त्या
विहितया वयमित्यत्र विभागः ।

निर्व्विण्णानां ज्ञानयोगोन्यासिनामिह कर्म्मसु ।
तेष्वनिर्व्विण्णचित्तानां कर्म्मयोगस्तु कामिनाम् ॥१६॥
यदृच्छया मत्कथादौ जातः श्रद्धस्तु यः पुमान् ।
न निर्व्विण्णो नातिसक्तो भक्तियोगोऽस्य सिद्धिदः ॥१७

विध्यमेवमेवैतत् । यो हि मन्यते । भक्तिव्यतिरेकेन पञ्चानामवोक्ति-रिति । तन्मते "तस्माद्वैरानुबन्धेन निर्वैरेण भयेन वा । स्नेहात् कामेन वा युञ्ज्यात् कथञ्चिद् नेक्ष्यते पृथक् ।" (१) इत्येतद् विरुध्यते । अत्र हि निर्वैरशब्देन भक्तिनिर्देशात् भक्तिसहितानामेव पञ्चानामुक्तिः । अत एवेदमपि युज्यते । (२) "कतमोऽपि न वेणः स्यात् पञ्चानां पुरुषं प्रति" इति । तस्माद् युक्तं व्याख्यातमाचार्य्येण सम्बन्धात् स्नेहात् । यूयं यूयञ्चेत्येकमित्यादिना । नारदः युधिष्ठिरम् ॥ ७।१।३० (१५)

अथ विहितास्वधिकारिभेदमाह । निर्व्विण्णानामिति । न्यासिनां कर्म्मत्यागिनां मध्ये निर्व्विण्णानां वीतरागाणां (३) ज्ञान-योगः ज्ञानमिश्राभक्तिः । तेषु न्यासिषु मध्ये अनिर्व्विण्णानां कर्म्मसु सत्सु ज्ञानयोगः । (कर्म्मज्ञानयोगः) । त्यक्तकाम्यकर्म्मणामप्य-तीव्रवैराग्यानां कर्म्मज्ञानमिश्रा भक्तिरित्यर्थः । कामिनां काम्य-कर्म्मासक्तानां तु कर्म्मयोगः कर्म्ममिश्रैवेत्यर्थः । शुद्धभक्त्यधिकारिण

(१) भागवत ७।१।२५ श्लोः । (२) भागवत ७।१।३१ श्लोः ।

(३) "वीतरागजन्मादर्शनात्" न्यायसू: ३।१।२५ सू०

—"वीतरागभयक्रोधस्थितधीर्मुनिरुच्यते" गीता २।५६ श्लोः ।

यएतान् मत्पथो हित्वा भक्तिज्ञानक्रियात्मकान् ।
क्षुद्रान् कामांश्चलैः प्राणैर्जुषन्तः संसरन्ति ते ॥१८॥
स्वे स्वेऽधिकारे या निष्ठा स गुणः परिकीर्त्तितः ।
विपर्य्ययस्तु दोषः स्याद् उभयोरेषनिश्चयः ॥१९॥

एवं सति कर्म्ममिश्रानेव गृहस्थानाम् । कर्म्म-ज्ञानमिश्रास्तिस्रोवनस्थानाम् । ज्ञानमिश्रैका भिक्षू-

---

माह । यदृच्छयेति । यद्यपि निष्कामैः कर्म्मभिः शुद्धसत्त्वस्य भगवत्कथादौ श्रद्धास्यात् तथापि साधनसहस्रदुर्लभेति द्योतनाय यदृच्छयेत्युक्तम् । भक्तियोगः श्रद्धाभक्तिः । "स एव भक्तियोगाख्य" (१) इत्युक्तत्वात् ॥ ११।२०।७८ (१६-१७) ।

एवमधिकारि भेदं निरूप्य भक्तिहीनान्निन्दति । यएतानिति । मत्पथः मत्प्राप्त्युपायान् । भक्तेति । शुद्धाया भक्तेः । ज्ञानेति । ज्ञानमिश्रायाः । ज्ञानक्रियेति । कर्म्ममिश्राया ज्ञानक्रियेति । समस्तेन कर्म्मज्ञानमिश्रायाः क्षुद्रास्तुच्छाः । कामा विषयाः । जुषन्तः सेवमानाः । संसरन्ति । संसरणं जन्ममृत्यु दुखानुभवः ११।२१।१॥ (१८)

भजमानेष्वपि स्वाधिकारप्राप्त-भूमिकात्यागेन भूमिकोत्तराधिष्ठाने दोषमाह । स्वे स्व इति । उभौ गुणदोषौ । भगवान् उद्धवम् ११।१९।२। (१९)

अथाधिकारि प्रघट्टकार्थं सुखग्रहणाय स्पष्टयति एवमिति । एवं अधिकारिनिर्णये सति तत्रापि प्रकृत्यानुरूपेण सात्त्विक्यादिविभागः

---

(१) भागवतं ३।२९।१४ श्लोः ।

णाम्। शुद्धैका सर्व्वेषाम्। उत्पन्ने ऽनुरागे(ऽनु) उत्पाद्येऽनु यथासम्मिश्राः। अविहितास्वतस्तो गोप्यादितुल्यानाम्। एवमष्टादशभेदाः।

इति श्रीवोपदेवकृते मुक्ताफले भक्तेरधिकारिभेदनिर्णयो नाम पञ्चमोऽध्यायः॥

---

स्वयमुह्यः। गृहस्थेष्वपि निष्कामकर्म्मिणां कर्म्मज्ञानमिश्रैव विदेह याज्ञवल्क्यादयो ह्यत्र निदर्शनम्। भिक्षवोऽत्र परमहंसाः। अन्येषां नैष्ठिकब्रह्मचारिणाञ्च कर्म्मज्ञानमिश्रैव। शुद्धेति। पूर्व्वपूर्व्वभक्त्यभ्यासबलात् रजस्तमःक्षये विशुद्धोर्ज्जिते सत्त्वोद्रिक्ते चेतसि भगवत्यनुरागोदये प्रयत्नमन्तरेण शुद्धा भक्तिराविर्भवतीत्यभिप्रेत्याह। उत्पन्ने तु राग इत्यादि। ततः परमदूरविप्रकृष्टा मुक्तिः। गोप्यादितुल्यानामिति। भगवति प्रभूतकामद्वेषभयस्नेहासक्तानां अन्येषामित्यर्थः। तदेवं मिश्रास्त्रयोदश। शुद्धैका। अविहितास्वतस्तः। इत्यभिप्रेत्य "भक्त्यष्टादशभेदया" (१) इति प्रागुक्तमित्याशयवानुपसंहरति एवमित्युक्तप्रकारेण॥

इति हेमाद्रिविरचितायां कैवल्यदीपिकायां भक्तेर्लक्षणभेदाधिकारि-निर्णयोनाम पञ्चमोऽध्यायः॥

---

(१) एतद् ग्रन्थे १।१ श्लोः।

## षष्ठोऽध्यायः।



### अथ विष्णुभक्तिमहिमा।

यावन्नजायेत परावरेऽस्मिन्,
विश्वेश्वरे द्रष्टरि भक्तियोगः।
तावत् स्थवीयः पुरुषस्य रूपम्
क्रियावसाने प्रयतः स्मरेत ॥१॥
नैष्कर्म्म्यमप्यच्युतभाववर्ज्जितम्,
न शोभते ज्ञानमलं निरञ्जनम्।

एवं सपरिकरां भक्तिं निरूप्य तत्र मुमुक्षोः प्रवृत्तिविशेषार्थन्तन्माहात्म्यमाह। विष्णुभक्तीति। तत्रापरष्टादशभिः पूर्व्वरङ्गं विधास्यन् प्रथमेन भक्तेर्गहन(त)त्वमाह। यावदिति। परावरे कार्य्यकारणरूपे अस्मिन् शास्त्रप्रसिद्धे विश्वेश्वरे विश्वस्य प्रथम कारणे द्रष्टरि साक्षित्वेन निष्पादितकार्य्ये भक्तियोगः। तल्लीलाश्रवणादिभिर्व्विना स्थातुमशक्तिः। स्थवीयः षोड़शकलं स्थूलत्वं नामरूपादिमत्त्वम्। तच्चान्यच्चान्यस्मादतिशयितमितीयसुन् प्रत्ययः (१)। क्रियावसाने षोड़शोपचारपूजानन्तरम्। प्रयतः पूतचित्तः। एवम्भूतो शक्तियोग इयता प्रवन्धेन निष्पाद्यत इत्यस्य सहसा दुर्ल्लभत्वात् गहनत्वमित्यर्थः। शुकः राजानम् ॥ २।२।१४ (१)

(१) पाणिनिः ५।३।५७ सूः।

कुतः पुनः शश्वदभद्रमीश्वरे,
न चार्पितं कर्म्मयदप्यकारणम् ॥२॥
जुगुप्सितं धर्म्मकृतेऽनुशासतः,
स्वभावरक्तस्य महान् व्यतिक्रमः।
यद्वाक्यतो धर्म्म इतीतरः स्थितो-
न मन्यते तस्य निवारणं जनः ॥३॥

---

अथ पञ्चभिः कर्म्मयोगाद् भक्तिमुत्कर्षयन् एकेन भक्तिहीनं कर्म्म-निन्दति (१)। नैष्कर्म्यमिति। नैष्कर्म्म्यं ज्ञानयोगः। अच्युतभावो विष्णुभक्तिः। कुतो न शोभते यतोऽज्ञानमलम्। अज्ञानं मलो दोषो यत्र तत्तथा। तत्कुतः? यतो निरञ्जनम्। निर्गतमञ्जनं ब्रह्मणो व्यञ्जनं सत्वं यस्मात्तत्तथा। अयमर्थः। नैष्कर्म्म्यं हि ब्रह्मज्ञाने प्रधानम्। तच्च सत्त्वगुणे ब्रह्मण्युपासिते भवति। नेतरगुणे निर्गुणे वा। यदा भक्तिहीनं मनः नैष्कर्म्म्यमपि न शोभते तदा कर्म्मपुनः कुत शोभते न कुतोऽपीत्यर्थः। यतःशश्वदभद्रम्। अनुष्ठाने फले चामङ्गलम्। नचेश्वरेर्पित 'नारायणाये'ति येनाभद्रत्वहानिः। ननु किं काम्यकर्म्म निन्द्यते नेत्याह। यदप्यकारणं नित्यं नैमित्तिकञ्च कारणं कामना। नैष्कर्म्म्यमपीत्यपिशब्दात् कर्म्मनिन्दायां तात्पर्य्यम् ॥ १।५। १२। (२)।

मुमुक्षया जिज्ञासुमुपस्थितं शिष्यंप्रति भक्तेरन्यं वर्णयतो विप्रलम्भवञ्चनदोषःस्यादित्याह। जुगुप्सितमिति। जुगुप्सितमधर्म्मसाधनम्। विषयसेवनम्। तत्रैव स्वभावेन रक्तस्य धर्म्मकृते धर्म्माय योऽनुशास्ति

---

(१) "भक्त्यात्वनन्यया शक्यः अहमेवंविधोऽर्जुन!"। गीता ११।५४।

त्यक्त्वा स्वधर्मं चरणाम्बुजं हरे-
र्भजन्नपक्कोऽथ पतेत्ततो यदि ।
यत्र क्व वा भद्रमभूदमुष्य किम्,
कोवार्थ आप्तोऽभजतां स्वधर्मतः ॥४॥
तस्यैव हेतोः प्रयतेत कोविदो-
न लभ्यते यद् भ्रमतामुपर्य्यधः ।

---

तस्य महान् व्यतिक्रमः। यस्मात्तेन गृहीतस्य वाक्यादधर्म्मोऽपि धर्म्मोऽयमिति निश्चित्य स्थितः। ततः प्राकृतोजनः। तस्यान्यथा ग्रहणस्य निवारणमन्यैः क्रियमाणं नमन्यते। तस्योपदेष्टुरयंदोषः। तदुक्तम् "कामिनो वर्णयन् कामान् लोभंलुब्धस्य वर्णयन्। नरः किंफलमाप्नोति कूपेऽन्धमिव पातयन्" इति १।५।१५ ॥ (३)

कश्चिद्विष्णु लीला श्रवणादेः साकारोपासनस्यान्तरङ्गस्य बहिरङ्गे-नाग्निहोत्रादिना व्यवधानंमाभूदिति स्वधर्म्मं त्यजति। कश्चित्तु नित्याकरणे प्रत्यवायभयादीश्वरार्पणेवयथावत्कृतं स्यादिति च भक्तियोगं त्यजति। तयोः प्रथमः श्रेयानिति आह। त्यक्त्वेति। अपक्वः साधकः। अन्त्यभूमिकामप्राप्तः। अथ नित्याकरण प्रत्यावायादनन्तरम्। ततः स्थानाद् यत्रक्वचन स्थाने यदिपतेत्। अमुष्यपतितस्य किमभद्रमभूत् न किमपीत्यर्थः। विष्णुभक्ति-वासना सद्भावादिति भावः। अभजता भक्तिहीनेन स्वधर्म्मतः कोवा अर्थःप्राप्तः नकोऽपीत्यर्थः। विषय सुखे प्राप्तेऽप्यनर्थत्वादित्यर्थः १।५।१७ ॥ (४)

अनर्थत्वमेवाह। तस्यैवेति। हेतोरिति। सप्तम्यर्थे षष्ठी। यत्स्वतः सुखं भ्रमद्भिर्नलभ्यते। कारकोऽस्य शेषत्वविवक्षायां

तृष्णभ्यते दुःखवदन्यतः सुखम्,
कालेन सर्वत्र गभीररंहसा ॥५॥
नवैञ्जनो जातु कथञ्चनाव्रजे-
न्मुकुन्दसेव्यन्यवदङ्गसंसृतिम्।
स्मरन् मुकुन्दाङ्घ्र्युपगूहनं पुन-
र्विहातुमिच्छेन्नरसग्रहोजनः ॥६॥
श्रेयः सृतिं भक्तिमुदस्य ते विभो!
क्लिश्यन्ति ये केवलबोधलब्धये।

षष्ठी (१)। तदर्थं प्रयतेत। यत्त्वन्यतः विषयजन्यं सुखं तत् सर्व्वत्र लभ्यते। नहि दुःखं केनापि प्रार्थ्यते। तत्र हेतुः काले नेति। गभीररंहसा दुर्लक्ष्यवेगेन १।५।१८॥(५)

त्यक्त्वेति श्लोके स्वधर्म्मत्यागेन भजतः पतनमभ्युपेत्याभद्रत्वहानि-मुक्ता इदानीं तु पतनमेव नास्तीत्याह। नैवेति। कदाचित्। प्रमादेनापि संसृतिं नाव्रजेत। अन्यवद् भक्तिहीन स्वधर्मनिष्ठवत्। स यथा स्खलितस्थानाच्च्यवते। तथा नायमिति व्यतिरेकि दृष्टान्त। अङ्ग अहो व्यास। उपगूहनं मानसालिङ्गनम्। रसे रसवति वस्तुनि ग्रहो आग्रहो यस्य स तथा अतएव कथञ्चिद्विस्मृतमपि भक्ति सुखं पुनर्झटिति स्मरति। अतएव न च्यवते। नारदो व्यासम् १।५।१८॥ (६)

अथ पञ्चभिर्ज्ञानयोगाद् भक्तिमुत्कर्षयन् तदेकेन भक्तिं विना आत्मसाक्षात्कारो नभवतीत्याह श्रेयः सृतिमिति। श्रेयः सृतिं मुक्ति-

(१) पाणिनिः २।३।५० सूः।

तेषामसौ क्लेशल एव शिष्यते,
नान्यद् यथा स्थूलतुषावघातिनाम् ॥७॥
अथापि ते देवपदाम्बुजद्वय-
प्रसादलेशानुगृहीत एव हि।
जानाति तत्त्वं भगवन्महिम्नो-
न चान्य एकोऽपि चिरं विचिन्वन् ॥८॥
ज्ञाने प्रयासमुदपास्य नमन्त एव,
जीवन्ति सन्मुखरितां भवदीयवार्त्ताम्।
स्थाने स्थिताः श्रुतिगतां तनुवाङ्मनोभि-
र्यैप्रायशोऽजित-जितोऽप्यसितस्त्रिलोक्याम् ॥९॥

---

मार्गम्। उदस्य त्यक्त्वा क्लिश्यन्ति। शम दमादीन् अनुतिष्ठन्तः श्राम्यन्ति। केवलो बोधोब्रह्मज्ञानम्। क्लेशलः श्रम एव शिष्यते नतुज्ञानम् स्वार्थे लच् प्रत्ययः। मत्वर्थीयानामपि स्वार्थिकत्वं (भु) द्रुमादिवत् १०।१४।४॥ (७)

ननु ज्ञानानामिव कात्स्न्येनानुष्ठानाज् ज्ञानं भविष्यति। किं भक्त्या उपाधिज्ञानाङ्गानुष्ठानेऽपि हि निश्चितं भक्तिस्तु(श्रु)ति मात्रम्। अन्यः भक्ति त्यागेनापि ज्ञानेप्सुः। "एकोविजनस्थः विचिन्वत् आत्मानं पश्यन्" अयमर्थः। तथा साकार भजनेऽनायासेन तत्त्वाधिगमो नैवं सहसा निराकारप्रवेशे। तस्य बहुक्लेशसाध्यत्वात्। तदुक्तम् "क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्"(१) इति। तस्मात् साधनान्तरे अमंहित्वा जिज्ञासुना भक्तिवैरानुसर्त्तव्येत्याह, ज्ञान

(१) गीता १२।५ श्लो:।

पुरेह भूमन् बहवोऽपि योगिन-
स्त्वदर्पितेहा निजकर्म्मलब्धया ।
विबुध्य भक्त्यैव कथोपनीतया,
प्रपेदिरेऽञ्जोऽच्युत ते गतिं पराम् ॥१०॥
तत्तेऽनुकम्पां सुसमीक्षमाणो
भुञ्जान एवात्मकृतं विपाकम् ।
हृद्वाग्वपुर्भिर्विदधन्नमस्ते,
जीवेत यो मुक्तिपदे स दायभाक् ॥११॥

इति। ज्ञाने ज्ञानविषये प्रयासं श्रमाद्यनुष्ठानं हित्वा भवदीयानां विष्णुभक्तानां वार्त्तां कथां नमन्त य)न्तः (मानवाः) श्रवणादिभिराद्रियमाणा एव जीवन्ति। नान्यत्कुर्व्वन्ति सन्तोमुखरिता यया वाचंयमा अपि सन्तः कथासौन्दर्य्याद्वाचालतां भजन्तीत्यर्थः। स्थानएवस्थिताः। नतुतीर्थविशेषे। श्रुतिः "कश्वेदस्य अस — — — इति संशय वचन मुक्ति विशेषार्थम्। यद्यपि समन्ये रजितः। तथापि कथारूप मर्म्म ज्ञानाद् भक्तैर्ज्जितो वशीकृतोऽसि — — ज्ञातोऽसीत्यर्थः १०।१४।३ ॥ (८)

उक्तेऽर्थे सदाचारं प्रमाणयति। पुरेति। हेभुमन् व्यापिन् योगिनोऽपि इत्यपि शब्दाद् योगेन विलम्बितां सिद्धिमालोक्य भक्तिश्रिता इत्युक्तम्। त्वदर्पितेति विशेषणत्रयेण तत्त वाङ्मनोभिरित्येतद्विवृतम्। तत्र ईहामनश्चेष्टेति। मनसो व्यापार उक्तः। निजकर्म्मेति कायस्य, कथेति वाचः। उपनीता निकटीकृता भक्त्यैव न साधनान्तरेण। विबुध्य ब्रह्माऽस्मीति निश्चयेन ज्ञात्वा।

केचित् केवलया भक्त्या वासुदेवपरायणाः।
अघं धुन्वन्ति कार्त्स्न्येन नीहारमिव भास्करः ॥१२॥
न तथाह्यघवान् राजन् पूयेत तप आदिभिः।
यथा कृष्णार्पित-प्राणस्तत्पुरुष-निषेवया ॥१३॥

---

अञ्जः सुखेन परां गतिं यतः परां गम्यं नास्ति। ते अच्युतस्य गतिम्। अच्युतस्थानम् ॥ १०।१४।५ (१०)

एवं ज्ञानयोगादुत्कर्षमुक्त्वोपसंहरति। तदिति। तत् तस्मादात्मकृतं स्वकर्मविपाकं विविधफलं भुञ्जान एव नत्वन्यान्यारभमाणः। दायभागिति वाचोयुक्त्या मुक्तौ दायवदनपह्नवनीयत्वाद् आवश्यकत्व-मुक्तम्। ब्रह्मा श्रीकृष्णम् ॥ १०।१४।८ (११)

ननु किं भक्त्या प्रायश्चित्तैरेव पापक्षयात् सत्त्वशुद्धौ ज्ञानमुदेष्यतीति चेत्तत्राह। केचिदिति। केचित् केवला प्रायश्चित्तनिरपेक्षा कार्त्स्न्येनेति। यथा प्रायश्चित्तभेदाच्छिन्न (भिन्न)पापक्षयः नैवमहेत्युक्तम्। भक्तिस्त्वेकैवसर्वपापक्षये क्षमित्यर्थः। तदेव दृष्टान्तेन व्यङ्क्त्या। नीहारं हिमम् ॥ ६।१।१५ (१२)

प्रायश्चित्तैः सावशेषाशुद्धिः (१)। भक्त्या तु पुनः पापप्रवृत्ति-निवारणादात्यन्तिकीत्याह। न तथेति। हे राजन् परीक्षित्! आदिशब्दाज् जनपदान् तीर्थादयः। प्राणो जीवनम्। तत्पुरुषेषु वैष्णवेषु निषेव्या। वैष्णवो हि मुख्यमधिष्ठानं विष्णोः। न चाधिष्ठानं विना भक्तिः ॥ ६।१।१६ (१३)

(१) "प्रायश्चित्तानि पापक्षयमात्रसाधनानि चान्द्रायणादीनि"। वेदान्तसारः १।१।४। "प्रयतत्वादोपचितमशुभं नाशयती"ति प्रायश्चित्तमिति हारीतः। पापक्षयमात्रसाधनं कर्म।

सध्रीचीनोह्ययं लोके पन्थाः क्षेमोऽकुतोभयः ।
सुशीलाः साधवो यत्र नारायण-परायणाः ॥१४॥
प्रायश्चित्तानि चीर्णानि नारायण पराङ्मुखम् ।
न निष्पुनन्ति राजेन्द्र ! सुराकुम्भमिवापगाः ॥१५॥
एतावतालमघ निर्हरणाय पुंसाम्,
संकीर्त्तनं भगवतो गुणकर्म्मनाम्नाम् ।
विक्रुश्य पुत्त्रमघवान् यदजामिलोऽपि,
नारायणेति म्रियमाण इयाय मुक्तिम् ॥१६॥

---

किञ्च प्रायश्चित्तेभ्यो भक्तिरविघ्नेत्याह । सध्रीचीन इति । सध्रीचीनः साधुः । यत्र भक्तिमार्गे साधवः साधन भूताः साधनवैगुण्या-द्विघ्नः ॥ ६।१।१७ (१४)

इतोऽपि तेभ्यो भक्तिर्विशिष्टेत्याह । प्राय इति । न निष्पुनन्ति । निश्शेषेन न पवित्रयन्ति । नारायणपराङ्मुखं यथा स्यात्तथा चीर्णानि । अयमर्थः । भक्तिहीनैः प्रायश्चित्तं ज्ञानपूर्वेषु पापेषु न कर्मक्षयः । किन्तु व्यवहार्य्यत्वमात्रम । तत्सहिते स्तयेवाह्यमपीति भक्तं विशि-ष्टम् । अतएव वहिः शुद्धिः प्रायश्चित्तैरन्तःशुद्धिस्तु भक्तैवेति दृष्टा-न्तेन व्यञ्जितम् ॥ ६।१।१८ (१५)

भक्तैव सर्व्वपापक्षय इत्यत्र निदर्शनमाह एतावतेति । गुणाः सौन्दर्य्यादय । कर्म्माणि सृष्ट्यादीनि । नामानि नारायणादीनि एषा मन्यतमस्य संकीर्त्तनं पापक्षयाय समर्थं इत्येतावताऽनेनैव ज्ञात-व्यम् । यदजामिलापि मुक्तिमवाप । अजामिं अकुलीनां स्त्रियं दासीं लाति गृह्णातीति अजामिलः । सोऽपीत्यपिशब्दार्थः । नारायणेति

प्रायेण वेद तदिदं न महाजनोऽयम्,
देव्याविमोहितमतिर्वत माययालम् ।
त्रय्यां जडीकृतमतिर्मधुपुष्पितायाम्,
वैतानिके महति कर्म्मणि युज्यमानः ॥१७॥
एवं विमृश्य सुधियो भगवत्यनन्ते,
सर्वात्मना विदधते खलु भावयोगम् ।
ते मे न दण्डमर्हन्त्यथ यद्यमीषाम्,
स्यात्पातकं तदपि हन्त्युरुगायवादः ॥१८॥
ते देवसिद्धपरिगीत पवित्रगाथा-
ये साधवः समदृशो भगवत्प्रपन्नाः ।

---

विक्रुश्य । सम्यक् कीर्त्तयित्वा तत्र पुत्रं विक्रुश्य न तु हरिम् । किञ्चाघगानशुचिरपि अस्वस्थचित्तोपि म्रियमाणः ॥ ६।३।२४ (१६)

नन्वेवञ्चेत् किमिति सर्व्वे भक्तिमेव नानुतिष्ठन्तीत्यत आह । प्रायेणेति । तदिदं भक्तिमाहात्म्यम्, मधुना मधुरेणार्थवादेन पुष्पिता फलाशाभावदा न तु कदाचित् फलिता । वैतानिके (१)यज्ञसम्बन्धिनि महति बहुक्लेशे मायामोहितत्वेन श्रद्धाजाड्यादेवधर्म्मेषु प्रवर्त्तन्ते । न तु भक्तावित्यर्थः ॥ ६।३।२५ (१७)

अमोहितास्तु भक्तिमेवानुतिष्ठन्ति इत्याह, एवमिति । भावो भक्तिः । सेयमस्य अयापि प्रमादेनेत्यर्थः । उरुगायो विष्णुः । वादः संकीर्त्तनम् ॥ ६।३।२६ (१८)

---

(१) आश्वलायन श्रौतसूत्रम् १।२।५

तान्नोपसीदत हरेर्गदयाभिगुप्तान्,
नैषां वयं न च वयः प्रभवाम दण्डे ॥१९॥
तानानयध्वमसतो विमुखान् मुकुन्द-
पादारविन्दमकरन्दरसादजस्रम् ।
निष्किञ्चनैः परमहंसकुलैरसङ्गै-
र्जुष्टाद् गृहे निरयवर्त्मनि बद्धतृष्णान् ॥२०॥
जिह्वा न वक्ति भगवद्गुणनामधेयम्,
चेतश्च न स्मरति तच्चरणारविन्दम् ।
कृष्णाय नो नमति यच्छिर एकदापि,
तानानयध्वमसतोऽकृतविष्णुकृत्यान् ॥२१॥
पानेन ते देव कथासुधायाः,
प्रवृद्धभक्त्या विशदाशया ये ।

---

एवं पूर्वरङ्गं कृत्वा भक्तस्तुतिद्वारा भक्तिसामान्यं स्तौति। ते देवेति। नोपसीदत समीपं मागच्छत। भयं कालः ॥ ६।३।२७ (१९)

तर्हि कान् प्रति प्रतिगन्तव्यमिति तानाह। तानानयध्वमिति। ताननुभूतान्। असकृदत्रागमनात्। अनुभूतवाची तच्छब्दो यच्छब्दं नापेक्षत इति प्रागुक्तम्। अजस्रं जुष्टात् ॥ ६।३।२८ (२०)

वैमुख्यमेव दर्शयति। जिह्वेति। गुणं सत्त्वादिकमधिकृत्य प्रवृत्तं नाम यद् येषाम्। यमः स्वदूतान् ॥ ६।३।२९ (२१)

ननु सांख्ययोगाभ्यामबलाद् विविक्तप्रकृतिपुरुषस्य मृत्युभयं न भविष्यति किं भक्त्या तत्राह। द्वाभ्यां पानेनेति। प्रथमं कथासुधापानम्। ततः कथानायके भक्तिः। ततोऽन्यत्र वैराग्यम्। ततः

वैराग्य सारं प्रति लब्धबोधम्,
यथाञ्जसान्वीयु विकुण्ठधिष्ण्यम् ॥२२॥
तथापरेचात्म समाधियोग-
बलेन जित्वा प्रकृतिं बलिष्ठाम्।
तामेव धीराः पुरुषं विशन्ति,
तेषां श्रमः स्यान्न तु सेवया ते ॥२३॥
अहो ममामी वितरन्त्यनुग्रहम्,
हरिं गुरुं यज्ञ भुजामधीश्वरम्।
स्वधर्म्मयोगेन यजन्ति मामका-
निरन्तरंक्षौणितले दृढव्रताः ॥२४॥

---

कथानायकस्वरूपज्ञानम्, ततः समाधिः। अविच्छिन्नचित्तत्वं तदर्थं योगः स्वपदः प्राप्तिः ॥३।५।४६। (२२)

यथायंमार्ग (१) स्तथाऽन्योऽपीत्याह। आत्मनः (स्वस्य समाधिरविच्छिन्नचित्तत्वं तदर्थं योगो) (२) यमनियमादिसेवा। तद्बलेन प्रकृतिजयः। ततस्तद्रहित पुरुषप्राप्तिः। अनयोर्मार्गयोर्मध्ये द्वितीयेश्रमः। तत्त्वानि विष्णुम् ॥३।५।४७। (२३)

एवं भक्तिं सामान्यं स्तुत्वा तद्विशेषान् स्तुवानः सात्त्विकी स्तिस्र स्त्रिभिः स्तौति। अहो इत्यादिना। अहो सभ्याः, मम पृथोः।

---

(१) "विच्छिन्ने चेतसि विक्षेपोपसर्ज्जनीभूतः समाधिर्योग पक्षे नवर्त्तते।" अतो योगोऽविच्छिन्न चित्तत्वं सन्ततं भगवदेकनिष्ठा इत्यर्थः। योगदर्शन १।२। सू: भाः।

(२) अयमधिकपाठः क्वचित् पुस्तकेऽस्ति।

मन्ये धनाभिजनरूप तपः श्रुतौजः,
तेजः प्रभावः बलपौरुषबुद्धियोगाः ।
नाराधनाय हि भवन्ति परस्य पुंसो-
भक्त्या तुतोष भगवान् गजयूथपाय ॥२५॥

विप्राद् द्विषड्गुणयुतादरविन्दनाभ-
पादारविन्दविमुखाच्छ्वपचं वरिष्ठम् ।
मन्ये तदर्पित मनोवचनेहितार्थ-
प्राणं पुनाति सकुलं न तु भूरिमानः ॥२६॥

---

अमी महेश्वादिनो यजन्ति पूजयन्ति । अत्र धर्म्माणि विधि सिद्धार्थी स्तुता पृथः सम्यान् ॥४।२१।३६। (२४)

अभिजनं कुलम् । तपः कृच्छ्रादि । श्रुतं शास्त्रम् । ओजो मनः पाटवम् । तेजः कान्तिः । प्रभावः शौर्यादि । बलं देहसौष्ठवम् । पौरुषं सम्भावना । बुद्धिर्मेधाशक्तिः । योग उद्यमः हि यस्मात् धनादिहीनाय गजयूथपाय भक्त्यैव तुतोष । अत्र कर्म्म तयार्थो । गजोऽपि कर्म्मत्यागार्थं स्तुतवान् ॥७।९।९। (२५)

द्विषड् द्वादशगुणाः । धनाभिजनादयः । यद्वा (१) "शमो दमस्तपः शौचं क्षान्त्यार्जव विरक्तता । ज्ञान विज्ञान सन्तोष सत्यास्तिक्य द्विषड्गुणाः ।" इत्यत्रोक्ताः । षड्गुणा इति पाठे यजनादयः (२) । श्वपचमन्त्यजम् । ईहितं कायचेष्टा अर्थः पश्वादि ।

(१) श्रीमद्भागवतसप्तमस्कन्धीय नवमाध्याय-दशमश्लोकटीकायां श्रीधरस्वामिधृत महाभारतवचनम् ।

(२) "अध्ययनमध्यापनं यजनं याजनं तथा ।
दानं प्रतिग्रहश्चैव षट्कर्माण्यग्रजन्मनाम् ॥" मनुसः १।८८ ।

देवर्षि भूताप्त नृणां पितृणाम्,
न किङ्करो नायमृणी च राजन्!।
सर्व्वात्मना यः शरणं शरण्यम्,
गतो मुकुन्दं परिहृत्य कर्त्तम् ॥२७॥
स्वपादमूलं भजतः प्रियस्य,
त्यक्तान्यभावस्य हरिः परेशः।
विकर्म्म यच्चोत्पतितं कथञ्चि-
द्धुनोति सर्वं हृदि सन्निविष्टः ॥२८॥

---

प्राणोजीवनम्। स श्वपचः। भूरिमानो बहुगर्व्वो विप्रः। अनेन विष्णु प्रीत्यर्थं अत्र हि वाक्ये सर्व्वस्य भगवदर्पणे तात्पर्य्यम्। प्रह्लादोनृसिंहम् ॥७।९।१०। (२६)

अथ कर्म्मस्थानमिश्रां राभ्यां स्तुवन् तत्कर्म्म विधि निषेधातीततां दर्शयति। देवेति। ...नृणां अवसरे प्राप्तानामतिथीनामित्यर्थः। वैश्वदेव (१) ब्रह्मयज्ञ भूतबल्यतिथि पूजा नित्य श्राद्धाख्य पञ्च महायज्ञ करनेन देवादीनां नायमधोनः... अकरने ऋणी। सर्वात्मना सवभूतेषु भगवद्भाव दर्शनेन कर्मभेदं 'कृतोच्छेदने' (२) इत्यस्वरूपम् ॥११।५।४१। (२७)

विध्यतीततामुक्ता निषेधातीता माह। स्वपादेति। अन्यभावो भेदबुद्धिः। विकर्म्म पापम्। उत्पतितं अकस्मादुपघटितम्।

---

(१) "पाठो होमश्चातिथीना सपर्य्या तर्पणं बलिः।
एतेपञ्चमहायज्ञा ब्रह्म यज्ञादि नामकाः॥" स्मृतिः। मनुः ३।७०।

(२) "कृतोच्छेदने" इत्यस्याद्धातोः 'कर्त्तम् इतिरूपम् (श्रीधरः)।

शुद्धि नृणां नतथेड्य दुराशयानाम्,
विद्याश्रुताध्ययनदानतपक्रियाभिः ।
सत्त्वात्मनामृषभ ते यशसि प्रवृद्ध-
तच्छ्रद्धया श्रवणसंभृतया यथास्यात् ॥२९॥
तेनाधीत श्रुतिगणा नोपासीत महत्तमाः ।
अव्रतास्तप्त तपसः सत्सङ्गान्मामुपागताः ॥३०॥
बाध्यमानोऽपि मद्भक्तो विषयैरजितेन्द्रियः ।
प्रायःप्रगल्भया भक्त्या विषयैर्नाभिभूयते ॥३१॥

---

कथञ्चित् प्रमादेन । ननु निष्कामस्य भजनं नतु पापक्षयार्थं इत्यत आह हृदिसन्निविष्ट इति । वस्तुसामर्थ्यादित्यर्थः । करभाजनः निमिम् ॥११।५।४२। (२८)

वस्तुसामर्थ्यमेवाह । शुद्धिरिति । हे ईड्यस्तुत्य ! विद्या वैश्वानराद्युपासना । (१) श्रुतं शास्त्रम् । अध्ययनं वेदाक्षर ग्रहणम् दानं हिरण्यादेः सत्पात्रेऽर्पणम् । जपोमन्त्रावृत्तिः । क्रिया अग्निहोत्रादि कर्म । सत्वात्मनां ऋषभः सात्त्विक श्रेष्ठः विशुद्धो-र्जित सत्त्वकारणात् । ब्रह्माद्याः श्रीकृष्णम् ॥११।६।९। (२ )

उक्तेऽर्थे निदर्शन माह । तेनेति । ते दैत्यादयः । अव्रताश्च ते अतप्त तपस श्च । श्रीकृष्ण उद्धवम् ११।१२।७। (३०)

अस्याश्च प्रवृत्तायां विषयाद्यनर्थश्च शाम्यतीत्याह ।, बाध्येति द्वाभ्याम् । भस्मसात् करोति कात्स्न्येन भस्मीकरोति । कृष्णः स संस्कारात्वि ११।१४।१८। (३१)

---

(१) "सम्प्रतीमात्मानं वैश्वानरमध्येति" छान्दोग्ये ५।११।४।

यथाग्निः सुसमृद्धार्च्चिः करोत्येधांसि भस्मसात्।
तथा मद्विषया भक्तिरुद्धवैनांसि कृत्स्नशः ॥३२॥
न साधयति मां योगो न साङ्ख्यं धर्म्म उद्धव!।
न स्वाध्यायस्तपस्त्यागो यथाभक्तिर्ममोर्ज्जिता ॥३३॥
भक्त्याऽहमेकया ग्राह्यः श्रद्धयात्मा प्रियः सताम्।
भक्तिः पुनाति मन्निष्ठा श्वपाकानपि सम्भवात् ॥३४॥

संसारसिन्धुमतिदुस्तरमुत्तितीर्षो-
र्नान्यः प्लवो भगवतः पुरुषोत्तमस्य।
लीलाकथा रस-निषेवनमन्तरेण,
पुंसो भवेद्विविधदुःखदवार्द्दितस्य ॥३५॥

---

अथ ज्ञानमिश्रां त्रिभिः स्तौति। न साधयतीति। न साधयति न वशीकरोति। "योग श्चित्तवृत्ति निरोधः" (१) साङ्ख्यं प्रकृति पुरुष-विवेकः (२) धर्म्मो नित्यनैमित्तिकानुष्ठानम्। स्वाध्यायो मन्त्रजपः (३) तपः पराकादि। त्यागः सन्न्यासः ऊर्ज्जिता उत्कटाः ११।१४।२०। (३२)

अपि सम्भवात्सम्भवादपि। सम्भूतमात्रापि पुनाति। किं पुनः प्रौढ़ा? श्वपाकोऽन्त्यजः। श्रोकृष्ण उद्धवः ११।१४।२१। (३३)

अन्तरेण विना। दावोवनवह्निः। अतोर्ज्जितैका लीलाकथेति

---

(१) योगदर्शनं १।१।२ सूः।

(२) सांख्यशास्त्रोक्त-प्रकृतेः सत्त्वाद्या पुरुषो भिन्नः पुरुषात् प्रकृतिर्भिन्नावेत्यवं रूपो मोक्षो-पायः सत्वपुरुषान्यताख्याति ज्ञानमिति।

(३) "तपः स्वाधायेश्वर प्रणिधानानि नियमाः" इत्यत्र सूत्रे व्याख्यातम् —"स्वाध्यायः प्रणवादि पवित्राणां मन्त्राणां जप" इति।

अकामः सर्वकामोवा मोक्षकाम उदारधीः ।
तीव्रेण भक्तियोगेन यजेत पुरुषं परम् ॥३६॥
यत्पाद पङ्कज पलाश विलास भक्त्या,
कर्म्माशयं ग्रथित मुद्ग्रथयन्ति सन्तः ।
तद्वन्नरिक्तमतयो यतयोऽपिरुद्धः,
स्रोतो गणास्तमरणं भज वासुदेवम् ॥३७॥
नालं द्विजत्वं देवत्वं ऋषित्वं वाऽसुरात्मजाः ।
प्रीणनाय मुकुन्दस्य नवृत्तं न बहुज्ञता ॥३८॥

---

पदानि ज्ञानमिश्रत्वेवोजम् । शुकः राजानम् १२।४।४०॥(३४-३५)

अतःपरं शुद्ध भक्तिं स्तौति । अकाम इति । अकामोभक्तिमान्सर्व-कामः । सर्वेषु उक्तानुक्तेषु कामोयस्य । भक्तियोगः श्रद्धा-भक्तिः परं पुरुषं विष्णुम् । शुकः राजानम् २।३।१०। (३६)

मुक्तिकामस्तु विशेषतो भक्तिमेवाद्रियते इत्याह । यत्पादेति । पलाशं दलम् । अङ्गुल्या अवयवः । विलासः सौन्दर्य्यम् । कर्म्माण्या-शेरतेऽस्मिन्निति कर्म्माशय श्चित्तम् । ग्रथितं गुम्फितम् । उद्ग्रथ-यन्ति त्रैगुण्यं ग्रन्थिं भिन्दन्ति । रिक्तमतयः सोऽस्मीति भावुकाः । स्रोतः इन्द्रियम् । तद्वन्नोद्ग्रथयन्ति । यद्वत्पूर्णमतयः तं प्रपद्य (स्तइति)। भावुकाः । भेदभावनायां त्वयं पृथगस्तीतिमतेः पूर्णत्वम् । अभेदभावनायान्तु ज्ञातैवेति रिक्तता । अरणं शरणम् । कुमाराः पृथुम् ४।२२।३८ ॥ (३७)

न चास्या मन्येष्विव वृत्तजात्याद्येव प्रयोजक मित्याह । नाल-मिति । हे असुरात्मजाः ! दैत्यपुत्राः वृत्तं सदाचारः ७।८।५१ ॥ (३८)

न दानं न तपोनेज्या नशौचं न व्रतानिच।
प्रीयतेऽमलयाभक्त्या हरिरन्यद्विडम्बनम् ॥३९॥
रायः कलत्रं पशवः सुतादयो-
गृहामही कुञ्जर कोष भूतयः।
सर्व्वेऽर्थकामाः क्षणभङ्गरायुषः,
कुर्व्वन्ति मर्त्तस्य कियत् प्रियञ्चलाः ॥४०॥
एवंहि लोकाः क्रतुभिः कृता अमी,
क्षयिष्णवः सातिशया न निर्म्मलाः;
तस्माददृष्ट श्रुत दूषणं परम्,
भक्त्योक्तयेशं भजतात्म लब्धये ॥४१॥
भयन्द्वितीयाभिनिवेशतः स्या-
दीशादपेतस्य विपर्य्ययोऽस्मृतिः।
तन्मायथातोबुध आभजेत्तम्,
भक्त्यैकयेशं गुरुदेवतात्मा ॥४२॥

---

व्रतानि हरिदिनोपवासादीनि। अमला शुद्धा तया। विडम्बनं जीवनाय नटनम ७।८।५२॥ (३९)

ननु किं भगवत् प्रीत्या दृष्ट श्रुतविषयैरेवात्म-प्रीतिर्भविष्यतीति तत्राह। द्वाभ्यां राय इति। रायोधनानि। भूतिरैश्वर्य्यम्। कामाः कामसाधनानि। क्षणभङ्गुरायुषोमर्त्त्यस्य। यतश्चलाश्चपलाः (परोत्कर्षादसूयकाः)। प्रह्लादः बालान् ७।८।३९।४०। (४०-४१)

एकया इत्युक्तम्। तत्र हेतुमाह। भयमिति। द्वितीये

भक्तिःपरेशानुभवो विरक्ति-
रन्यत्र चैषत्रिकएककालः ।
प्रपद्यमानस्य यथाश्नतःस्यु-
स्तुष्टिः पुष्टिः क्षुदपायोऽनुघासम् ॥४३॥
इत्यच्युताङ्घ्रिं भजतोऽनुवृत्त्या,
भक्ति र्विरक्तिर्भगवत् प्रबोधः ।
भवन्ति वै भागवतस्य राजन् !
ततः परां शान्तिमुपैति साक्षात् ॥४४॥

---

देहादावभिनिवेशाद् यद्भयं तत्तन्मायायास्यात् । किन्तद्भयं इत्यत आह । ईश्वरादुपाधिना पृथग्भूतस्य । विपर्ययः (१) संसारित्वम् । भ्रम ईश्वरत्वास्मृतिश्चेति । गुरौ देवताबुद्धिः ११।२।३७॥ (४२)

यदाचैवं भक्तिर्जायते अतएव सगुणोपासनादुपास्य साक्षात्कारे सति तस्यात्मतया स्फुरणात्तत्त्वैवानुपाधिः प्र (प्रे) मा । अविद्याया-श्चावरकत्वनिवृत्तिरात्मकामता च भवतीत्याह । भक्तिरिति । भक्ति-प्रेमात्मिका । यया विष्णुं विना क्षण मपि न वितिष्ठते । तत आत्मनोब्रह्मत्वानुभवः । तस्य च परमानन्द रूपतया अन्यत्र विरक्तिः अरुचिः । प्रपद्यमानस्य भक्त्यङ्गवर्गेण भजतः । एककालत्वे दृष्टान्तः । यथेति । यथा भुञ्जानस्य प्रतिग्रासं सुखर्लब्धिः क्षुधानिवृत्तयः स्युः ११।२।४२॥ (४३)

त्रिषु जातेषु कृतकृत्यतामाह । इतीति अनुवृत्तिरविच्छेदः । कविः निमिम् ११।२।४३॥ (४४)

---

(१) विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम्, योगदर्शन १।१।७ सः ।

एवं सुरासुर गणाः समदेशकाल-
हेत्वर्थ कर्म्ममतयोऽपि फलेविकल्पाः।
तत्रामृतं सुरगणा फलमञ्जसापू-
र्यत्पादपङ्कज रजः श्रयणान्न दैत्याः ॥४५॥
यद्युज्यतेऽसु वसु कर्म्ममनो वचोभि-
र्देहात्मजादिषु नृभिस्तदसत् पृथक्त्वात्।
तैरेव सद्भवति यत्क्रियतेऽपृथक्त्वात्,
सर्व्वस्य तद्भवति मूल निषेचनं यत् ॥४६॥
न तेऽरविन्दाक्ष पदोपसर्पणम्,
मृषाभवेत् सर्व्व सुहृत् प्रियात्मनः।
यथेतरेषां पृथगात्मनां सता-
मदीदृशो यद्वपुरद्भुतं हिनः ॥४७॥

भक्त्यैव फलावाप्तिरित्यत्र निदर्शनमाह। एवमिति। हेतुः साधनम्। अर्थः प्रयोजनम्। कर्म्म उद्यमः फले विकल्पाः। षष्ठीस्थाने योगेतिवद् "संज्ञायामप्यलुक्" (१)। अञ्जसा। अक्लेशेन ८।९।२८॥ (४५)

गृहे एवमशक्तस्यापि भगवत् प्रीत्या उपायमाह। यदिति। यज्युज्यते तत्परीभूयते। असवः प्राणाः। तैर्देहादिभिः अपृथक्त्वात् सर्वात्मकविष्णाराधन बुद्ध्या। विष्णुर्हि मूलम्। शुकः ८।९।२९॥ (४६)

नच राजादिवद्विष्णु भजने फलविकल्प इत्याह, नते इति।

(१) पाणिनिः (९६५) ६।३।९।

तस्मिन् भवन्तावखिलात्महेतौ,
नारायणे कारण मन्त्यमूर्त्तौ ।
भावं विधत्ते नितरां महात्मन् !
किम्वावशिष्टं युवयोः सुकृत्यम् ॥४८॥

यत्पाद सेवाभिरुचिस्तपस्विना-
मशेषजन्मोपचितं मलंधियः ।
सद्यः क्षिणोत्यन्वह मेधती सती,
यथा पदाङ्गुष्ठ विनिःसृता सरित् ॥४९॥

नह्यतोऽन्यः शिवः पन्था विशतः संसृताविह ।
वासुदेवे भगवति भक्तियोगा यतो भवेत् ॥५०॥

---

सुखत्वात् प्रत्युपकारमुपकारकत्वं प्रियत्वात् सुखसेव्यत्वम् । आत्मता-त्विकहस्थत्वम् । यद्यस्मात् पृथगात्मनः भेदबुद्धीनामपि नोऽस्मान् । अद्भुतं मात्स्यं वपुरीदृशं दर्शितवानसि । वैवस्वतः भगवन्तम् ८।२४।३०॥ (४७)

भगवत् प्राकट्ये सति कृतार्थतामाह । अस्मिन्निति । आत्मता-त्विकं रूपं हेतुनिर्मित्तम् । कारणेन सृष्ट्यादिना मूर्त्तिर्यस्य । तत्वतस्त्वमूर्त्तिः । भावं चित्तवृत्तिम् । हे महात्मन् नन्द युवयोः । यशोदानन्दयोः । उद्धवः नन्दयशोदे १०।४६।३३॥ (४८)

तस्मिन्नित्युक्तं स क इति तमाह । यत्पादेति । तपस्विनां तापत्रयासन्तप्तानां मलं कालुष्यम् । क्षिणोति नाशयति । एध तीवर्द्ध-माना विषय सौन्दर्य्यात् । सती साध्वी विषय विशुद्धत्वात् । पृथुः सभ्यान् प्रति ४।२१।३१॥ (४९)

शुद्धभक्तेरन्यमुपायं षड्भिर्निन्दति । वस्तुतो गहनत्वेन निरा-

धर्म्मः सत्यदयोपेतो विद्या वा तपसान्विता।
मद्भक्त्योपेतमात्मानं न सम्यक् प्रपुणाति हि ॥५१॥
कथं विना रोमहर्षं द्रवता चेतसा विना।
विनानन्दाश्रुकलया शुध्येद्भक्त्या विनाशयः ॥५२॥
यथाग्निना हेममलं जहाति-
ध्मातं पुनःस्वं भजते च रूपम्।
आत्मा च कर्म्मानुशयं विधूय,
मद्भक्तियोगेन भजत्यथो माम् ॥५३॥
तापत्रयेणाभिहतस्य घोरे,
सन्तप्यमानस्य भवाध्वनीश।

---

कारत्वे प्रतिपत्तये पुनः पुनर्वचनं न दोषायेत्याह। न ह्यत इति। इहदृष्ट श्रुत सुखरूपायां संसृतौ। भगवतीति विशेषणं विषयसौन्दर्य्यादेव भक्तिनिर्व्वाह इत्येवमर्थं शुकः २।२।३३॥ (५०)

धर्म्मइति। आत्मानश्चित्तम् ११।१४।२२॥ (५१)

पुतात्मनश्चिह्नान्याह। कथमिति। प्रत्येकं विनाशब्दस्य निर्द्देशाद् रोमहर्षादीनां प्रत्येकं शुद्धिहेतुत्वम् ११।१४।२३॥ (५२)

भक्त्या सवासन चित्तशुद्धिरिति। दृष्टान्तेन स्पष्टयति यथेति। ध्मातं तप्तम्। कर्म्मानुशयो लिङ्गदेहम् (१)। भक्तियोगेन भजतीति भक्तिरेव भजनहेतुर्न फलाकाङ्क्षेत्युक्तम्। अतोऽशुद्ध्यनन्तरम्। भगवान् उद्धवम् ११।१४।२५॥ (५३)

---

(१) ज्ञानेन्द्रियपञ्चकं कर्म्मेन्द्रियपञ्चकं पञ्चप्राणाः, बुद्धिमनसी एतैः संघटितो देहः।

पश्यामि नान्यच्छरणं तवाङ्घ्रि-
द्वन्द्वातपत्रादमृताभिवर्षात् ॥५४॥
मन्येऽकुतश्चिद् भयमच्युतस्य,
पादाम्बुजोपासनमत्र नित्यम् ।
उद्विग्नबुद्धेरसदात्मभावाद्-
विश्वात्मना यत्र निवर्त्तते भीः ॥५५॥
राजन् पतिर्गुरुरलं भवतां यदूनाम्,
दैवं प्रियः कुलपतिः क्व च किङ्करो वः ।
अस्त्वेवमङ्ग भगवान् भजतां मुकुन्दो-
मुक्तिं ददाति कर्हिचित्स्म न भक्तियोगम् ॥५६॥

---

शरणमाश्रयः अमृतं सुधा मोक्षश्च । उद्धवः श्रीकृष्णम् ११।१९।-९॥ (५४)

मन्ये इति । असति देहादावात्मभावादुद्वेगः । नन्वमरत्वमप्यकुतश्चिद्भयं नेत्याह । विश्वात्मना कार्त्स्न्येन, अमरत्वन्तु सावधिकमित्यर्थः । "आभूत संप्लवं स्थानममृतत्वञ्च भाष्यते" इति वचनात् कविः निमिम् ११।२।३३॥ (५५)

शुद्ध भक्तिर्मुक्तेरपिदुर्लभा इत्याह, राजन्निति । राजन् हे परीक्षित् । पतिः दृष्टोपद्रवनिवारणात् । गुरुर्हितोपदेशात् । भवतां पाण्डवानाम् । दैवमदृष्टोपद्रव निवारणात् । प्रियः प्रीतिजननात् । कुलपतिः पोषणात् । किङ्करः आज्ञाकरणात् । अतः कारणादेवमस्तु । मुकुन्दो मुक्तिं ददाति न तु भक्तिम् । भक्तिदाने हि भक्तस्य सन्निधानं कार्य्यं न मुक्तिदाने । शुकः ५।६।१८॥ (५६)

यस्यास्ति भक्तिर्भगवत्यकिञ्चना,
सर्वैर्गुणैस्तत्र समासते सुराः।
हरावभक्तस्य कुतोमहद् गुणाः,
मनोरथेनासति धावतो बहिः ॥५७॥
तस्माद्रजोराग विषादमन्यु-
र्मानस्पृहा भयदैन्याधि मूलम्।
हित्वा गृहं संसृति चक्रवालम्,
नृसिंहपादं भजताकुतोभयम् ॥५८॥
न युज्यमानयाभक्त्या भगवत्यखिलात्मनि।
सदृशोऽस्ति शिवः पन्थायोगिनां ब्रह्मसिद्धये ॥५९॥
इति वोपदेव-विरचिते मुक्ताफले भक्तिमहिमा-
प्रकरणम्। षष्ठोऽध्यायः ॥

---

भजमानः पुमान् देवैरप्याश्रियत इत्याह। यस्येति। अकिञ्चना शुद्धा सुराः इन्द्रादयः। गुणा ऐश्वर्य्यादयः। गुणैः समासते। गुणद्वारा सम्यगवसन्तीत्यर्थः। महतामिन्द्रादीनां गुणा महद्गुणाः असति विषये ५।१८।१२॥ (५७)

शुद्ध भक्तिं स्तुत्वोपसंहरति तस्मादिति। रजो रजःकार्य्यं तृष्णादि। रागः स्नेहपाशः। मन्युः क्रोधः मनोदर्पः। आधिर्मनोव्यथा। संसृतीनां दुरव (स्व, य) स्थानाम्। चक्रवालं मण्डलम् यस्मिन् गृहे। प्रह्लादः नृसिंहम् ५।१८।१४॥ (५८)

किं बहुना भक्तिमेवैकामाद्रियध्वमिति आह, नेति। युज्यमाना क्रियमाना। ब्रह्मसिद्धिर्मोक्षः। कापिलः देवहूतिम् ३।२५।१९॥ (५९)

इति हेमाद्रिकृतायां कैवल्यदीपिकायां भक्तिमहिमाप्रकरणम्।
षष्ठोऽध्यायः ॥

# सप्तमोऽध्यायः ।

## अथ विष्णुभक्त्यङ्गवर्गप्रकरणम् ।

### तत्र विष्णुभक्त्यङ्गवर्गलक्षणं भेदाश्च

कायेन वाचा मनसेन्द्रियैर्वा,
बुद्ध्यात्मना वानुसृतस्वभावात् ।
करोति यद्यत् सकलं परस्मै,
नारायनायेति समर्पयेत्तत् ॥१॥

---

तदेवं भक्ति प्रकरणमुपायत्वेनेत्युक्तम् । तत्रेतिकर्त्तव्यतां वक्तु मिदमारभ्यते । अथेति । तत्राप्यङ्ग सामान्यं लक्षयति । कायेनेति । मनसा संशयः । इन्द्रियैश्चक्षुरादिभिरूपोपलम्भादि बुद्ध्यान्निश्चयः आत्मना अहङ्कारेणाभिमानः । वाशब्दश्चार्थे । तेनानुक्तस्य सङ्कल्प हेतोर्महत्तत्त्वस्य समुच्चयः । इन्द्रियैरित्येव सिद्धे कायाद्युक्तिरेकैक-व्यापारस्याप्यङ्गत्वार्थम् । अतएव तुल्य कक्षाणां विकल्पार्थः प्रथमो-वाशब्दः । यद् यदिति । वोप्सया सर्वस्य यावद्देहं क्रियमाणस्यार्प-णमित्युक्तम् । तत् किं निषिद्ध मप्यनुमतं नेत्याह । स्वभावमिति । स्वस्य भाव्यतं प्राप्यते शास्त्रेनेति स्वभावम् । स्वविहितमित्यर्थः । तथापि किं विशिष्ट निस्तारबुद्ध्यार्पयेद् नेत्याह । अनुसृत इति । आत्मेश्वरयोः स्व स्वामि भावानुसन्धान मनुसरणं परस्मै भग-वदादिरूपाय । इति शब्दः प्रकारे । तेनेदं नारायणायेत्यनेन प्रकारेणार्पयेत्, नान्यथेत्यर्थः । अत्रहि चतुर्थी निर्द्देशात्तादर्थ्यऽव-गमात् सङ्कल्प मित्यन्वयः । ततश्च भगवदर्थत्वेन सर्वस्य सत्कर्मणः करणं भक्त्यङ्गमिति लक्षणार्थः । कविः निमिम् ११।२।३६ ॥ (१)

स एकोनविंशतिधा । षड्विंशवर्गः । त्रिंशद्वर्गः । षड्विंशतिवर्गः । पञ्चविंशतिवर्गः । चतुर्व्विंशतिवर्गः । विंशतिवर्गः । एकोनविंशतिवर्गः । अष्टादशवर्गः । पञ्चदशवर्गः । त्रयोदशवर्गः । द्वादशवर्गः । एकादशवर्गः । दशवर्गः । नववर्गः । सप्तवर्गः । षड्वर्गः । पञ्चवर्गः । चतुर्वर्गः । त्रिवर्गः । एते त्रयः यथोत्तरमन्तरङ्गाः ॥

तत्र षड्विंशवर्गः ।

तस्माद् गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तमम् ।
शाब्दे परे च निष्णातं ब्रह्मण्युपशमाश्रयम् ॥२॥

एवं वर्गलक्षणमुक्त्वा तद्भेदान् वक्तुमाह । स इति । स वर्गः । नन्वेकोनविंशतौ वर्गेषु किमुत्तरोत्तरस्य पूर्व्वं पूर्व्वबाधकत्वं किम्वा यवब्रीहिवत् सर्वेषां विकल्पः । आद्ये सर्वबाधकस्यैव कथनेन चरितार्थत्वाद् अन्योन्यानर्थक्यम् । द्वितीये विषमशिष्टा विकल्पानुपपत्तिरितिचेत्तत्राह । एते चेति । अन्तरङ्गत्वञ्च पूर्व्वं पूर्व्वस्माद्वर्गाद् उत्तरोत्तरस्मिन् सारभूतानामङ्गानां उपलम्भात् । वस्तुतस्त्वेकस्मिन्नेव सर्व्वं व (स) ङ्गावादेकवर्गत्वम् । अवस्थाभेदेन तत्तदङ्गपरित्यागाद् अनेकत्वम् । तत्र षड्विंशवर्गं दर्शयन् द्वाभ्यां पूर्व्वरङ्गमाह । तस्मादिति । तस्माच्छ्लोकद्वयस्यापि सदोषत्वात् प्रपद्येत निर्विघ्नः "समित् पाणिराचार्य्यमुपतिष्ठेत्" (१) श्रेय उत्तमम् । श्रेयःसु सत्कर्म्मसु मध्ये उत्तमं भक्त्याङ्गाख्यम् । शाब्दे ब्रह्मणि वेद

(१) मुण्डकोपनिषत् १।२।१२॥

तत्र भागवतान् धर्म्मान् शिक्षेद् गुर्व्वात्म दैवतः ।
अमाययाऽनुवृत्त्या यैस्तुष्येदात्मात्मदो हरिः ॥३॥
सर्व्वतो मनसोऽसङ्गमादौ सङ्गञ्च साधुषु ।
दयां मैत्रीं प्रश्रयञ्च भूतेष्वद्धा यथोचितम् ॥४॥
शौचं तपस्तितिक्षाञ्च मौनं स्वाध्यायमार्ज्जवम् ।
ब्रह्मचर्य्यमहिंसाञ्च समत्वं द्वन्द्वसंज्ञयोः ॥५॥

---

तात्पर्य्य विचारेण । परे चापरोक्षानुभवेन, निष्णातं निष्ठाप्राप्तम् । उपशमाश्रयमित्यनेनैव शिष्यवात्सल्यादयोऽन्येऽपिगुणाः ज्ञेयाः ११।३।२१॥ (२)

तत्रेति । तत्रगुरुकुले । गुरुरेव आत्मा-दैवतञ्च यस्य । आत्म-वद्देवञ्चगुरु संस्कुर्य्यादित्यर्थः । गुरु भक्त्याहि सर्वं सफलं, तदुक्तम् । "यस्यदेवे पराभक्तिर्यथा देवे तथागुरौ । तस्यैते कथिताह्यर्थाः प्रकाशन्ते महात्मन" इति । माया कपटम् । अनुवृत्तिः शुश्रूषा । यै धर्म्मैर्हरिस्तुष्येत । ननु कथं ज्ञेया हरि तुष्टिः । तत्राह । आत्मातुष्येत् । आत्मतुष्ट्या विष्णु-तुष्टिरनुमेया । विष्ण्वात्मनोर्विम्बप्रति-विम्बत्वादित्यर्थः । ननु हरौ तुष्टे किं तत्राह । आत्मद इति ११।३।२२॥ (३)

यथाज्ञान्याह । सर्वत इति । सर्वत्र (तः) इहामुत्र भोगेषु । असङ्गं अनासक्तिम् (अ) शिक्षेदिति सर्वैर्द्वितीयान्तैः सम्बध्यते । सङ्गः साविध्यं यथोचितमिति क्रमाद् दुःखि सुखि पुण्यवत्सु ददातीति त्रीणि । प्रश्रयोविनयः । अद्धा तत्त्वतः ११।३।२३॥ (४)

शौचमिति । शौचं मृज्जलाद्यैर्वाह्यम् । रागद्वेषादिराहित्यमा-न्तरम् । तपः एकादश्युपवासादि स्वधर्म्मनिष्ठा वा ॥ मौनं अभा-

सर्वत्रात्मेश्वरान्वीक्षां कैवल्यमनिकेतताम्।
विविक्तचीरवसनं सन्तोषं येन केनचित् ॥६॥
श्रद्धां भागवते शास्त्रेऽनिन्दामन्यत्र चापि हि।
मनो वाक्कर्म्मदण्डञ्च सत्यं शमदमावपि ॥७॥
श्रवणं कीर्त्तनं ध्यानं हरेरद्भुतकर्म्मणः।
जन्मकर्म्मगुणानाञ्च तदर्थेऽखिलचेष्टितम् ॥८॥
इष्टं दत्तं तपो जप्तं वृत्तं यच्चात्मनः प्रियम्।
दारान् सुतान् गृहान् प्राणान् यत् परस्मै निवेदनम् ॥९॥

---

षणं मितभाषणं वा :—क्षमा स्वाध्यायोद्वादशाक्षरादि मन्त्र जपः। आर्ज्जवं सरलता—ब्रह्मचर्य्यं यस्य यथायोग्यम्। गृह स्थानां ऋतौ स्वदारगमनम्। अन्येषान्तु "स्मरणं कीर्त्तनं केलिः प्रेक्षणं गुह्यभाषणम्। सङ्कल्पोऽध्यवसायश्च क्रिया निर्वृति-रेवच" इति। अष्टाङ्ग मैथुनं वर्ज्जं ब्रह्मचर्य्यम्। अहिंसा द्रोहाद्य-करणम्। द्वन्द्वसंज्ञयो मानापमानादिकयोः समत्वं तुल्य बुद्धित्वम्, ११।३।२४॥ (५)

सर्वत्रेति। सर्वभूतेषु आत्मनः आत्मन ईश्वरत्वे नानुवृत्त्या दर्शनम्। कैवल्यमेकाकिता अनिकेततां स्थानाभिमानराहित्यम्। विविक्त चीरवसनं पूतवस्त्रखण्ड परिधानम्। यदृच्छालब्धेनालं बुद्धिः सन्तोषः ११।३।२५॥ (६-७)

श्रद्धामिति भगवत् प्रतिपादके शास्त्रे श्रद्धाम्। अन्यप्रतिपाद-केचानिन्दा मित्येकम्। दण्ड दुःसङ्कल्प पारुष्यचापलानां त्यागः। सत्यं मृषावादवर्ज्जनम्। शमः विषये भ्योबुद्धेरुपरतिः॥ दम-श्चक्षुरादीनाम्। च शब्दो भिन्नक्रमः ११।३।२६॥ (८)

एवं कृष्णात्मनाथेषु मनुष्येषु च सौहृदम् ।
परिचर्य्याञ्चोभयत्र महत्सु नृषु साधुषु ॥१०॥
परस्परानुकथनं पावनं भगवद्यशः ।
मिथोरतिर्मिथस्तुष्टिर्निवृत्तिर्मिथ आत्मनः ॥११॥
स्मरन्तः स्मारयन्तश्च मिथोऽघौघ हरं हरिम् ।
भक्त्या सञ्जातया भक्त्या बिभ्रत्युत्पुलकां तनुम् ॥१२॥

---

श्रवणमिति । हरेर्जन्मादीनां श्रवणादित्रयम् तदर्थं हर्य्यर्थं सर्व्वचेष्टा ११।३।२७॥ (९)

इष्टमिति भावे क्तः । वृत्तमाचारतः प्राप्तस्याचरणम् । षष्ठी विषये द्वितीया । इष्टादेर्द्दारादेश्च तादर्थ्यम् । परस्मै इन्द्रादये सनिवेदनं समर्पणम्, यत्तस्यापि तादर्थ्यं शिक्षेत् । अत्राखिल चेष्टित शब्देन निर्द्देशात् । एकैकत्वं दारादीनां तादर्थ्यं शुश्रूषया ११।३।२८॥ (१०)

एवमिति । एवं यथाकृष्णे तथेत्यर्थः । कृष्ण आत्मा नाथो-धीर्येषां तेषु । सौहृदं अनिमित्तं बन्धुत्वम् । मनुष्येष्विति जाति विशेष विवक्षार्थम् ॥ किन्तदुभयं तदाह । महत्स्विति । महान्त उत्कृष्टाः साधवः सदाचाराः उभय ग्रहणमभेदेन परिचर्य्यार्थम् ११।३।२९॥ (११)

परस्परेति । अनु अनुवृत्त्या विच्छेदेन कथनं शिक्षेत् । किम्भूतं कथनं भगद्यशः भगवतोयशो यस्मिन् अनुकथने । किमिति परस्परं तत्राह मिथ इति । रतिर्भगवति इत्यर्थात्सिद्धम् । तुष्टिः सुखं । निवृत्तिरित्यर्थमिदम् । तुष्टिः सुखम् । निवृत्ति स्तापापगम इति इयमात्मनः । एतत्त्रयं परस्पर मनुकथनादे स्यात् । नैकाकीतयेति वक्तुं मिथः शब्दत्रयम् ११।३।३०॥ (१२)

क्वचिद्रुदन्त्यच्युतचिन्तया क्वचित्,
हसन्ति नन्दन्ति वदन्त्यलौकिकाः ।
नृत्यन्ति गायन्त्यनुशीलयन्त्यजम्,
भवन्ति तूष्णीं परमेत्यनिर्वृताः ॥१३॥

इति भागवतान् धर्म्मान् शिक्षन् भक्त्या तदुत्थया ।
नारायण परो मायां मञ्जु स्तरति दुस्तराम् ॥१४॥

षट्त्रिंशद्वर्गः ।

सत्यं दया तपः शौचं तितिक्षेक्षा (ज्या) शमोदमः ।
अहिंसा ब्रह्मचर्य्यञ्च त्यागः स्वाध्याय आर्ज्जवम् ॥१५॥

---

स्मरन्त इति । स्वरन्तः स्वयम् ११।३।३१॥ (१२)

यतोऽन्येषां अथषट्त्रिंश .वर्गानुष्ठानस्य फलमाह । भक्त्येति भक्तिरङ्गवर्ग भजनम् । तथा भक्तिः प्रेम । उत्पन्न भक्तेश्चिह्ना-न्याह । विभ्रतीति । उत्पुलकां उद्गतरोमाञ्चाम् । क्वचिदिति रुदन्ति आनन्दाश्रूणि विमुञ्चन्ति । नन्दन्ति सुखमनुभवन्ति । अलौकिकाः लोकव्यावृत्ताः । अजं विष्णुम् । अनुशीलयन्ति तल्लीलामभिनयन्ति । अतः परं विष्णुं एत्य साक्षात्कृत्य तूष्णीं भवन्ति । उपशाम्यन्ति । यतोनिवृत्ताः समाप्तपरमानन्दाः ११।३।३२॥ (१३)

कुतः पुनरेषामङ्गत्व मित्यत आह इतीति । तदुत्थया भागवत धर्म्मोत्थया भक्त्या रङ्गत्वे लिङ्गमितिभावः । प्रबुद्धोनिमिम् । ११।३।३३॥ (१४)

त्रिंशद्वर्गमाह । सत्यमिति । इज्या भगवदुद्देशेन हविस्त्यागः त्यागः काम्यनिषिद्धकर्म्मणाम् ७।११।८॥ (१५)

सन्तोषः समदृक्सेवा ग्राम्येहोपरमः शनैः ।
नृणां विपर्य्ययेहेक्षा मौनमात्म विमर्षणम् ॥१६॥
अन्नाद्यादेः सम्बिभागो भूतेभ्यश्च यथार्हत ।
तेष्वात्म देवताबुद्धिः सुतरां नृषु पाण्डव ! ॥१७॥
श्रवणं कीर्त्तनं चास्य स्मरणं महतां गतेः ।
सेवेज्या-वनतिर्दास्यं सख्यमात्मसमर्पणम् ॥१८॥
नृणामयं परोधर्म्मः सर्व्वेषां समुदाहृतः ।
त्रिंशल्लक्षणवान् राजन् सर्वात्मायेनतुष्यति ॥१९॥

सन्तोष इति । समदृशः रिपुमित्रोदासानेषु तुल्य बुद्धयः । ग्राम्येहा विषयार्थं चेष्टा, नृणां विपर्य्ययेहेक्षा । स्वस्वार्थमिति । सुखार्थं प्रयत्नस्य दुःखफलत्वावेक्षणं । आत्मनोऽसङ्गोदासीनतया,नु सन्धानम् । अन्नाद्यं भक्ष्य भोज्यादि । आदिशब्दात् फल मूलादेश्च । भूतेभ्यःश्वकाकातिथिजलचरादिभ्यो गृहस्थाद्यैः विभागः । यथार्हत इति । यस्य यत्संविभागोऽर्हता तथा तस्येत्यर्थः । तेषु भूतेषु । आत्मनः ईश्वरत्वेन ज्ञानम् । विशेषतोमनुष्येषु । ज्ञानाधिक्यात् । हे पाण्डव युधिष्ठिर ! । अस्येत्यभिनयेन पुरतः स्थं श्रीकृष्णम् निर्द्दिशति । महतां गतेर्गम्यस्य सेवा चित्तानुवृत्तिः । साचास्य श्रुति स्मृतिरूपज्ञानलङ्घनात् इज्यापूजा । अवनतिः । प्रणामः । दास्यं किङ्करत्वम् । सख्यम् । "अहितात् प्रतिषेधश्च हिते चैव प्रवर्त्तनम् । व्यसनेचाऽपरित्यागः त्रिविधं सखि-लक्षणम् ॥" इत्यत्रोक्तस्य सखिधर्म्मस्य भगवत्त्वेन भावनम् । अन्यानि तु स्वगतानि । आत्मसमर्पणं स्वशरीरेऽस्य स्वातन्त्र्यालक्षणसङ्गम् ॥ येन धर्म्मेन साक्षादधर्म्मान्तरानुष्ठानमाव्यव-

हंसे गुरौमयि भक्त्या ऽनुवृत्त्या,
वितृष्णायाद्वन्द्वतितिक्षया च।
सर्वत्र जन्तोर्व्यसनावगत्या,
जिज्ञासया तपसेहा निवृत्त्या ॥२०॥
मत्कर्म्मभिर्मत्कथयाच नित्यम्,
मद्देव सङ्गाद् गुणकीर्त्तनान्मे।
निर्वैरसाम्योपशमेन पुत्त्राः।
जिहासया देहगेहात्म बुद्धेः ॥२१॥
अध्यात्मयोगेन विविक्त सेवया,
प्राणेन्द्रियात्माभि जयेन सध्र्यक्।
सत्श्रद्धया ब्रह्मचर्य्येणशश्वत्,
असम्प्रमादेन यमेन वाचाम् ॥२२॥

---

धानेन। शेषं प्राग्वत्। नारदः युधिष्ठिरम् ७।१।९-१०-११-१२ (१६-१७-१८-१९)

षड्विंशतिवर्गमाह। हंसेत्यादि। अनुवृत्तिः परिचर्य्या। सा च भक्त्या तात्पर्य्येण। नतु यथाकथञ्चित्। हंसे गृहमार्ज्जनादिका (१) गुरौ लब्धार्पणादिका (२) वितृष्णा दृष्ट श्रुत विषये वैतृष्णाम् (३) द्वन्द्वं शीतोष्णादि (४) सर्व्वत्र ब्रह्मपदादिषु व्यसनं कालभयम् (५) जिज्ञासा आत्मनः (६) तपः अयाचितादि (७) ईहानिवृत्ति वर्ज चेष्टा (यः) त्यागः (८) मत्कर्म्मभिर्मदर्पित कर्म्मभिः (९) मत्कथाकथनं मन्यं प्रति (१०) अहं देवोयेषां तेमद्देवा विष्णुभक्ताः (११) कीर्त्तनं एकाकिना (१२) निर्वैरमहिंसा (१३) साम्यं

सर्वत्र मद्भाव [illegible],
ज्ञानेन विज्ञान विराजितेन।
योगेन धृत्युद्यमसत्त्वयुक्तो,
लिङ्गं व्यपोहेत् कुशलोऽहमाख्यम् ॥२३॥
स्वधर्माचरणं शक्त्या विधर्माच्च निवर्त्तनम्,
दैवाल्लब्धेन सन्तोष आत्मविच्चरणार्च्चनम् ॥२४॥

---

शत्रुमित्रोदासीनेषु तुल्यबुद्धिता (१४) उपशमो निरभिमानता (१५) ईं पुत्रा देहेगृहेचाहंममेतिबुद्धेर्हानिच्छया (१६) अध्यात्मयोगो-मोक्षशास्त्राभ्यासः (१७) विविक्तमेकान्तः (१८) प्राणादीनामभिजयः क्रमात् प्राणायाम प्रत्याहार धारणादिभिः। अत्र प्राणायामादि बहुत्वेऽप्यभिजयस्यैकत्वादेकत्वम् (१९) सत्सु श्रद्धासम्यग्बुद्धिः (२०) ब्रह्मचर्यं प्राग्वत् (२१) संमं प्रमादोभक्तिसाधनानामभावना (२२) वाचंयमोमौनम् (२३) सर्व्वत्रस्थिरचरेषु मद् भावो मत् सत्ता विज्ञायते दृश्यते येनतत्तथा। "सर्व्वं खल्विदं ब्रह्म" (१) त्याद्युपनिषदुत्थोबोधोज्ञानम् (२४) अनुभवो विज्ञानम् (२५) विराजित सुपबृंहितम्। योगोनिरोधसमाधिः (२६) धृतिः धैर्य्यफलसिद्धौ विकल्पनाभावः। उद्यमोऽनलसत्वम्। सत्वं क्लेश सहनत्वम्। एतान्यधिकारि-विशेषत्वादुपाङ्गानि। नत्वङ्गानि, अतएवैषां तृतीयया पञ्चम्यावाननिर्देशः। कुशलः प्रत्यहं विशेषद्रष्टृ निपुणः। लिङ्गदेहंव्यपोहेद मोक्तुंचमः। अहमहङ्कारः। ऋषभः पुत्रान् ५।५।१०।११।१२।१३॥ (२०-२१-२२-२३)

पञ्चविंश वर्गमाह। स्वधर्मेति। विधर्मोनिषिद्धः परधर्मश्च।

---

(१) छान्दोग्य ३।१४।१

ग्राम्यधर्म्म निवृत्तिश्च मोक्षधर्म्म रतिस्तथा।
मितमेध्याशनं शश्वद्विविक्तक्षेमसेवनम् ॥२५॥
अहिंसा सत्यमस्तेयं यावदर्थ परिग्रहः।
ब्रह्मचर्य्यं तपःशौचं स्वाध्यायः पुरुषार्च्चनम् ॥२६॥
मौनं सदासनजयः स्थैर्य्यं प्राणजयः शनैः।
प्रत्याहारश्चेन्द्रियाणां विषयान् मनसाहृदि ॥२७॥
स्वधिष्ण्यानामेकदेशे मनसा प्राणधारणम्,
वैकुण्ठलीलाभिध्यानं समाधानं तथात्मनः ॥२८॥
एतैरन्यैश्च पथिभिर्मनोदुष्टमसत्पथम्,
बुद्ध्या युञ्जीतशनकैर्ज्जित प्राणोह्यतन्द्रितः ॥२९॥

---

ग्राम्यधर्म्मस्त्रीद्युतादि सेवा। मेध्यं भिक्षा हविष्यादि, मितन्तु (१) "अर्द्धं सव्यञ्जनान्नस्य तृतीय मुदकस्य च। वायोः सञ्चरणार्थञ्च चतुर्थमवशेषयेत्॥" इति क्षेमं मशकाद्यनुपहतम् स्तेय मविधिना द्रव्यादानम्। पुरुषोविष्णुः। स्थैर्य्यमचञ्चलत्वम्। प्राणजयः प्राणायामः। शनैः सहसा। आसनादिलक्षणम् जपोपायश्च पातञ्जले (२)। हृदिमनोऽधिष्ठाने। प्रत्याहारः प्रत्यानयनम् (३)। धिष्ण्यानां प्रागुक्तानां हृदयपुण्डरीकादिस्थानानाम्। एकदेशे विशिष्टा प्राणधारणाकार्य्या। प्राणित्यस्मादितिप्राणश्चित्तम्। "देशबन्ध-

(१) द्वौ भागौ पूरयेदन्नैस्तोयेनैकं प्रपूरयेत्।
वायूनां परिचारार्थं चतुर्थ-मवशेषयेत्॥ वैद्यके।

(२) यो: द: २।१ सू:। "तज्जपस्तदर्थभावनम्"—जपः प्रणवादिमन्त्राणां द्वादशाक्षरषड़क्षरमन्त्राणां वा।

(३) "स्वविषयाऽसम्प्रयोगे चित्तस्य स्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः" २।५४ सूः।

मल्लिङ्ग मद्भक्तजन दर्शनस्पर्शनार्चनम्।
परिचर्य्या स्तुतिःप्रह्वगुणकर्म्मानुकीर्त्तनम् ॥३०॥
मत्कथाश्रवणे श्रद्धामदनुध्यानमुद्धव!।
सर्व्वलाभोपहरणं दास्येनात्मनिवेदनम् ॥३१॥
मज्जन्मकर्म्मकथनं मम पर्व्वानुमोदनम्।
गीतताण्डववादित्र गोष्ठीभिर्म्मद्गृहोत्सवः ॥३२॥
यात्राबलिविधानञ्च सर्व्ववार्षिकपर्व्वसु।
वैदिकी तान्त्रिकीदीक्षा मदीय व्रतधारणम् ॥३३॥

---

श्चित्तस्य धारणे"ति हि पातञ्जले। एकस्मिन् देशे चित्तं धार्य्यमित्यर्थः। लीलास्मितावलोकादि समाधानं ध्यातुर्ध्येयरूपेणावस्थानम्। एतैरिति। स्वधर्म्माचरणाद्यैर्जितप्राणैर्जितचित्तः। अन्यैः कामादिभिर्दुष्टं सदसन्मार्गगमनो बुद्ध्या ज्ञानरूपेण सन्मार्गगमनबुद्ध्या (ज्ञानरूपेण सन्मार्गेण) तन्द्रितः अनलसः। कपिलः देवहूतिं प्रति ॥ ३।२८।२-३-४-५-६-७।(२४-२५-२६-२७ २८-२९)

चतुर्विंशतिवर्गमाह। मल्लिङ्गेति मल्लिङ्गानि ये मद्भक्तास्तेषां दर्शनादि त्रयम्। येषान्दर्शनादहं स्फुरामीति ते तथा यथाश्रुते च लिङ्गं मद्भक्तविषयत्वेन दर्शनादेः षट्त्वाच्चतुर्विंशतित्वानुपपत्तिः। परिचर्य्या पुष्पगुम्फनादि। प्रह्वोनम्रता ॥ ११।११।३४। (३०)

अनु अनुवृत्त्या ॥ ११।११।३५ (३१)

पर्व्व जन्माष्टम्यादि ॥ ११।११।३६ (३२)

यात्राद्वारकादिगमनम्। बलिविधानं पुष्पोपहारादि वार्षिकपर्व्व स्वितिविशेषनिर्द्देशः। तत्र फलाधिक्यादित्यर्थः। तन्त्र (१) पञ्च-

(१) हयशीर्ष-पञ्चरात्रम्, नारदपञ्चरात्रम, कपिलपञ्चरात्रम, गणेशपञ्चरात्रम,-इत्यादि हैष्णवागमाः। अहिर्बुध्न्य संहितादीनां एष्वन्तर्भावः।

ममार्च्चा स्थापने श्रद्धा स्वतः संहृत्य चोद्यमः।
उद्यानोपवनाक्रीड़पुरमन्दिरकर्म्मणि ॥३४॥
समार्ज्जनोपलेपाभ्यां सेकमण्डलवर्त्तनै-
र्गृहशुश्रूषणं मह्यं दासवद्यदमायया ॥३५॥
अमानित्वमदम्भित्वं कृतस्यापरिकीर्त्तनम्।
अपि दीपावलोकं मे नोपयुञ्ज्यान्निवेदितम् ॥३६॥
यद्यदिष्टतमं लोके यच्चातिप्रियमात्मनः।
तत्तन्निवेदयेन्मह्यं तदानन्त्याय कल्पते ॥३७॥

---

रात्रम्। व्रतं देवतार्च्चनादिनियमः॥ ११।११।३७ (३३)

मम प्रतिमास्थापने उद्यानादिकरणे च श्रद्धा उद्यमश्च असामर्थ्येतु संहृत्य मिलित्वा उद्यानं पुष्पाणां। उपवनन्तु फलानाम्, आक्रीड़म् जलादिक्रीड़ास्थानम् ॥११।११।३८ (३४)

सम्मार्ज्जनं अवकरनिरसनम्। उपलेपोगोमयादिना। सेकोजल सेचनम्। मण्डलवर्त्तनं (च्च) चतुस्करङ्गमालिकादि वा एतैरेवा कपटेन गृह शुश्रूषणम् ॥११।११।३८। (३५)

मानोदर्पः। दम्भः परवञ्चनम्। यत्रापिशब्दस्ततोऽन्यत्र तात्पर्य्यम्। यथा "अश्नीयाद्विषमप्युग्रं ब्रह्मस्वन्तु नकर्हिचित्।" इत्यादौ अतोदीपावलोकमपीत्यस्य देवाय स्वयम्। अन्येन दत्तं वस्तुदेवोपभोगमाच्छिद्यनोपयुञ्जीतेत्यत्र तात्पर्य्यम्। प्रसादबुध्या निवेदितं गृह्णीयात्।. अन्यथा "निर्म्माल्यं शिरसा धार्य्यं नैवेद्यमुदरे हरेः। तयोपभुक्तस्रग्गन्ध वासोऽलङ्कार चर्च्चिताः। उच्छिष्ट भोजिनोदासा स्तवमायांजयेमहि।" इत्यादि (घु) वाक्यविरोधः दीपावलोक दोष परिहारार्थं देवस्याग्रे वर्त्तिद्वयेन दीपः कार्य्यः ॥११।११।४०। (३६)

मदर्च्चां संप्रतिष्ठाप्य मन्दिरं कारयेद्दृढम् ।
पुष्पोद्यानानि रम्याणि पूजायात्रोत्सवाश्रितान् ॥३८॥
पूजादीनां प्रवाहार्थं महापर्व्वस्वथान्वहम् ।
क्षेत्रापणपुरग्रामान् दत्त्वामत्सार्ष्टितामियात् ॥३९॥
प्रतिष्ठाय सार्वभौमं सद्मना भुवनत्रयम् ।
पूजादिना ब्रह्मलोकं त्रिभिर्मत्साम्यतामियात् ॥४०॥

विंशतिवर्गः ।

निषेविताऽनिमित्तेन स्वधर्म्मेण महीयसा ।
क्रियायोगेन शस्तेन नातिहिंस्रेण नित्यशः ॥४१॥

---

सर्व्वलाभार्पणस्य फलमाह । यद् यदिति । इष्टं धर्म्म साधनम् । श्रीकृष्ण उद्धवम् ॥११।११।४०। (३७)

अर्च्चास्थापनादेः फलमाह । मदर्च्चामिति । आदिशब्दात् पूजकः नृत्य यात्रा प्रसादादीनाम् प्रवाहोनिर्व्वाहः । पूजा (प्रासादादीनाम्) तदर्थं पूजाद्याश्रितान् क्षेत्रादीन् नकारयेत् । तत्र पूज्यतेऽनेनेति पूजा पुष्पाणि । यात्रा यत्र नानादेश्याः सञ्चितानि वस्तुनि विक्रेतुं प्रत्यब्दं मिलन्ति सा । उत्सवः पूजाहर्षः क्षेत्रं केदारः आपनोहट्टः । पुरं पञ्चशतग्राममुख्यं । ग्रामः केवल शूद्रवासः । सार्ष्टिता समान प्रभावत्वम् । इयात् प्राप्नुयात् ११।२७।५०-५१। (३८ ३९)

प्रतिष्ठा परकृते देवकुले जीर्णोद्धाररूपेण प्रतिमास्थापनं । सद्म परप्रतिष्ठित तत् प्रतिमायाः प्रासादमात्रकरणम् । ब्रह्मलोकं तदाधिपत्यं ब्रह्मत्वं । त्रिभिः स्वकृतैः प्रतिमाप्रासादपूजादिभिः । मत्साम्यतां मामेव । भगवान् उद्धवम् ॥ ११।२७।५२। (४०)

मद्विष्ण्यदर्शनस्पर्शपूजास्तुत्यभिवन्दनैः।
भूतेषु मद्भावनया सत्त्वेनासङ्गमेन च ॥४२॥
महतां बहुमानेन दीनानामनुकम्पया
मैत्र्या चैवात्मतुल्येषु यमेन नियमेन च।
आध्यात्मिकानुश्रवणान्नामसंकीर्त्तनाच्च मे ॥४३॥
आर्ज्जवेनार्य्यसंङ्गेन निरहङ्कृयया तथा।
मद्धर्म्मिणो गुणैरेतैः परिसंशुद्ध आशयः ॥४४॥

विशतिवर्गमाह। निषेवितेनेति। अनिमित्तो निष्कामः। स्वधर्म्मो वर्णाश्रमधर्म्मः। महीयान् प्रथमकल्पानुष्ठितः "तपः स्वाध्यायेश्वरप्रणिधानानि क्रियायोगः" (१) तप उपवासादिकायिकं कर्म्म। स्वाध्यायो मन्त्रजपोवाचिकम् (२) ईश्वरप्रणिधानं विष्णुध्यानं मानसम्। तस्य त्रिविधस्य शस्तत्वम्। देशकालपुरुषवशाद् नातिहिंस (स) त्वं शरीरपीड़ाकरस्य त्यागात्। उक्तञ्च पातञ्जलभाष्ये (३) "तच्च चित्तप्रसादमबाधमानेना सेव्यमिति मन्यते" इति॥ ३।२८।१५। (४१)।

मद्धिष्ण्यम् शालग्रामादि। तस्य दर्शनादि। सत्वमास्तिक्यम्।८। असङ्गमो निःसङ्गत्वम्॥ ३।२८।१६। (४२)

"अहिंसासत्यास्तेयब्रह्मचर्य्यापरिग्रहायमाः"। "शौचः सन्तोषतपः स्वाध्यायेश्वर प्रणिधानानि नियमाः।" आध्यात्मिकं मोक्षशास्त्रम् १६।॥ ३।२ ।१७-१८ (४३)

---

(१) योगदर्शन १।२३ सूः। तत्रैव २।१ सः।

(२) प्रणिधानं "तस्मिन्परमगुरौ भगवति सर्वक्रियाणां समर्पणम्"। योगदर्शनव्याख्या १।२३ सूः।

(३) योगदर्शने वैयासिकं भाष्यम्।

पुरुषस्याञ्जसाभ्येति श्रुतमात्रगुणं हि माम् ॥४५॥

एकोनविंशतिवर्गः ।

सा श्रद्धया भगवद्धर्म्मचर्य्यया,
जिज्ञासयाध्यात्मिकयोगनिष्ठया ।
योगेश्वरोपासनया च नित्यम्,
पुण्यश्रवः कथया पुण्यया च ॥४६॥
अर्थेन्द्रियाराम सगोष्ठ्यतृष्णया,
तत्सम्मतानामपरिग्रहेण च ।
विविक्तरुच्या परितोष आत्मनि,
विना हरेर्गुण-पीयूषपानात् ॥४७॥

---

मद्धर्मो विष्णुभक्तिः । आशयोऽन्तःकरणम् ॥ ३।२८।१८ (४४)

श्रुतमात्रा न तु वस्तुतो दृष्टा गुणा य(स्य)स्मिन् । तं निर्गुणविषयं भवतीति भावः । कपिलः ॥ ३।२ ।२०। (४५)

एकोनविंशतिवर्गमाह । सच्छ्रद्धयेति । अत्र प्रथमश्लोकोक्तं गृहस्थस्य । द्वितीयश्लोकोक्तं वानप्रस्थस्य । तृतीयश्लोकोक्तं यतेः । ततःपरं नैष्टिकब्रह्मचारिणो विष्णुभक्तिदृढीकारणमिति श्लोकचतुष्टयार्थः । भगवद्धर्मो वार्त्ताकू-वर्ज्जनादि । जिज्ञासा अध्यात्मशास्त्राभ्यासः । अध्यात्मयोगनिष्ठा तदर्थानुष्ठानम् । पुण्यश्रवकथा विष्णुकथा । पुण्या विष्णुभक्तकथा । ४।२२।२२ (४६)

अर्थेन्द्रियारामाः अर्थकामलुब्धाः, तैः सहगोष्ठी । समानसभत्वम । तत्र अतृष्णा तृष्णाया अप्यभावः । किं पुनः सेवायाः तत्सम्मताः स्रक्चन्दनादयः । विविक्तरुचिः विजनप्रीतिः । सा च

अहिंसया पारमहंस्यचर्य्यया,
स्मृत्या मुकुन्दाचरिताग्र्यसीधुना।
यमैरकामैर्नियमैश्चाप्यनिन्दया,
निरीहया द्वन्द्वतितिक्षया च ॥४८॥
हरेर्मुहुस्तत्परकर्णपूर-
गुणाभिधानेन विजृम्भमाणया।
भक्त्या ह्यसङ्गः सदसत्यनात्मनि,
स्यान्निर्गुणे ब्रह्मणि चाञ्जसा रतिः ॥४९॥

---

आत्मनः परितोषे सति। आत्मनि स्वरूपे परितोषः। सुखान्तरानपेक्षत्वं विना विविक्तरुचेर्मिथ्याचारत्वात्। तदुक्तं "कर्म्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरण्। इन्द्रियार्थान् विमूढ़ात्मा मिथ्याचारः स उच्यते" (१) इति। स च परितोषो हरिकथां विना। हरिकथाकर्णनापेक्षात्वस्य वेत्यर्थः॥ ४।२२।२३ (४७)

अहिंसयेति। पारमहंस्यं परमहंसधर्म्मः। अस्मृत्या वासनोच्छेदकेन। विष्णुकथामद्यपानेन। मद्यं हि स्मृतिभ्रंशहेतुः। पूर्वं केवलकथापानम्। अत्र तु शास्त्रद्वारेणेति वा। (२) यमनियमा व्याख्याताः आनन्दा योगान्तरस्य निरीहा योगक्षेमार्थचेष्टाराहित्यम्॥ ४।२२।२४। (४८)

हरेरिति। तत्परकर्णपूरा विष्णुभक्ताः कर्णालङ्कारभूता ये गुणाः ऐश्वर्य्यादयः तेषामभिधानम्। हरेर्गुणाभिधाने नेत्यसामर्थ्येऽप्यार्षत्वात्

---

(१) भगवद्गीता ३।५ श्लोकः।

(२) योगदर्शनम् २।२९-३० सूः।

अष्टादशवर्गाः ।

मयि भावेन सत्येन मत्कथा श्रवणेन च ।
सर्व्वभूतसमत्वेन निर्व्वैरेणाप्रसङ्गतः ॥५०॥
ब्रह्मचर्य्येण मौनेन स्वधर्मेण महीयसा ।
यदृच्छयोपस्थितेन सन्तुष्टोमित भुङ्मुनिः ॥५१॥
विविक्त शरणः शान्तो मैत्रः करुण आत्मवान् ।
सानुबन्धे च देहेऽस्मिन्नकुर्वन्नसदाग्रहम् ॥५२॥
ज्ञानेन दृष्टतत्त्वेन प्रकृतेः पुरुषस्य च ।
निवृत्तबुद्ध्यव स्थानो दुरीभूतान्य दर्शनः ॥५३॥
उपलभ्यात्मनात्मानं चक्षुषेवार्कमात्मदृक् ।
मुक्तलिङ्गं सदाभास मसति प्रतिपद्यते ॥५४॥

---

समासः। विजृम्भमाणयेति सर्वैस्तृतीयान्तैः सम्बध्यते। सदसति कार्य्यकारणरूपे। असङ्गोरतिश्चेति अनिष्टहानि रिष्टाप्तिश्चेतिद्वय मुक्तम्। सनत्कुमारः पृथुम् ।४।२२।२५ (४८)

अथ अष्टादश वर्ग माह। मयीति। मयि सत्यभावो निष्कामा-भजन प्रवृत्तिः सर्वभूतेषु विष्णुरधिष्ठातेति समत्वम्। अप्रसङ्गो-निःसङ्गत्वम्। मुनिर्म्मननशीलः॥ शरणं आश्रयः आत्मवान् जित-मनाः। अनुबन्धः पुत्रादिः। असदाग्रहोममाहम्भावः॥ दृष्टं प्रकृतिपुरुषयोस्तत्वं येन ज्ञानेन॥ बुद्ध्यवस्थानं जाग्रदादि अन्यदर्शनं चात्मव्यतिरिक्त ज्ञानम् ।३।२।७।६-७-८-९॥ (५० ५१-५२-५३)

उपलभ्येति। आत्मना जीवेन। आत्मानं परमात्मानम्। चक्षुषा इन्द्रियावच्छिन्नेन सूर्य्येण। अर्कं गगनस्थं सूर्य्यम्। आत्म-

सतोबन्धुमसञ्चक्षुः सर्व्वानुस्यूत मद्वयम् ॥५५॥

पञ्चदशवर्गाः।

श्र(शु) द्धामृत कथायां मेशश्वन्मदनु कीर्त्तनम्।

परिनिष्ठा च पूजायां स्तुतिभि स्तवनं मम ॥५६॥

आदरः परिचर्य्यायां सर्व्वाङ्गैरभि वन्दनम्।

मद्भक्तपूजाभ्यधिका सर्वभूतेषु मन्मतिः ॥५७॥

मदर्थेष्वङ्गचेष्टा च वचसामद्गुणेरणम्।

मय्यर्पणञ्च मनसः सर्वकाम विवर्ज्जनम् ॥५८॥

---

दृग् जीव स्वरूपम्। विमृशन् प्रथमम्। मुक्तलिङ्गं लिङ्ग शरीर-रहितम्। प्रतिपद्यते जानाति। ततोऽसति असत्ये प्रपञ्चेस्थितस्य सतः सत्यरूपं परमात्मनः आभासकम्।३।२७।१०॥ (५४)

(ततः) तस्यैव मतोबन्धुर्योऽसौ सोऽहमिति ज्ञानम्। ततोऽसतः प्रपञ्चस्य चक्षुर्मिथ्यात्म प्रकाशकम् तत् सर्वत्रात्मानुस्यूतम् व्याप्य-स्थितम्। ततोऽद्वयम् सोऽस्म्यहमेवेति ज्ञानम्। तदुक्तं शङ्करा-चार्य्यैः: (१) "योऽसौ सोऽहं सोऽस्म्यहमेवेति विदुर्यमिति।" कपिलः देवहूतिम् ॥३।२७।११ (५५)

अथ पञ्चदश वर्ग माह शुद्धेति। अनुकीर्त्तनं नामोच्चारणम् परिचर्य्या पुष्पचन्दनादि। सर्व्वाङ्गैरष्टभिः। तथाच दोर्भ्यां पद्भ्याञ्च जानुभ्यां उरसा शिरसादृशा। मनसावचसाचेतिप्रणामो ऽष्टाङ्ग ईरीतः" (२), ॥११।१९।२०।२१। (५६-५७)

---

(१) शङ्कराचार्य्य मन्याबल्याम्।

(२) तन्त्रसार मन्दकल्पद्रुम प्रणाम शब्देऽस्यात् सर्वम्।

मदर्थेऽर्थ परित्यागो भोगस्य च सुखस्य च ।
इष्टं दत्तं हुतं जप्तं मदर्थं मद्व्रतं तपः ॥५९॥
एवं धर्मैर्मनुष्याणामुद्धवात्म निवेदिनाम् ।
मयि सञ्जायते भक्तिः कोऽन्योऽर्थोऽस्यावशिष्यते ॥६०॥

त्रयोदश वर्गः ।

कुर्य्यात् सर्व्वाणि कर्म्माणि मदर्थं शनकैः स्मरन् ।
मय्यर्पित मनश्चित्तो मद्धर्म्मात्ममनोरतिः ॥६१॥
देशान् पुण्यानाश्रयेत मद्भक्तैः साधुभिः श्रितान् ।
देवासुर मनुष्येषु मद्भक्ताचरितानि च ॥६२॥

---

अङ्गचेष्टा सम्मार्ज्जनोपलेपादि । ईरणं उच्चारणम् ॥ ११।१९। २२। (५८)

भोगोविषयार्ज्जनम् । सुखमुपभोगः । इष्टादेश्च मदर्थम् ॥११। १९।२३। (५९)

आत्मनिवेदनम् स्नानम् । आत्मनि वेदनमित्यलुक् । तद्यथास्यास्तथाभक्तिर्जायत इति क्रियाविशेषणम् । आत्मसमर्पणमिति व्याख्याने समर्पणस्य (मय्यर्पणस्य) मनन इत्यनेन पौनरुक्त्यम् । भगवान् उद्धवम् ॥११।१९।२४। (६०)

अथ त्रयोदश वर्गमाह । कुर्य्यादिति । स्मरण मामेव ॰ नः प्रवृत्ति निवृत्तिरूपम् मनः स्वच्छत्वादिरूपम् मद्धर्म्मसुमद्धर्म्मानुष्ठातृषु महात्मसु मयिसमाविष्टेषु मनोरतिः मनोग्रहणम् मनः पूर्व्विकारतिरित्येवमर्थः ॥ ११।२९।९। (६१)

देशपूतावासेन देवादिषु येमद्भक्ताः तच्चरितानि च पूजयेत् श्रवणादिभिः ॥११।२९।१०। (६२)

पृथक् सत्रेण वा मह्यं पर्वं यात्रा महोत्सवान्।
कारयेद् गीतनृत्याद्यैर्महाराजविभूतिभिः ॥६३॥
मामेव सर्वभूतेषु वहिरन्तरपावृतम्।
ईक्षेतात्मनि चात्मानं यथा खममलाशयः ॥६४॥
इति सर्वाणि भूतानि मद्भावेन महाद्युते।
सभाजयन्मन्यमानो ज्ञानं केवलमाश्रितः ॥६५॥
ब्राह्मणे पुक्कसे स्तेने ब्रह्मण्येऽर्के स्फुलिङ्गके।
अक्रूरे क्रूरके चैव समदृक् पण्डितोमतः ॥६६॥
विसृज्य स्मयमानान् स्वान् दृशं व्रीडाञ्च दैहिकीम्।
प्रणमेद्दण्डवद्भूमावाश्वचाण्डाल गोखरम् ॥६७॥

---

सत्रेणान्यैर्मिलित्वा पर्व्वानि शयनबोधनद्वादश्यादौ यात्रा महोत्सवास्। मह्यंमदर्थं विभूतयश्चामराद्याः सर्व्वभूतेषु आत्मनि च मामात्मानम् अपावृतम् अतिरोहितम्। वहिः काल-रूपम्। अन्तरन्तर्यामिरूपम्। केवलं शुद्धं ज्ञानं प्रपञ्चस्याधि-ष्ठानमिति मन्यमानः। मद्भावेन मद्बुध्या सभाजनं सेवा॥ ११। २९।१३। (६३।६४।६५)

पुक्कसोऽन्त्यज विशेषः। ब्राह्मणो ब्राह्मण्य सहितः। ब्राह्मणा-दिष्वष्टसु द्वयोर्द्वयोः क्रमाज् जातिक्रिया द्रव्यगुणकृतं वैषम्यं ज्ञेयम्। विषयेष्वपि समं मत्स्वरूपम् पश्यतीति समदृक्॥ ११।२९। १४। (६६)

स्वान् स्वकृतैव। स्वादृशं अहंबुद्धिम्। अन्यां ममबुद्धिम्। चकाराल्लोक व्रीडाञ्च॥ ११।२९।१५। (६७)

यावत् सर्वेषु भूतेषु मद्भावो नोपजायते ।
तावदेवमुपासीत वाङ्मनः कायवृत्तिभिः ॥६८॥
नरेष्वभीक्ष्णं मद्भावं पुंसो भावयतोऽचिरात् ।
स्पर्द्धाऽसूया तिरस्काराः साहङ्कारावियन्ति हि ॥६९॥

द्वादशवर्गः ।

गुरुशुश्रूषया भक्त्या सर्वलाभार्पणेन च ।
सङ्गेन साधुभक्तानामीश्वराराधनेन च ॥७०॥

---

एतदनुष्ठानस्यावधिमाह । यावदिति । नोपजायते न साक्षाद्-भवति ॥ ११।२९।१६। (६८)

उपासनायाः फलमाह । नरेष्विति । मद्भावोमत्सत्ता नर शब्द उपलक्षणम् । सर्वभूतेष्वित्यर्थः । स्पर्द्धाधिकगुणैःसह साम्येच्छा । असुयागुणेषुदोषारोपः । तिरस्कारो मानभङ्गः । अहङ्कारोऽनात्मनि आत्मबुद्धिः गर्वो वा । वियन्ति विशेषाद् गच्छन्ति । संस्कारैः सहनश्यन्तीर्थः । हिस्फुटम् । नस्तुति मात्रम् । भगवान् उद्धवम् ॥११।२९।१५। (६९)

अथ द्वादशवर्गं माह । गुरुशुश्रूषेति । भक्त्या तात्पर्य्येण शुश्रूषा अर्पणं गुराविव साधवश्च भक्ताश्च साधवः केवल स्वधर्म्मनिष्ठाः, ईश्वरः (१) "क्लेशकर्म्मविपाकाशयैरपरामृष्टः पुरुषः"। तस्याराधनं (२) सर्वं कर्म्मार्पणम् ॥ ७।७ ३०। (७०)

---

(१) योगदर्शनम १।२४ सूः ।

(२) "तत् कुरुष्व मदर्पणम" गीता—९।२७ श्लोः । योगदर्शन १।२३,-२।४५ सूः

श्रद्धया तत्कथायाञ्च कीर्त्तनगुणकर्मणाम्।
तत्पदाम्बुरुहध्यानात् तल्लिङ्गेक्षार्हणादिभिः ॥७१॥
हरिः सर्व्वेषु भूतेषु भगवानास्त ईश्वरः।
इति भूतानि मनसा कामैस्तैः साधुमानयेत् ॥७२॥
एवं निर्ज्जितषड्वर्गैः क्रियते भक्तिरीश्वरे।
वासुदेवे भगवति यथा संलभते रतिम् ॥७३॥
निशम्य कर्म्माणिगुणानतुल्यान्,
वीर्य्याणि लीलातनुभिः कृतानि।
यदातिहर्षोत्पुलकाश्रुगद्गदम्,
प्रोत्कण्ठ उद्गायति रौति नृत्यति ॥७४॥
यदाग्रहग्रस्त इव क्वचिद्धस-
त्याक्रन्दते ध्यायति वन्दते जनम्।

---

कथायां श्रद्धा श्रवणेनेत्यर्थः, गुणाऐश्वर्य्यादयः। कर्म्माणि सृष्ट्यादीनि लिङ्गमधिष्ठानम् प्रतिमादि, ईक्षादर्शनम् अर्हणं पूजा नचादिशब्देनान्येषामप्युक्तत्वाद्द्वादशवर्गं प्रतिज्ञाभङ्ग इति शङ्क्यं, इह स्वशब्दनिर्द्दिष्टैरेवाङ्गैर्वा समाप्तेर्विवक्षितत्वात् ॥ ७।७।३१। (७१)

हरिरास्त इति. मनसाकामै स्तत्तच्चित्तानुवर्त्तनैः साधु यथास्यात् ॥७।७।३२। (७२)

एवं द्वादशवर्गानुष्ठानेन षड्वर्गो "मनःषष्ठानीन्द्रियाणि" ईश्वरे फलार्पणसमर्थे भगवति भजनीय सौन्दर्य्यादिगुणे ययाभक्त्या ७।७।३३। (७३)

मुहुः श्वसन् वक्ति हरे जगत्पते !
नारायणेत्यात्ममतिर्गतत्रपः ॥७५॥
तदा पुमान् मुक्तसमस्तबन्धनः,
स्तद्भावभावानुकृताशया कृतिः ।
निर्दग्धवीजानुशयो महीयसा,
भक्तिप्रयोगेण समेत्यधोक्षजम् ॥७६॥

---

लब्धरतेश्चिह्नान्याह । निशम्येति । निशम्यश्रुत्वा । कर्म्माणि सृष्ट्यादीनि । लीलावतारैः कृतानि । लीलामाध्यानि ॥७।७।३४।(७४)

आक्रन्दनं नारायणेत्यादि सातत्येन शब्दम् । आत्मनि स्वरूपेमतिर्यस्य नतुलोके । अतएव गतत्रपाः ॥७।७।३५। (७५)

रतेः फलमाह । तदेति । बन्धनानि क्लेशकर्म्मविपाकाशयाः (१) तं विष्णुम् । भावयते प्राप्नोति इतितद्भाव स्तद्विषय इत्यर्थः । प्राप्त्यर्थीभूस्व्रादावस्ति । सचासौ भावो मनोविकारः । तस्मात् अनुकृते आशयाकृती (तोः) अर्थाद्विष्णोरेव येन पुंसा सतथा । आशयोऽन्तःकरणम् । आकृतिर्वेषः वर्हापाड़ादिः । विष्णु विषयेन भावेन विष्णोविरास्यसुप्रसन्नम् । चेतोवेषस्तथास्यादित्यर्थः । वीजानि पुण्यपापानि । अनुशेरते अस्मिन्निति वीजानुशयो लिङ्ग-देहम् । महीयान् साधनसहस्रैर्दुर्लभः । समेति सङ्गतो भवति । अधः अक्षजं इन्द्रियजं ज्ञानमस्य तं अवाङ्मनसगोचरम् । रूपं प्राप्नोतीत्यर्थः । प्रह्लाद बालान् ॥७।७।३६ (७६)

---

(१) योगदर्शनम् १।२४ सू: । अविद्यादय क्लेशाः विपच्यन्ते इति विपाकाः जात्यायुर्भोगाः, शुभाशुभं कर्म्माद्दष्टं वा, आफलविपाकात् चित्तभूमौशेरते इत्याशया वासनाख्य संस्काराः तत्रैव भाष्ये ।

एकादशवर्गाः।

सवैमनः कृष्णपदारविन्दयो-
र्वचांसि वैकुण्ठगुणानुवर्णने।
करौ हरेर्मन्दिरमार्ज्जनादिषु,
श्रुतिञ्चकाराच्युतसत्कथोदये ॥७७॥
मुकुन्दलिङ्गालयदर्शने दृशौ,
तद्भृत्यगात्रस्पर्शेऽङ्गसङ्गमम्।
घ्राणञ्च तत्पादसरोजसौरभे,
श्रीमत्तुलस्या रसनां तदर्पिते ॥७८॥
पादौ हरेः क्षेत्रपदानुसर्पणे
शिरो हृषीकेशपदाभिवन्दने।
कामञ्चदास्ये नतु कामकाम्यया,
यथोत्तमःश्लोकजनाश्रया रतिः ॥७९॥

---

अथैकादशवर्गमाह। सवै इति। स अम्बरीषः अच्युतस्य सतां भक्तानां कथा ॥९।४।१८। (७७)

लिङ्गं प्रतिमा। आलयोऽधिष्ठानम्। चशब्दो भिन्नक्रमः तुलस्याश्च सौरभे। तत्पादसरोजेति। तत्पादकल्पितसरोजसौरभ इति ज्ञेयम्। रूपकपक्षेऽपि साम्यमात्रम्। नतु गन्धसद्भावः। तदर्पितेनैवेद्ये ॥९।४।१९। (७८)

क्षेत्रं द्वारकादि। पदं विरजादि। काममभिलाषम्। दास्ये नतु स्र्यादिसेवायाम। कामेनहिरतिः साध्या साचात्र विष्णुजनाश्रया

दशवर्गाः ।

आयुर्हरति वै पुंसामुद्यन्नस्तञ्च यन्नसौ ।
तस्यर्त्ते यत् क्षणो नीत उत्तमः श्लोकवार्त्तया ॥८०॥
तरवः किं न जीवन्ति भस्त्राः किं न श्वसन्त्युत ।
न खादन्ति न मेहन्ति किं ग्रामपशवोऽपरे ॥८१॥
श्वविड्वराहोष्ट्रखरैः संस्तुतः पुरुषः पशुः ।
न यत्कर्णपथोपेतो जातु नाम गदाग्रजः ॥८२॥
बिले बतोरुक्रमविक्रमान् ये
न शृण्वतः कर्णपुटे नरस्य ।

---

यथा येन दास्यकामिन। तत्र पायुवर्जानामिन्द्रियाणां शिरश्च व्यापारैकादशाङ्गानि। शुकः ॥८।४।२०। (७९)

एवमन्वयमुखेन प्राग्वर्गानुक्त्वा व्यतिरेकमुखेन दर्शयन्नाह। आयुरिति। उद्यन् उदयन्। अस्तं पश्चिमाद्रिञ्च यन् गच्छन्। असावभिनयेन सूर्यं दर्शयति। तस्यर्त्ते तस्यायुर्विना यद्व्ययेन। हृतमपि तस्यायुः सफलत्वादहृतवदित्यर्थः। अत्र वार्त्तयेत्यन्यस्मृति गुणाभिधानमेकमङ्गमित्यभिप्रेतम्। उत्तरत्र गाथोपगान मेकाकिनः ॥२।३।१७। (८०)

ननु कथमायुषो वैयर्थ्यं भोगसद्भावादित्यत आह। तरव इति। उत अहो ॥२।३।१८। (८१)

विड्वराहो ग्राम्यशू(सू)करः। श्वादिभिः सहसंस्तुतः तत् प्रस्तावे गृहीतनामा ॥२।३।१९। (८२)

(बिलेति)। बिले च्छिद्रे नत्विन्द्रिये। बत कष्टम् न शृण्वत इति नर विशेषणम्। अत्र कर्णपथोपेत इति न शृण्वतोये (इति च)

जिह्वासतीदार्दुरिकेव सूत !
नचोपगायत्युरगायगाथाः ॥८३॥
भारः परं पट्ट किरीट जुष्ट-
मप्युत्तमाङ्गं न नमेन्मुकुन्दम्।
शावौ करौ नो कुरुतः सपर्य्याम्,
हरेर्लसत् काञ्चन कङ्कणौवा ॥८४॥
वर्हायिते ते नयने नराणाम्
लिङ्गानिविष्णोर्न निरीक्षतो ये।
पादौ नृणांतौ द्रुमजन्मभाजौ,
क्षेत्राणि नानु ब्रजतो हरेर्यौ ॥८५॥
जीवञ्छवो भागवताङ्घ्रिरेणून्
नजातु मर्त्त्योऽभिलभेत यस्तु।
श्रीविष्णुपद्यामनुजस्तुलस्याः
श्वसञ्छवो यस्तु नवेद गन्धम् ॥८६॥

---

कथा श्रवण मुक्ताम्। दर्दुरो मण्डूकः। चशब्दश्चार्थे गाथाः कथाः २।३।२०। (८३)

पट्टं पट्टवस्त्रम् शवस्य मो शावौ। वा शब्दो यथार्थ ॥२।३।२१। (८४)

वर्हं मयुरपिच्छम्। द्रुम जन्म वृक्षमूलत्वम् ॥२।३।२२। (८५)

नाभिलभेत न स्पृशेत। श्रीशब्दोनाम्नः पूजार्थः। विष्णोः

तदश्मसारं हृदयं बतेदम्,
यद्गृह्यमाणै र्हरिनामधेयैः ।
न विक्रियेताथ यदा विकारो-
नेत्रे जलं गात्ररुहेषु हर्षः ॥८७॥

नववर्गः ।

श्रवणं कीर्त्तनं विष्णोः स्मरणं पादसेवनम् ।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ॥८८॥
इति पुंसार्पिता विष्णौ भक्तिश्चेन्नवलक्षणा ।
क्रियेत भगवत्यद्धा तन्मन्येऽधीत मुत्तमम् ॥८९॥

सप्तवर्गः ।

अनिमित्तं निमित्तेन स्वधर्म्मेणामलात्मना ।
तीव्रयामयि भक्त्या च श्रुतसम्भृतया चिरम् ॥९०॥

---

पादो एति गच्छति इति विष्णुपदो विष्णुचरणस्थेत्यर्थः । इलकान्ता-विति दीर्घोऽप्यस्ति अदादौ ॥२।३।२३। (८६)

अश्मसारं पाषाणवद् लोहवद्वा कठिनम् । विकृतं कथं लक्ष्यं विक्रियायोगात् । यदा विकार स्तदा अश्रूणि रोमहर्षश्च शौनकः सूतम् ॥२।३।२४। (८७)

अथ नववर्गमाह । श्रवणमिति । पादसेवनं पादयोः सेवनम् नमनमित्यर्थः । वन्दनं स्तुतिः । सख्यं प्रागवत् ॥७।५।२३। (८८)

नवलक्षणा नवाङ्गा । प्रह्लादः पितरम् ॥७।५।२४। (८९)

सप्तवर्गमाह । अनिमित्तेति । अनिमित्तं निमित्तत्वाभावः ।

ज्ञानेन दृष्टतत्त्वेन वैराग्येण बलीयसा।
तपो युक्तेन योगेन तीव्रेणात्मसमाधिना॥९१॥
प्रकृतिः पुरुषस्येह दह्यमानात्वहर्निशम्।
तिरोभवित्री शनकैरग्नेर्योनिरिवारणिः॥९२॥

---

निमित्तं प्रयोजकं यस्य तेन। (१) "एवं नृणां क्रियायोगाः सर्व्वे संसृतिहेतवः। तएवात्म विनाशाय कल्पन्ते कल्पिताः परे" इत्युक्तेन अमल आत्मा चित्तं यस्मात्तेन। शुद्धसत्त्वद्रव्यात्मकेनेत्यर्थः। श्रुतं कथाश्रवणम् तेन संभृता उपचिता॥३।२७।२१। (९०)

दृष्टतत्त्वेन सत्व पुरुषान्यताख्याति रूपेण। वैराग्येण गुणसङ्गजनितरागरूपमलापनुत्या। बलीयसा वशीकार संज्ञा (२) लक्षणेन। योगोध्यानम् (३) "योगः सन्नहनोपायःध्यान सङ्गति युक्तिषु" इतिनानार्थात्। ध्यानमेव "तदेवार्थमात्रनिर्भासं स्वरूप शून्यमिव समाधि" (४) रिति समाधि लक्षणम्॥३।२७।२२ (९१)

अत्र स्वधर्म्मादिभिः षड्भिः तीव्रया श्रुत सम्भृतया च भक्त्या दह्यमाना प्रकृति स्तिरोभवित्रीति प्रतिपत्तव्यम्। यथा श्रुते तु स्वधर्म्मादिवद्भक्तेरप्यङ्गकोटिनिविष्टत्वानुपपत्तिः, प्रक्रान्तं चाङ्गित्वम्। भवित्रीतिसाधुकारिणि तृन्। यत्र न पुनराविर्भावः स साधुः न तिरोभावः, यथाह्यरणि रग्निमुत्पाद्य तत्तेजसा नश्यति। तथा प्रकृति भक्तिमुत्पाद्य प्रकटीकृत्य तत्तेजसा नश्यतीत्यर्थः। कपिलः॥३।२७।२३। (९२)

---

(१) भागवतं १।५।३४ श्लो:।

(२) योगदर्शनं १।१५ सू:।

(३) अमर-नानार्थ कोषः।

(४) योगदर्शनं ३।३ सू:।

षड्वर्गाः ।

वाणीगुणानुकथने श्रवणौ कथायाम्,
हस्तौ च कर्म्मसु मनस्तवपादयोर्नः ।
स्मृत्यां शिरस्तवनिवासजगत्प्रणामे,
दृष्टिः सतां दर्शनेऽस्तु भवत्तनूनाम् ॥८३॥

पञ्चवर्गाः ।

शृण्वतां गदतां शश्वदर्च्चतां त्वाभिवन्दताम् ।
नृणां संवदतामन्तर्हृदिभास्यमलात्मनाम् ॥८४॥

चतुवर्गाः ।

तस्मादेकेनमनसा भगवान् सात्त्वतां प्रतिः (१) ।
श्रोतव्यः कीर्त्तितव्यश्च ध्येयः पूज्यश्च नित्यदा ॥८५॥

---

षड्विंश वर्गमाह । वाणीति । पादयोः स्मृत्यां मनः शिरः प्रणामे हि निवास जगद् जगद् निवासो यस्येति निवास शब्दस्य सप्तमी विशेषणे बहुब्रीहाविति पूर्व्व निपातः । नलकूवरः श्रीकृष्णम् ॥१०।१०।३८ (८३)

पञ्चवर्गमाह । शृण्वतामिति । श्रुतदेवः श्रीकृष्णम् ॥१०।८६।४६। (८४)

चतुर्व्वर्गमाह तस्मादिति । यस्मात् सर्व धर्म्माणां विष्णुभक्तिः फलम् । सात्वतां सत्ववताम् । सच्छब्देन सत्वमुच्यते । सुतः शौनकम् ॥१।२।१४। (८५)

---

(१) सात्वतां पतिर्गोपतनामधीश्वरः । एवं सात्वतसंहितायाम् ।

त्रिवर्गाः।

तस्माद् भारत सर्व्वात्मा भगवान् हरिरीश्वरः।
श्रोतव्यः कीर्त्तितव्यश्च स्मर्त्तव्य श्चेच्छताऽभयम् ॥८६॥
तस्मात् सर्व्वात्मना राजन् हरिः सर्व्वत्र सर्व्वदा।
श्रोतव्यः कीर्त्तितव्यश्च स्मर्त्तव्यो भगवान्नृणाम् ॥८७॥

पुनर्वचनं त्रिवर्गस्यान्तरङ्गतरत्वख्यापनार्थम्।

इति वोपदेव विरचिते मुक्ताफले विष्णुभक्त्यङ्गवर्ग लक्षणं भेदाश्च। इति सप्तमोऽध्यायः।

---

त्रिवर्गमाह। तस्मादिति। तस्माद् यस्मादन्येषां सदोषत्वात् सर्व्वात्मत्वादात्मीयत्वं भगवत्त्वाद्रमणीयत्वम् ईश्वरत्वाद्दरदत्वम्। श्रवणादि प्रवृत्तिहेतुः। अभयं मोक्षम्। शुकः राजानम् ॥२।१।५ (८६)

तस्मादिति। तस्माद् यस्माद् भक्तावेव वेदस्य तात्पर्य्यम्। सर्वात्मना सर्वावस्थेनापि सर्वदेशेषु सर्वकालेषु च शुकः ॥२।२।३६। (८७)

ननु वर्गान्तराणि सकृदेवोक्तानि त्रिवर्गस्तु किमर्थं पुनरुच्यते इत्यत आह। पुनर्व्वचनमिति। मतवर्थोह्यतिशयः। स चान्य स व्यपेक्ष्य (इत्यर्थः) इत्यर्थात् पूर्वस्य वर्गनवकस्यान्तरङ्गतरत्वम्। तत् पूर्वस्यत्वन्तरङ्गत्वमित्युक्तं भवति ॥

इति हेमाद्रिविरचितायां कैवल्यदीपिकायां विष्णुभक्त्यङ्ग लक्षणं भेदाश्च। इति सप्तमोऽध्यायः ॥

## अष्टमोऽध्यायः ।

### अथ विष्णु श्रवणम् ।

कोनामतृप्येद्रसवित्कथायाम्,
महत्तमैकान्त परायणस्य ।
नान्तं गुणानाम गुणस्य जग्म -
र्योगेश्वरा ये भवपाद्ममुख्याः ॥१॥
तन्नो भवान् वै भगवत् प्रधानो,
महत्तमैकान्त परायणस्य ।

---

एवं भक्त्यङ्गान्युक्त्वा तेषु सर्व्वशः स्तोतव्येषु प्राधान्यात्त्रिवर्गमेव स्तौति । वर्गस्येति । महिमेति शेषः । तेष्वपि श्रवण माहात्म्यमाह अथेति । कोनामेति । महत्तमाः एकान्तेन नियमेन परायणं परम आश्रयो यस्य स तथा । महत्तमैः कथ्यमानः प्रत्यक्षइव भवतीति भावः । अन्तं निश्चयं इदं रूपं ईदृशं रूपं इत्यच्चमत्करोतीत्यादि । अगुणस्य गुण सुखाधिकस्वरूपसुखलुब्धत्वाद् अगृहीत गुणस्य स्वरूप सुखमेव गुणेष्वभिव्यक्तमन्यान् सुखयति । अभिव्यक्ति तारतम्यात् सुखतारतम्यम् । भवोरुद्रः । पाद्मो ब्रह्मा । मुख्य-शब्दात्सनकादयः योगस्य समाधेः । ईश्वरावशीकृत 'समाधयः । समाधिवलात् कलित सकल पदार्था अपि विष्णुगुणान कलयन्ती-त्यर्थः ॥१।१८।१५। (१)

तत इति । भगवत् प्रधान इति बहुव्रीहिः । महत्तमेति तत-

हरेरुदारं चरितं विशुद्धम्,
शुश्रूषतान्नो वितनोतु विद्वन् ॥२॥
कोनाम लोके पुरुषार्थ सारवित्-
पुरा कथानां भगवत् कथासुधाम्।
आपीयकर्णाञ्जलिभिर्भवापहा-
महोविरज्येत विना नरेतरम् ॥३॥
निवृत्ततर्षैरुपगीयमाना-
द्भवौषधाच्छ्रोत्रमनोरभिरामात्।
क उत्तमः श्लोक गुणानुवादात्,
पुमान् विरज्येत विनाऽपशुघ्नात् ॥४॥
कस्तृप्नुयात्तीर्थ पदोऽभिधानात्,
सत्रेषु वः सूरिभिरीड्यमानात्।
यः कर्णनाड़ीं पुरुषस्य यातो-
भवप्रदां गेहरतिं छिनत्ति ॥५॥

पुरुषः। विशुद्धं कल्मषान्तरामङ्कीर्णम्। शौनकः सूतम् ॥१।१८।१५। (२)

कोनामेति। पुराकथानाम् मध्ये। नरेतरं पशुं। मैत्रेयः विदुरम् ॥३।१८।५०। (३)

तर्षो विषयेच्छा। अनुवादाद् अन्यैः क्रियमानादित्यर्थः। निवृत्ततर्षादिभिस्त्रिभिर्मुक्त मुमुक्षु सकामा नात्र विरज्यन्त इत्युक्तं पशुघ्नो हिंसानिरतः। राजा शुकम् ॥१०।१२।४। (४)

कस्तृप्नुयादिति। तीर्थपादो विष्णुः। सत्रेषु पुराणेषु। विष्णु-

को वा भगवतस्तस्य पुण्यश्लोकेड्य कर्म्मणः ।
शुद्धिकामो न शृणुयाद् यशः कलिमलापहम् ॥६॥
वयन्तु न वितृप्याम उत्तमःश्लोकविक्रमे ।
यच्छृण्वतां रसज्ञानां स्वादु स्वादु पदे पदे ॥७॥

श्रुतस्य पुंसां सुचिरश्रमस्य,
नन्वञ्जसा सूरिभिरीड़ितोऽर्थः ।
तत् तद्गुणानुश्रवणं मुकुन्द-
पादारविन्दं हृदयेषु येषाम् ॥८॥
पिबन्ति ये भगवत आत्मनः सताम्,
कथामृतं श्रवणपुटेषु संभृतम् ।

---

महिम्नः साकल्येन वक्तुमशक्यत्वात् पुराणानां सूचना रूपेन सूत्रत्वम् । कर्णनाड़ीं कर्णमूलम् । विदुरः मैत्रेयम् ॥३।५।११। (५)

एतर्हि श्लोकाः शुश्रूषोर्वचसा । श्लोकः कीर्त्तिः । ईड्यं स्तुत्यम् ॥ १।१।१६। (६)

वयन्त्विति । यद्यैविक्रमाः । स्वादु स्वादु स्वादनः स्वादनः । उभय सुपांसुलुक् पूर्व्व सवर्णेति सुलुक् (१) पदे पदे क्षणे क्षणे । शौनकः सूतम् ॥१।१।१८। (७)

श्रुतस्येति । मुकुन्द पादारविन्दं येषां हृदयेषु तन्निष्ठस्तस्य मकुन्दस्य गुणान् श्रवणं श्रुतश्रमस्य फलम् । विदुरः मैत्रेयम् ॥ ३।१३।४। (८)

---

(१) "सुपां सुलुक् पूर्वसवर्णस्य" पाणिनिः ७।१।३९ सू:

पुनन्ति ते विषयविदूषिताशयम्,
व्रजन्ति तच्चरणसरोरुहान्तिकम् ॥९॥
ज्ञानं यदा प्रतिनिवृत्तगुणोर्म्मिचक्रम्,
आत्मप्रसाद उभयत्र गुणेष्वसङ्गः।
कैवल्यसम्मतपथस्त्वथ भक्तियोगः,
को निर्वृतो हरिकथासु रतिं न कुर्य्यात् ॥१०॥
तस्मिन्महन्मुखरिता मधुभिच्चरित्र-
पीयूषशेष सरितः परितः स्रवन्ति।
ता ये पिबन्त्यवितृषो नृप गाढ़कर्णै-
स्तान्नस्पृशन्त्यशनतृड्भयशोकमोहाः ॥११॥

---

पिबन्तीति। सतामात्मनः सद्भिरात्मत्वेन ज्ञातस्य। शुकः राजानम् ॥२।२।३७। (९)

ज्ञानमिति। हरिकथासु को न निर्वृतः कोवा रतिं न कुर्य्यात्। यद् यस्मात् तास्वेव ज्ञानादयो गुणाः। आ इति स्मरणे। भागवत सङ्गं शुकः स्मरति। प्रतिनिवृत्तं यतोदितं तत्रैव लीनम्। गुणोर्म्मि चक्रम्। महदादिपरः पूर्ब्बेण ज्ञानेन तत्तया। आत्मप्रसादः शुद्धसत्वात्मकत्वम्। उभयत्र गुणेष्वसङ्ग इहामूत्र भोगविरागः। कैवल्य-मित्येव संमत एष्याः फलसाधनत्वेपि फलरूपत्वात् शर्करादिव्यञ्जन-वत् शुकः ॥ २।३।१२। (१०)

तस्मिन्निति। तस्मिन् भागवत सदसि महद्भिर्मुखरिता वाचालीकृताः स्वयमेवात्मानं यथा प्रकाशयन्ति तथोच्चारिताः महन्मनोह्लादा-पूरणस्य तदवस्थत्वाच्चेशत्वम्। परितः सर्व्वान् श्रोतॄन्प्रति।

गृहेष्वाविशतां चापि पुंसां कुशलकर्म्मणाम् ।
मद्वार्त्ता यातयामानां न बन्धाय गृहा मताः ॥१२॥

कुतोऽशिवं त्वच्चरणाम्बुजासवम्,
महन्मनस्तो मुखनिःसृतं क्वचित् ।
पिबन्ति ये कर्णपुटैरलं प्रभो !
देहं भृतां देहकृदस्मृतिच्छिदम् ॥१३॥

विभ्वस्तवामृतकथोदवहास्त्रिलोक्याः,
पादावनेजसरितः शमलानि हन्तुम् ।
आनुश्रवं श्रुतिभिरङ्घ्रिजमङ्गसङ्गै-
स्तीर्थद्वयं शुचिषदस्त उपस्पृशन्ति ॥१४॥

---

अवितृषः विविधतृष्णारहिताः । तदेकाभिलाषा इत्यर्थः । अशनं क्षुद्भयम् । जरामरणञ्चेतिषड् र्म्मयः । (१) "मनसः शोकमोहौ च प्राणस्य च तृषा क्षुधा । जरामृत्यू शरीरस्य षड् मिरहितः शिवः" इति वचनात् । नारदः प्राचीनवर्हिषम् ॥४।२९।४०। (११)

गृहेति । आवेशः स्थितिः । कुशलं विहितम् । वार्त्तायाश्रुता तया । यातोनीतः यामः प्रहरो यैः । भगवान् प्रचेतसम् ॥४ ३०।१९(१२

कुतइति । आसवः पुष्परसः कीर्त्तिश्च । महतांमनस्तो-मुखान्निःसृतम् । मनस्त इति प्रथमार्थे तसि ततः समासः । मनः शुद्धामहद्भिर्व्वर्णित मित्यर्थः । क्वचित् कदाचित् । देहंभृता-मित्यार्षोनुमागमः । संसारापादिका या स्मृतिः स्वरूपाज्ञानम् । कुरुक्षेत्रे मिलिता सुहृदः श्रीकृष्णम् ॥१०।८३।३। (१३)

विभ्व इति । विभ्वः प्रगल्भाः । अमृतं सुधा । उदवहानद्यः ।

---

(१) शैवदर्शनकारिका स्पन्दप्रदीपिका व्याख्या च ।

यस्तूत्तमःश्लोकगुणानुवादः,
सङ्गीयतेऽभीक्ष्णममङ्गलघ्नः।
तमेव नित्यं शृणुयादभीक्ष्णम्,
कृष्णेऽमलां भक्तिमभीप्समानः ॥१५॥
ये तु त्वदीयचरणाम्बुजकोशगन्धम्,
जिघ्रन्ति कर्णविवरैः श्रुतिवातनीतम्।
भक्त्या गृहीतचरणः परया च तेषाम्,
नापैषि नाथ हृदयाम्बुरुहात् स्व पुंसाम् ॥१६॥

सरितोगङ्गात्रयम्। अतएव त्रिलोक्या इत्युक्तम्। अमलानि पापानि। अनुश्रूयत इत्यनुश्रवं कथातीर्थम्। श्रुतिभिः श्रवणावृत्त्या अङ्घ्रिजं गङ्गाऽङ्गसङ्गैः स्नानादिभिः। शुचौ सीदन्तीतिशुचिषदः। उपस्पर्श आचमनम्। सामीप्येन सेवा च। तीर्थद्वयोपस्पर्श साध्यस्य शुचिषत्त्वस्य सिद्धवन्निर्द्देशः कार्य्यकारणयोः पौर्व्वापर्य्यरूपातिशयोक्तिरियम्। ये उपस्पृशन्ति तेशुचयः स्युरित्यर्थः। ब्रह्माद्या श्रीकृष्णम् ॥११।६।१८। (१४)

यस्त्विति। अमङ्गलघ्नत्वेन गीयते। प्रतिवाक्यं सातत्यार्थम् शब्दत्रयम्। गानश्रवणाभीप्सानां प्रकर्षार्थं शुकः ॥१२।३।१५। (१५)

ये त्विति। गन्धः कीर्त्तिरामोदश्च। कोषोभाण्डारागारम्। कुड्मलपक्षेहि गन्धाभावः। श्रुतिर्व्वेदः (१)। चरण ग्रहणं कीर्त्त्येकदेशस्यैव श्रुतिगोचरत्वम्। न सर्वकीर्त्तेरिति विज्ञापनार्थं भक्त्या प्रणय पर रसनया। नापैषि नापयासि। ये च कीर्त्तिश्रवण निष्ठास्तेषां मनो न त्यजसीत्यर्थः। ब्रह्मा विष्णुम् ॥३।९।५। (१६)

(१) श्रुतिः—श्रूयतेऽनादिकालतो गुरुपरम्परयाऽलौकिकार्थो न तु केनापि क्रियत इत्यर्थः।

इत्थं परस्य निजधर्म्मरिरक्षयात्त,
लीलातनोस्तदनुरूपविड़म्बनानि ।
कर्म्माणि कर्म्मकषणानि यदूत्तमस्य,
श्रूयादमुष्यपदयोरनुवृत्तिमिच्छन् ॥१७॥

इति विष्णु श्रवणम् ।

## अथ विष्णु-कीर्त्तनम् ।

अयं हि कृतनिर्वेशो जन्मकोट्यंहसा मपि ।
यद्व्याजहारविवशो नामस्वस्त्ययनं हरेः ॥१८॥

श्रवणस्य माहात्म्य विषय (दिग)मुक्ता उपसंहरति । इत्थमिति । परो निराकारः । रिरक्षा रक्षितुमिच्छा । आर्ष मनिट्त्वम् । तस्यानुरूपविड़म्बनानि । अनुचितानि । तत्स्वरूप माहात्म्य पर्य्यालोचने त्वसदृशानीत्यर्थः । जगत्स्रष्ट्रादि कर्त्तुर्हि कंसादि कीट निरसने कियत् कौतुकम् । कर्म्म पापम् । कषणं हिंसा । श्रूयाद्भवानितिराज्ञः । आशीः । अनुवृत्तिं भक्तिम् । शुकः ॥ १०।९०।४९। (१७)

श्रवणं स्तुत्वाकीर्त्तनं स्तौतीत्यर्यमिति । अयमजामिलः । निर्व्वेशः प्रायश्चित्तम् (१) ॥६।२।७। (१८)

(१) "प्रयतत्वाडीपचितं नाशयती"ति प्रायश्चित्तम् ।
"प्रायश्चित्तानि पापक्षयमात्रसाधनानि चान्द्रायणादीनि" । वेदान्तसारः १।३।५।
"प्रायश्चित्तैरपैत्येनो यदज्ञानकृतम्भवेत् । प्रायश्चित्तत्त्वम् ।
कामतोऽव्यवहार्य्यस्तु वचनादिह जायते" ॥ याज्ञवल्क्य स्मृतिश्च ।

एतेनैव ह्यघोनोऽस्य कृतं स्यादघनिष्कृतम्।
यदा नारायणायेति जगाद चतुरक्षरम् ॥१९॥
स्तेनः सुरापो मित्रध्रुग् ब्रह्महा गुरुतल्पगः (१)।
स्त्री राज पितृगोहन्ता ये च पातकिनोऽपरे ॥२०॥
सर्वेषामप्यघवतामिदमेव सुनिष्कृतम्।
नामव्याहरणं विष्णोर्यतस्तद्विषयामतिः ॥२१॥
न निष्कृतैरुदितैर्ब्रह्मवादिभि-
स्तथा विशुद्ध्यत्यघवान्व्रतादिभिः।
यथा हरेर्नामपदैरुदाहृतै-
स्तदुत्तमःश्लोकगुणोपलम्भकम् ॥२२॥

---

एतेनेति। अघोनः म...च्छन्दवद्रूपम्। यदा यस्मिन्नेव काले। एतेनैव कालेन। निमेषत्रयमात्रेण। किं द्वादशाब्देन यतो नाम व्याहरणाद् मद् विषयामतिर्भवति ॥ ६।२।८। (१९)

तदितरैः प्रायश्चित्तैस्तुल्यं पापक्षयमात्रफलत्वात्। इति चेन्न तत्राहः न निष्कृतैरिति।

निष्कृतं प्रायश्चित्तम्। पदग्रहणं सुसंस्कृतेषु नामसु शक्त्यतिशयार्थम्। यत् पुनरुत्तमःश्लोकगुणोपलम्भकं व्याहर्त्तृं विष्णुगुणज्ञानं करोति। तदितरेभ्योऽधिकं पुनः पापप्रवृत्तिनिवारणात् ॥ ६।२। ११। (२०—२२)

---

(१) "स्तेनो हिरण्यस्य सुरां पिबंश्च गुरोस्तल्पमावसन् ब्रह्महा पतन्ति चैते चत्वारः पञ्चमश्चाचरन् तैः" छान्दोग्ये। ५-१०-९ :

नैकान्तिकं तद्धि कृतेऽपि निष्कृते,
मनः पुनर्धावति चेदसत्पथे ।
तत्कर्म्मनिर्हारमभीप्सतां हरे-
र्गुणानुवादः खलु सत्त्वभावनः ॥२३॥
साङ्केत्यं पारिहास्यं वा स्तोभं हेलनमेव वा ।
वैकुण्ठनामग्रहणमशेषाघहरं विदुः ॥२४॥
पतितः स्खलितो भग्नः संदष्टस्तप्त आहतः ।
हरिरित्यवशेनाह पुमान्नार्हति यातनाः ॥२५॥

---

[नैकान्तिकमिति] तस्मात्तत् प्रायश्चित्तं नैकान्तिकं नावश्यकम् । हि यस्मात् असत्पथे (असत्पथे) धावति । भुक्त्यर्थं काम्यं कर्म्म करोति । तत् तस्मान्निर्हारं अत्यन्तनाशम् । गुणानुवादः विष्णोर्गुणान् अनुवृत्त्या । नैरन्तर्य्येण वादयति यद् नामव्याहरणम् तत्तेभ्योऽधिकं । काम्यकर्म्मप्रवृत्तिनिवारणात् । सत्त्वं भावयति विशुद्धोर्ज्जितसत्त्वं स्वान्तःकरणं करोति ॥ ६।२।१२ (२३)

नन्वजामिलेन पुत्रनामगृहीतं न तु विष्णुनामिति चेत्तत्राह साङ्केत्यमिति । साङ्केत्यमन्यत्रपुत्रादौ सङ्केतितम् । पारिहास्यं विष्णुरसीति परिहासेनारोपितम् । स्तोभं गीतालापपरिपूरणार्थं गृहीतम् । हेलनं किं विष्णुनेति निन्दार्थं । विष्णोरिदं नामेति ज्ञानच्चेत् तात्पर्य्यं विनापि फलप्रदमित्यर्थः ॥ ६।२।१४ (२४)

यद्यपि विष्णुनामैव पुत्रनामज्ञातञ्च तथापि सम्भ्रमादज्ञातमिति चेत्तत्राह,—पतित इति । अवशेन सङ्कल्पं विना व्यथावेगाद्यैर्निर्गता वर्णास्ते दैवाद् विष्णुनामरूपा जाता इत्यर्थः । तथापि यातनां नार्हति ।' पापक्षयात् कीर्त्तनं हि तत्र निष्फलम् । श्रवणन्तु

आपन्नः संसृतिं घोरां यन्नाम विवशो गृणन्।
ततः सद्यो विमुच्येत यद् बिभेति स्वयम्भयम् ॥२६॥
न यद्वचश्चित्रपदं हरेर्यशो-
जगत् पवित्रं प्रगृणीत कर्हिचित्।
तद्वायसंतीर्थमुशन्ति मानसा-
न यत्र हंसानिरमन्त्युशिक्क्षयाः ॥२७॥
तद्वाग् विसर्गो जनताघविप्लवो
यस्मिन् प्रतिश्लोकमबद्धवत्यपि।

---

निष्पन्नमेवान्यकीर्त्तितनामवद् यस्यामवस्थायां सङ्कल्पं विना कीर्त्तयति न च तच्छृणोति तस्यां न पापक्षयः। अतिप्रसङ्गात्। अकारो हि प्रसिद्धं विष्णुनाम। तद् यथा कथञ्चि द्येन कीर्त्तितं श्रुतं (स्मृतं) वा स कोऽपि नास्ति। तस्मादिदं विष्णुनाम तच्च मया कीर्त्तितं श्रुतं स्मृतञ्चेति यस्य ज्ञानं तस्यैव पापक्षयः इत्यश्लोकार्थम्। विष्णुदूता यमदूतान् ॥ ६५ (२५)

आपन्न इति। गृणान् कीर्त्तयन्। सूतम् ॥१।१।१४। (२६)

यदित्यादि। वचो वाक्यं चित्राणिपदानि यत्र तत्तथा। जगत् पवित्रं यस्मात् तत्तथा। कर्हिचिदुशन्ति मन्यन्ते मानसा-हंसाः। अत्र मनसि भवाः सनकादयः। विरमन्ति विशेषाद्रमन्ते। उशिक् उत्तमः क्षयो निवासो येषां ते तथा। काकतीर्थपक्षे मानससरोवरस्थाः ॥१।५।१०। (२७)

विष्णु महिमाशून्यं वाक्यं निन्दितत्वात् तत् सहितं स्तौति।

नामान्यनन्तस्य यशोऽङ्कितानियत्,
शृण्वन्ति गायन्ति गृणन्ति साधवः ॥२८॥

इदं हि पुंसस्तपसः श्रुतस्य वा,
स्विष्टस्य सूक्तस्य च बुद्धदत्तयोः।
अविच्युतोऽर्थःकविभिर्निरूपितो-
यदुत्तमः श्लोकगुणानुवर्णनम् ॥२९॥

प्रायेण मुनयो राजन् निवृत्ता विधिसेधतः।
नैर्गुण्यस्था रमन्तेस्म गुणानुकथने हरेः ॥३०॥

---

तद्वागिति। वाग्विसर्गो वाक्यप्रयोगः। जनता जनसमूहस्तस्या अघं पापं तस्य विप्लवो विनाशहेतुः कोऽसौ यस्मिननन्तस्य नामानि अवद्यं दुष्टं पदं यद् यस्मात् तंवाग्विसर्गं साधवः वक्तरि सति शृण्वन्ति। श्रोतरिसति गृणन्ति। उभयाभावे स्वयं गायन्ति॥ १।५।११। (२८)

इदं इति। सर्व्वस्य सत्कर्म्मणो विष्णुभजनं फलमिति श्लोकार्थः। सूक्तं सदुपदेशः। तस्य ग्रहणं श्रुतं (तस्यार्थावधारणाद्-बुद्धम्) तस्यानुध्यानं स्विष्टम्। दत्तं तपश्च। अविच्युत अविनाशो। नारदः व्यासम् ॥१।५।२२। (२९)

प्रायेणेति। नैर्गुण्यं परंब्रह्म (१) शुकः ॥ २।१।७ (३०)

---

(१) "साक्षी चेता केवलोनिर्गुणश्च" श्वेताश्वतरः—६।११।

यन्नामश्रुतमनुकीर्त्तयेदकस्मात्,
आर्त्तो वा यदि पतितः प्रलम्भमाद्वा।
हन्त्यंहः सपदि नृणामशेषमन्यम्,
कंशेषाद्भगवतः आश्रयेन्मुमुक्षुः ॥२१॥
एतन्निर्विद्यमानानामिच्छतामकुतोभयम्,
योगिनां नृपनिर्णीतं हरेर्नामानुकीर्त्तनम् ॥२२॥
पतितः स्खलितश्चार्त्तः क्षुत्त्वा वा विवशोब्रुवन्।
हरये नम इत्युच्चैर्मुच्यते सर्वपातकात् ॥२३॥
संकीर्त्त्यमानो भगवाननन्तः,
श्रुतानुभावो व्यसनं स्वपुंसाम्।
आविश्यचित्तं विधुनोत्यशेषम्,
यथा तमोऽर्कोऽभ्रमिवातिवातः ॥२४॥

---

यन्नामेति। यस्यनामश्रुतंसन्नृणां अंहःपापंहन्ति। यस्यानुकीर्त्तयेत् तस्यापि आर्त्तोरोगी। प्रलम्भनं परिहासः। ततः शेषादनन्तात्। अन्यं कं मुमुक्षुराश्रयेत् शुकः ॥५।२५।११। (२१)

एतदिति। योगिनः समाहिताः। शुकः ॥२।१।११। (२२)

पतित इति। क्षुत्वा क्षुतं कृत्वा ॥११।१२।४७। (२३)

संकीर्त्त्यमानेति। अनुभावो महिमा। व्यसनं मलम्। तच्चेद्द्वेधा मायिकं कार्य्यञ्च। तत्रोभयोरपि निवर्त्त्यं विवक्षया तमोऽभ्रयो (भ्रमयो) रुपादानम्। सूतः ॥११।१२।४८। (२४)

मृषागिरस्ताह्यसतीरसत्कथा,
न कथ्यते यद् भगवानधोक्षजः ।
तदेव सत्यं तदुहैव मङ्गलम्,
तदेव पुण्यं भगवद् गुणोदयम् ॥३५॥
तदेव रम्यं रुचिरं नवं नवम्,
तदेव शश्वद् मनसो महोत्सवः ।
तदेव शोकार्णव शोषणं नृणाम्,
यदुत्तमःश्लोकयशोऽनुगीयते ॥३६॥
कलेर्दोषनिधे राजन्नस्तिह्येको महान् गुणः ।
कीर्त्तनादेव कृष्णस्य मुक्तबन्धः परं व्रजेत् ॥३७॥
यन्नामधेयं म्रियमाण आतुरः,
पतन् स्खलन् वा विवशोगृणन् पुमान् ।

---

मृषेति । मृषा असत्याः । वाच्यस्य मिथ्या भूतत्वात् । असतीः अमङ्गलाः । असत्कथा अपुण्यरूपाः यद् याभिः ॥ उ अहोद्धप्रसिद्धम् । भगवतां श्रीमतां गुणानामुदयो यस्मात्तथा । कास्तर्हि समीच्याह तदेवेति ॥१२।१२।४८। (३५)

(तदेवेति) । रुचिरंप्रीतिवर्द्धनम् । तदेवरम्यं आयतौ सुन्दरम् । अतोनवं नवं शश्वत् आपद्यनापदि च । शोक शोषकाम् महोत्सवश्च यस्मिन् । सूत शौनकादीन् ॥१२।१२।५०। (३६)

कलेरिति । परं वैकुण्ठम् शुकः ॥१२।३।५१। (३७)

यदिति । आतुरः सरोगः । कर्मपापम् । उत्तमागतिर्मोक्षः ।

विमुक्तकर्म्मार्गला उत्तमां गतिम्,
प्राप्नोति यक्ष्यन्ति न तं कलौ जनाः ॥३८॥
इत्थं हरेर्भगवतो रुचिरावतार-
वीर्य्याणि बालचरितानि च शन्तमानि।
अन्यत्र चेह च श्रुतानि गृणन् मनुष्यो-
भक्तिं परां परमहंस गतौ लभेत ॥३९॥

इति श्रीवोपदेवकृते मुक्ताफले विष्णुकीर्त्तनमहिमा-
नामाष्टमोऽध्यायः। इत्यष्टमोऽध्यायः ॥८॥

---

मोयक्ष्यन्ति नपूजयन्ति। शुकः राजानम् ॥१२।३।४४। (३८)

उपसंहरति—

इत्थमिति। रुचिरैरि। प्रौढ़चेष्टितानामुक्तिः। सन्तमानि सुख्यात्मकानि, स्रुतानि प्रसृतानि। चकारद्वयमुभयत्र प्राधान्यार्थम्। परां प्रेमात्मिकाम्। शुकः राजानम् ॥ ११।३१।२८ (३९)

इति श्रीहेमाद्रिविरचितकैवल्यदीपिकायां विष्णुकीर्त्तनमहिमा-
नामाष्टमोऽध्यायः ॥८॥

समाप्तोऽष्टमोऽध्यायः।

# नवमोऽध्यायः ।

## अथ विष्णु-स्मरणम् ।

तस्मिन् प्रविष्टेऽसुरकूटकर्म्मजा,
मायाविनेशुर्महिना महीयसः ।
स्वप्नो यथाहि प्रतिबोध आगते,
हरेः स्मृतिः सर्वविपद्विमोक्षणम् ॥१॥

एतावान् सांख्ययोगाभ्यां स्वधर्म्मपरिनिष्ठया ।
जन्मलाभः परं पुंसामन्ते नारायणस्मृतिः ॥२॥

यशः श्रियामेव परिश्रमः परो
वर्णाश्रमाचार तपः श्रुतादिषु ।

---

तस्मिन् विष्णौ कुटकर्म्म माया प्रदर्शनम् । महिनामाहात्म्येन । हिशब्दो भिन्नक्रमः । हरेस्मृतिर्हीत्यर्थान्तरन्यासः । शुकः राजानम् ॥ ८।१०।५५। (१)

एतावानिति । सांख्यं प्रकृतिपुरुष-विवेकः । योगश्चित्त वृत्ति निरोधः (१) । स्वधर्म्म परिनिष्ठा नित्य नैमित्तिकानुष्ठानम् । एभिस्त्रिभि रेतावान् परोजन्म लाभः । जन्मनः साफल्यम् यदन्ते नारायणस्मृतिः । शुकः राजानम् ॥२।१।६। (२)

यश इति । यशसां श्रीणाञ्च सम्बन्धिषु यशोनिमित्तेषु श्रीनिमित्तेषु आचारादिषु यःपरः केवलः परिश्रमः क्लेश एव नतु

---

(१) पातञ्जलदर्शनं १।१।१ सूः ।

गुणानुवाद श्रवणादरादिभि-
रविस्मृतिः कृष्णपदारविन्दयोः ॥३॥
अविस्मृतिः श्रीधरपादपद्मयोः,
क्षीणोत्यभद्राणि च सन्तनोति ।
सत्त्वस्य शुद्धिं परमाञ्च भक्तिम्,
ज्ञानञ्च विज्ञानविरागयुक्तम् ॥४॥
विद्या तपो प्राण निरोधमैत्री-
तीर्थाभिषेक व्रतदानजप्यैः ।
नात्यन्तशुद्धिं लभतेऽन्तरात्मा,
यथा हृदिस्थे भगवत्यनन्ते ॥५॥

---

फलम् । यद् भगवत् पादयोरविस्मृतिः । साच गुणानुवादादिभिः ॥ १२।१२।५४। (३)

ननु किमविस्मृत्येति तत्राह । अविस्मृतिरिति । क्षिणोति छिनत्ति । अभद्राणि दुर्व्वासनाः । शंसुखम् । सत्त्व शुद्धिनीरजस्कता । ततो भगवति प्रेम । ततोऽन्यत्र विरागः । ततः परोक्षबोधः । ततः साक्षात्कारइत्यर्थः । सूतः शौनकम् ॥१२।१२।५५। (४)

विद्या वैश्वानरोपासना (वैश्वानराद्युपासना) (१)। प्राण निरोधः प्राणायामः । 'अप्यं प्रणवादि नान्यत् (२) ॥१२।३।४८। (५)

(१) छान्दोग्य—५।१२।१ ।

(२) "तज्जपस्तदर्थभावनम्" पातञ्जलदर्शनं १।१।२८ सू ।

तस्मात् सर्वात्मना राजन् हृदिस्थं कुरु केशवम् ।
म्रियमाणो ह्यवहितस्ततो यासि पराङ्गतिम् ॥६॥
म्रियमाणैरभिध्येयो भगवान् परमेश्वरः ।
आत्मभावं नयत्यङ्ग सर्वात्मा सर्व्वसम्भवः ॥७॥

इति श्रीवोपदेवकृते मुक्ताफले विष्णुस्मरणं नाम
नवमोऽध्यायः ॥९॥

---

तस्माद् यस्मात्। ततो हरिः स्मरणात्। पुरुषः पराङ्गतिं याति शुकः राजानम् ॥१२।३।४९। (६)

म्रियमाणैरिति। आत्मभावं स्वरूपप्राप्तिम्। सर्व्वात्मना सुलभत्वम्। सर्व्वात्मत्वात् सर्व्वसम्भवैत्वात्। भक्तस्य विष्णु विवर्त्तत्वात् सद्भावापत्तिः। शुकः राजानम् ॥१२।३।५०। (७)

इति हेमाद्रिविरचितायां कैवल्यदीपिकायां विष्णुस्मरणं नाम
नवमोऽध्यायः ॥९॥ इति नवमोऽध्यायः।

## दशमोऽध्यायः ।

### अथ विष्णुश्रवणकीर्त्तने ।

एकान्तलाभं वचसोऽनु पुंसाम्,
सुश्लोकमौलेर्गुणवादमाहुः ।
श्रुतेश्च विद्वद्भिरुपाकृतायाम्,
कथासुधायामभिसम्प्रयोगम् ॥१॥

शृण्वतः श्रद्धया नित्यं गृणतश्च स्वचेष्टितम् ।
कालेन नातिदीर्घेण भगवान् विशते हृदि ॥२॥

यथायथात्मा परिमृज्यतेऽसौ,
मत्पुण्य गाथा श्रवणाभिधानैः ।
तथातथा पश्यति तत्त्व सूक्ष्मम्,
चक्षुर्यथैवाञ्जन संप्रयुक्तम् ॥३॥

एतन्मुहुःकीर्त्तयतोनु शृण्वतो
न रिष्यते जातु समुद्यमः क्वचित् ।

एवं प्रत्येकं श्रवणादिभिः स्तुत्वा व्यतिषङ्गेणस्तोतुमाह । एकेति । नु अाहो । उपकृता निरूपिता मैत्रेयो विदुरम् ॥३।६।-३६। (१)

शृण्वत इति । नाति दीर्घोऽत्यल्पः ब्रह्मा नारदम् ॥२।८।४। (२)

यथेति । तत्त्वेषु प्रकृत्यादिषु सूक्ष्मं पुरुषाख्यम् । श्रीभगवान् उद्धवम् ॥११।१४।२६। (३)

यदुत्तमः श्लोकगुणानुवर्णनम्,
समस्त संसार परिश्रमापहम् ॥४॥
इति वोपदेव विरचिते मुक्ताफले
विष्णुश्रवण कीर्त्तने ॥

---

अथ विष्णु स्मरण कीर्त्तने ।
वयन्त्विह महायोगिन् भ्रमन्तः कर्म्मवर्त्मसु ।
त्वद्वार्त्तया तरिष्याम स्तावकै र्दुस्तरंतमः ॥५॥
स्मरन्तः कीर्त्तयन्तस्ते कृतानि गदितानि च ।
गत्युस्मितेक्षण क्ष्वेलिर्यन्नृलोक विडम्बनम् ॥६॥
अथ विष्णु-श्रवण-कीर्त्तन-स्मरणानि ।
अशेष संक्लेश शमंविधत्ते

एतदिति । एतद्विष्णुयशः । नोरिष्यते नोनश्यति । यत् यस्मात् अनुवर्णनमिति । पक्षे द्विर्निजल्पम् । तथाच सति अन्यस्मिन् वक्तरि स्वस्य श्रवणम् । स्वार्थनिजल्पपक्षेतु कीर्त्तनमिति द्वयमपि सुतम् । शुकः राजानम् ॥ ८।१२।४६ (४)

इति कैवल्यदीपिकायाम् विष्णुश्रवण कीर्त्तने ॥

अथ विष्णुस्मरणकीर्त्तने । (वयन्त्विहेति) त्वद्वार्त्तया । अनुसंहितया । कीर्त्तितया वा । अन्यथास्येहपाठश्चिन्त्यः । तावकैर्भक्तैः सहतरिष्यामः ॥ ११।६।४८ (५)

स्मरन्त इति । तस्मिन् उत्तमं हास्यम् । क्ष्वेलिः परिहासः । "हन्द्वैकत्वात्पुंसकत्वम्" । उद्धवः श्रीकृष्णम् ॥ ११।६।४९ (६)

अथ विष्णुश्रवण-कीर्त्तन-स्मरणानि । अशेषेति । अशेष

गुणानुवादश्रवणं मुरारेः ।
किम्बा पुनस्तच्चरणारविन्द
पराग सेवारति रात्म लब्धा ॥७॥

अयातयामास्तस्यासन् यामाः स्वान्तर यापनाः ।
शृण्वतोध्यायतो विष्णोः कुर्व्वतोब्रुवतः कथाम् ॥८॥

श्रवणात् कीर्त्तनाद्ध्यानात् पूयन्तेऽन्तेवसायिनः ।
तव ब्रह्ममयस्येश किमुतेक्षाभिमर्शिनः ॥९॥

मर्त्त्यस्तया ननु समेधितया मुकुन्द-
श्रीमत्कथा श्रवण कीर्त्तन चिन्तयैति ।

संक्लेशाः । "अविद्याऽस्मितारागद्वेषाभिनिवेशाः" । अनुवादः कीर्त्तनम् । सेवामनसःसन्निधानम् । तत्ररतिः प्रीतिः । आत्मलब्धा स्वाभाविकी । मैत्रेयो विदुरम् ॥ ३।७।१४ (७)

अयातेति । तस्य स्वायम्भुवस्य । यात यामाः उपभुक्ताः । तद्विपरीता अयातयामाः । पुनः पुनरूपभुज्यमानाऽप्यपूर्व्ववदुपभोग्येत्यर्थः । यावद्भिर्यामैर्मन्वन्तरं समाप्तं तावन्तो यामाः । विष्णुकथासम्बन्धादुत्तरोत्तरम् रमणीयाजाता इत्यर्थः । कुर्व्वतः स्ववाक्यैर्ब्रुवतः । मैत्रेयः ॥ ३।२२।३५ (८)

श्रवणादिति । अन्तेवसायिनोऽन्त्यजाः । ब्रह्ममयो ब्रह्मरूपः । ईक्षादर्शनम् । अभिमर्शः स्पर्शः । तौ विद्येते येषां ते तथा । नारदः श्रीकृष्णम् ॥ १०।७०।४३ (९)

मर्त्त्य इति । तया ब्रह्मसभादौ प्रसिद्धया श्रवणकीर्त्तनचिन्तयेति । द्वन्द्वैकत्वेऽपि नपुंसकत्वमिति कौर्म्यं जयेति भवेत्कम् ।

तद्धाम दुस्तर कृतान्तजवापवर्गं
ग्रामादवनं क्षितिभुजोपिययुर्यदर्थाः ॥१०॥

यानीह विश्व विलयोद्भववृत्तिहेतुः
कर्म्माण्यनन्यविषयाणि हरिश्चकार ।
यस्त्वङ्ग गायति शृणोत्यनुमोदते वा
भक्तिर्भवेद्भगवति ह्यपवर्गमार्गे ॥११॥

तस्यावितुः स्थिरचरेशितुरङ्घ्रि मूलं
यत्स्थं न कर्म्म गुणकाल रजः स्पृशन्ति ।
यद्वै स्तुवन्ति निनमन्ति जपन्त्यभीक्ष्णं-
ध्यायन्ति वेद-हृदया मुनयस्तदाप्तुं ॥१२॥

---

तद्धाम वैष्णवं स्थानम् । कृतान्तस्य यवो वेगः । अपवर्ज्जनं निवृत्ति-र्यस्मिन् तत् । अकालकलितमित्यर्थः । यदर्था मद्धामाभिलाषाः । शुकः ॥ १०।८०।५० (१०)

यानीति । वृत्तिः स्थितिः । अनन्यविषयाणि अनन्यसाध्यानि गानं कीर्त्तनम् । अनुमोदनम् मानसस्वीकारः । स च स्मरण-पूर्व्वकः । शुकः ॥ १०।६८।४५ (११)

तस्येति । अवितुः रक्षकस्य ईशितुः स्रष्टुः । संहर्त्तुश्चाङ्घ्रि-मूलम् । तदुत्तरश्लोकस्थेन भजामीत्यनेनान्वयः । यत्स्थं यत्र स्थितम् कर्म्म । पुण्यपापे । गुणारजप्रभृतयः । कालोमृत्युः । तएव विकारापादकत्वात् रजो रोगाः । एते स्पृशन्त्यपिनो-दूरे बाधवार्त्ताः । स्तुतिर्व्वाचा गुणकीर्त्तनम् । जपो मनसा । "जपव्यक्तदुच्चार" इति धातु-सूत्रात् । निनमन्ति प्रणमन्ति । उपसर्गयोगादयमर्थः । "धात्वर्थं

मनसोवृत्तयोनःस्युः कृष्णपादाम्बुजाश्रयाः।
वाचाभिधायिनीर्नाम्नां कायस्तत् प्रह्वणादिषु ॥१३
कर्म्मभिर्भ्राम्यमाणानां यत्रक्वापीश्वरेच्छया।
मङ्गलाचरितैर्दानैरतिर्नः कृष्ण ईश्वरे ॥१४॥

इति श्रीबोपदेवविरचिते मुक्ताफले विष्णुभक्त्यङ्ग वर्गप्रकरणं नाम दशमोऽध्यायः ॥*॥

इति दशमोऽध्यायः ॥१०॥

---

बाधते कश्चित् कश्चित्तमनुवर्त्तते" इत्युपसर्गवृत्तौ। वेदो हृदये येषां ते तथा॥ तदाप्त्यै विष्णुप्राप्तये। मार्कण्डेयः नारायणम् ॥१२।८४२(१२)

मन इति। अभिधायिनोः अभिध्यायिन्यः। तेषु नामसु। प्रह्वणम् नम्रता। सा च कीर्त्तनस्य पृथगुक्तत्वात्। श्रवणादरेणेत्यर्थ सिद्धम्। आदिशब्दात् तालस्वरादि॥ १०।४७।६६ (१३)

कर्म्मभिरिति। मनसो वृत्तय इत्येव सिद्धे सति न इति पुनर्व्वचनं त्रिवर्गमध्येऽपि स्मरणस्यान्तरङ्गतां वक्तुं एतान्येव हि शास्त्रेषु श्रवणमनननिदिध्यासनशब्दैरुच्यन्ते। नन्दादय उद्धवम्॥ १०।४७।६७ (१४)

इति हेमाद्रिविरचितायां कैवल्यदीपिकायां विष्णुभक्त्यङ्गवर्गप्रकरणम्।

[ इति दशमोऽध्यायः। समाप्तं पूर्व्वार्द्धम् ॥ ]

# एकादशोऽध्यायः।

## अथ विष्णुभक्तप्रकरणम्।

### तत्र विष्णुभक्तस्य लक्षणं भेदाश्च।

सकृन्मनः कृष्णपदारविन्दयो-
र्निवेशितं तद्गुणरागियैरिह।
नते यमं पाशभृतश्च तद्भटान्-
स्वप्नेऽपि पश्यन्तिहिचीर्णनिष्कृताः ॥१॥

---

एवमियता प्रबन्धेन "विष्णुं पञ्चात्मकम्" (१) इत्यस्य पादत्रयम् विविच्य शिष्टं व्याख्यातुमिदमारभ्यते। अथेति। तत्रापि "नागृहीतविशेषणा बुद्धिर्विशेष्ये चोपजायते" (विशेषणमुपसंक्रामतीति) इति न्यायात् सामान्यपरिहारेण विशेषप्रतिपत्त्यसम्भवात् भक्त सामान्य लक्षणमवतारयितुमाह तत्रेति। सकृदिति। सकृदित्यादिषु अपिशब्दः प्रत्येकं [सम्बध्यते]। सकृदपि किंपुनः अभ्यासेन। मनः संशयात्मकमन्तःकरणम्। किं पुनर्निश्चयात्मिका बुद्धिः। पदारविन्दयोरपि किं पुनः सर्व्वमूर्त्तौनिवेशितम् बलादपि। किंपुनः स्वतोनिविष्टम्। तद्गुणेष्वपि रागि किंपुनः तत्स्वरूपे। यैरिहेति सामान्य वाचिभ्यां सर्व्वनामभ्यां मनोनिवेशने जातिदेश विशेषानपेक्षेति गम्यते। यैर्निवेशितं ते बलादपि ते भक्ता इति शेषः। तेषां फलमाह। नेति चकारादयमश्च पाशभृतं पाशग्रहणमन्यस्यापि कराल दंष्ट्रत्वादेः भीषणस्योप लक्षणं यममपि न पश्यन्ति किमपुनर्निरयम्। स्वप्नेऽपि किंपुनः प्रत्यक्षेण न पश्यन्ति किंपुन-

---

(१) मुक्ताफलम् १।१। श्लोकः।

स नवधा भक्तः नवविधत्वे हेतुमाह भक्तीति।

भक्तिर्विहिताविहिता च।

भक्तिरसस्यैव हास्य-शृङ्गार-करुणरौद्र-भयानक-वीभत्स-शान्ताद्भुत-वीररूपेनानुभवात्।

इति मुक्ताफले भक्तानां लक्षणं भेदाश्च॥

व्यासादिभिर्वर्णितस्य विष्णोर्विष्णु-भक्तानाम्वाचरितस्य नवरसात्मकस्य श्रवणादिना-जनितश्चमत्कारो भक्तिरसः॥

तत्र हास्यरसे गोप्यः। स च त्रेधा। वत्सान् मुञ्चन् क्वचिद् समये क्रोश सञ्जातहासः

स्तेयं स्वाद्वत्त्यथ दधिपयः कल्पितैः स्तेयोगे॥

मर्कान् भोक्ष्यन् विभजति सचेन्नात्ति भाण्डं भिनत्ति

द्रव्यालाभे स्वगृह कुपितो यात्युप क्रोश्य तोकान्॥२॥

---

स्तज्जनादि। कुत एतद् हि यस्मात् चीर्णनिस्तता आचरित प्रायश्चित्ताः। पापोपहतानां हि यमदर्शनादि, भक्त्या च सर्व्वपाप क्षय इत्यसकृदुक्तम्। ततश्च भगवन्निविष्टचित्तो भक्त इति लक्षणार्थः। शुकः॥ ६।१।१९ (१)

एवं भक्त सामान्य लक्षण मुक्त्वा तद् विशेषमाह। सभक्तः नवविधत्वे हेतुमाह। भक्तीति। भक्तिर्विहिताविहिता च। सैव-परां प्रकर्ष रेखामापन्ना रसः। यदाहुः "भावाएवाति सम्पन्नाः प्रयान्ति रसतामसौ"ति भक्तिरसानुभवाच्च भक्तः। यथा रूपानुभवात् रूपवत्युच्यते। सचानुभवो नवधा। हास्यादि भक्ति भेदेन,

हास्यादय एवहि भगवति प्रयुज्यमाना। "तस्मात् केनाप्युपायेन मनः कृष्णेनिवेशयेदिति" (१)। भक्ति लक्षणाक्रान्तत्वाद् भक्तिरस पदवो भासाधयन्ति इति भावः। हास्यादि लक्षणन्तु वक्ष्यति ते चा-मी नवापि सुख दुःख मह्यात्मक त्रैगुण्य व्यतिकरोद्भवाः। तथाहि प्रथमे त्रयो रजोमूलाः। मध्यास्तुतमोमूलाः। चरमे सत्वमूला इति। हास्यदयोहि रजः प्रभृतीनां विकार इत्युक्त मेकादशस्य पञ्चविंशाध्याये तथापि प्रथमेषु त्रिषुक्रमात् सत्त्व संमिश्रम्। तमः संमिश्रम्। सत्त्वतमः संमिश्रञ्च। रजोमूलं मध्येषु रजोमिश्रं सत्त्वमिश्रं रजःसत्त्वमिश्रञ्च तमः। चरमेषु तमोमिश्रं रजस्तमोमिश्रञ्च सत्त्वं हेयाभिधान क्रमेण चैष रौद्रादोनां तामसत्वेनामङ्गलत्वात् प्रथम मनभिधानम्। ननु तथापि करुणस्य स्पृहनोयत्वेन सर्व्वं प्राणोनामत्यन्त परिचितत्वात् (२) "शृङ्गारोनायकोरसः" इति नाट्याचार्य्य प्रसिद्धेः। शृङ्गार प्राधान्य मियर्त्तिप्रप्नोतीति व्युत्पत्तेश्च। रसेषु शृङ्गारस्य प्राधान्य मितिगम्यते। ततश्च तस्यैव धुरिनिवेशन-मुचितम्। किमिति हास्यरसोऽभिनिवेशितः। सत्यं किन्तुनात्र कैवल्यपरे शास्त्रे भक्तिपरः शृङ्गारः प्रधानमिति द्योतयितु माचा-र्य्येण नैषः प्रथम मुक्तः। एवं सति कस्मिन्नपि प्रथम मभिधातव्ये हास्यरसस्याल्प परिकरत्वात् सएवोक्तः। स्थायिभावादय एषां भरतादावुक्ताः। तथाहि 'हासारति शोकक्रोधभो-जुगुप्सा-शम स्मय-उत्साहश्च क्रमादेषु "स्थायिभावा रसेष्वमो" (३)। तत्र वाग्-वेषादि वैकृतैश्चेतोविकाशोहासः। परस्पर मास्थाबन्धोरतिः।

---

(१) भागवतम् ७।१।३१ श्लोकः।

(२) भरतप्रणीतनाट्यशास्त्रे शृङ्गाररसनिरूपणे।

(३) भरतमुनि-प्रणीतनाट्यशास्त्रं, भरतप्रणीतामरटीकायां, भक्तिरसामृतसिन्धौ दक्षिण-भागेप्रथमलहर्य्यां साहित्यदर्पण—तृतीयपरिच्छेदे विशेषतोऽस्ति।

इष्टनाशादि प्रभवं चित्तस्य वैधुर्य्यं शोकः। प्रतिकूलेषु तैक्ष्ण्यस्य प्रबोधः क्रोधः। रौद्र शक्त्यादि जनितं लौकिक प्रकृतिः कचित्तस्य वैक्लव्यं भयम्। दोषदर्शनादिभिः पदार्थानां गर्हणाजुगुप्सा। पदार्थेषु तृष्णाक्षयः शमः। तेष्वेव लोकसीमातिक्रमस्य दर्शनात् चित्तस्य विस्मृति र्विस्मयः। कार्य्यारम्भेषु संरम्भः स्थेयानुत्तम प्रकृतिरुत्साहः। 'तथा' सितः श्यामः कपोतश्च रक्तः कृष्णश्चनीलकः। विशदः पीत गौरौचेत्येषु वर्णाःक्रमादमी" (१)। तदुपयोगस्तु "चित्रे ध्याने च ध्याता च ते मुख्यरोगं निर्हरन्तौ" त्यभिनव-गुप्तपादाः। "प्रथमौ मन्मथयमौरुद्रकालौ यथाक्रमम्। महाकाला-जितौ ब्रह्म महेन्द्रास्तेडु देवताः" (२)। एव मेवम्विधहास्यादि नवक भङ्ग्या भक्तिरसोऽनुभूयते। ननु कथं भक्ते रसत्वं रसलक्षणा-भावात्। तत्र दशरूपकादौ (३) "विभावैरनुभावैश्च सात्विकै-र्व्यभिचारिभिः। आनीयमानः स्वाद्यत्वं स्थायिभावोरसःस्मृतः॥ (४)

एतद्विवृणुते। वक्ष्यमाणस्वभावै र्विभावादिभिः काव्योपात्तै-रभिनयोपदर्शितैर्व्वा श्रोतृप्रेक्षकानामन्त र्विपरिवर्त्तमानो रत्यादि-स्थायि स्वादगोचरतां निर्भरानन्द सम्विदात्मतां नीयमानो रसस्तेन रसिकाः सामाजिकाः। काव्यन्तु तथाविधानन्द सम्विदुन्मीलन-हेतुत्वेन रसवत्। "आयुर्घृतमिति वद्" (५) विभावादि लक्षणन्तु "कारणान्यथ कार्य्याणि सहकारीणि यानि च। रत्यादौ स्थायिनो लोके तानिचेन्नाट्य काव्ययोः॥" विभावा अनुभावास्ते

(१) अमरटीकायां भरतः। भरतमुनेः प्रणीतनाट्यशास्त्रं च।

(२) भरतसूत्रव्याख्याने परमभट्टारकाभिनवगुप्तपादाचार्य्याः।

(३) दशरूपके

(४) उज्ज्वलनीलमणौ भक्तिरसामृतसिन्धौ काव्यप्रकाशे च।

(५) ब्रह्म संहिता प्रथम श्लोकटीकायां श्रीजीव गोस्वामी।

कथ्यन्ते व्यभिचारिणः ॥" (१) विभावाश्चैषा केचिदालम्बनरूपाः। तथा शृङ्गारे गोप्योगोविन्दश्च। केचिदुद्दीपका यथात्रैव चन्द्रतपादयः। अनुभावास्तु कटाक्षादयः। "पृथगभावा भवन्त्यन्येऽनुभावत्वेऽपि सात्त्विकाः। सत्त्वादेव समुत्पत्तेस्तच्च तद्भाव भावनम् ॥" ते च "स्तम्भ प्रलय रोमाञ्चा स्वेदोवैवर्ण्यवेपथुः। अश्रुवैस्वर्य्यमित्यष्टौ स्तम्भोऽस्मिन्निष्क्रियाङ्गता। प्रलयोनष्टसंज्ञत्वं शेषाःसुव्यक्त लक्षणाः ॥ विशेषादाभिमुख्येन चरन्तोव्यभिचारिणः। स्थायिन्युन्मग्ननिमग्नाः कल्लोलाइव वारिधौ ॥" ते च "निर्व्वेद-ग्लानि-शङ्काऽमर्ष धृति जड़ता हर्षदैन्योग्रचिन्ता, त्रासेर्ष्यामर्षगर्व्वाः स्मृति-मरणमदाःसुप्तिनिद्रावरोधः। व्रीड़ापस्मार मोहाः समति रलसता वेगतर्कावहित्था, वाध्युन्मादौ विषादोत्सुकचपलता त्रिंशदेतेत्रयश्च ॥" "विरुद्धैरविरुद्धैर्व्वा भावे र्व्विच्छिद्यतेनयः। आत्मभावं नयत्यन्यान् स स्थायी लवणाकरः ॥" (२) एवम्विधविभावादि संयोगाद्रसो निष्पद्यते। तस्य च मुख्ययावृत्त्या रामादावनुकार्य्यवृत्तिः। नटरूपवलादित्येकः पक्षः। अनुकर्त्तर्य्येवेति द्वितीयः। सामाजिकेष्विति तृतीयः। रससंविद उभयतोदत्तपादत्वादनुकर्त्तरि सामाजिकेषु चेति चतुर्थः (३) स च रसः कार्य्य इति केचित्। ज्ञाप्यइत्येके। भोग्यइतन्ये। व्यङ्ग्य इत्यपरे सुधीभिस्तु तत्रैवानुसन्धेयाः ग्रन्थ गौरव भयान्नेति प्रतन्यते।

---

(१) काव्य प्रकाशे,—"विभावाअनुभावाश्च कथ्यन्ते व्यभिचारिणः। व्यक्तः सतैर्विभावाद्यैः स्थायी भावो रसः स्मृतः" ॥

(२) भावस्त्रिविधः। स्थायि व्यभिचारि सात्त्विकाः। रतिहास शोक क्रोध उत्साह भय जुगुप्सा विस्मयादयः स्थायिभावाः। निर्वेदग्लानि शङ्का असूयादयः व्यभिचारिणः। स्वेद स्तम्भ रोमाञ्च स्वरभङ्गादयः सात्त्विकाः इत्यमरटीकायां भाव शब्दे भरतः उज्ज्वल नीलमणौ अनुभावविवृति प्रकरणे।

(३) दशरूपके नाट्यसूत्र व्याख्याने च।

तस्माद्विभावादि रससामग्री विरहाच्च भक्तेरसत्वम्। अतएवात्र मन्यैरेवं भक्तावपिवाच्यमिति वदद्भि प्रत्यादिष्टः। अत उत्तरं पठति व्यासादिभिरिति वर्णितस्य चरित्रस्य विष्णुभक्ता गोप्यादयः श्रवणादिनेत्यादि श्रव्दाहृग्रंन कीर्त्तन स्मरणाभिनयाः। चमत्कारः सामाजिकानां हि यस्मादेवं सामग्रीको भक्तिरसस्तस्मात् अनपह्नवनीय इत्यर्थः। तत्रैषा—सामग्री केनाप्युपायेन मनोनिवेशः कार्यो। चरित्र श्रवणादय उद्दीपन विभावाः। विष्णु भक्तास्वालम्बनमनुभावास्तु स्तम्भादयो वक्ष्यमाणा यथायोग्यं धृत्यादि व्यभिचारिणश्च। उपायस्तुरति हास्यादि कविभिवर्णितस्येत्यनेन महाकवि प्रबन्ध समर्प्यमाणेष्वेव रस व्यवहारो नान्यत्रेत्युक्तम्। एवमेवैतत् अनुकार्य्येषु हि जानकी राम भद्रादिषु रत्यादिमात्रम् नतु रसत्वं तस्य लोकोत्तर चमत्कार रूपत्वात्। चमत्कारेश्च यद्यपि शृङ्गारादौ क्वचिदस्ति तथापि भयानकादावनुलम्भात्र तत्र स व्यवहारः। अतएव च तानिचात्राद्य काव्ययो रित्यादि विशेषणाणि। अभिनयैरुपदर्श्यमाणादपि सन्दर्भे समर्प्यमाणोरसोऽतिशयदते। अतएवोक्तं "कविवागभिनेयश्च तदुपायोद्दिधेष्यते। वस्तुशक्ति महिम्नातु प्रथमोऽत्रविशिष्यत" इति (१)। यस्त्वभिनव गुप्त हेमचन्द्राभ्या मेवं भक्ता वपि वाच्यमित्युक्तम् (२)। तदसत् रसत्वस्य दर्शितत्वात्। सामग्रीसद्भावेऽपि प्रत्याख्यान मरोचकतामात्र शरणम्। नवसङ्क्षमानोऽप्ययं असर्व्वविषयत्वाद्रसत्वात्च्यवतामिति चोद्यम्। तथासति शान्तरसोच्छेदापातात्। तथाहि श्रोत्रियजरन्मीमांसकादयो हि

---

(१) श्रीमदभिनवगुप्तपादाचार्य्येण भरतमुनेर्नाट्यशास्त्रस्य धन्यालोकस्य सुविस्तृतं व्याख्यानं कृतं तत्र तत्र सर्वं विशदमस्ति। तेन शैवदर्शने गीतायां अन्यत्रापि बहवो सन्दर्भाविरचिताः।

(२) सूरि हेमचन्द्राचार्य्योऽनेकालङ्कारचूडामणौ सर्वमुक्तम्। कैषाञ्चिन्मयेऽयं जैनाचार्य्यो नृपतिकुमारपालस्य गुर्जराधिपस्य गुरुरिति।

नाट्यमण्डपान्त अपि चमत्काराभावात् मौलिक प्रायाएव। एवं प्रशान्त ब्रह्मचारि प्रभृतय: शृङ्गार रसास्वादे बहिरङ्गागाढ़ रागाणाञ्च शान्तरस चर्व्वणानभिज्ञत्वम्। अननुभूत शोक स्पर्शाणां च करुण रसास्वादावसरे पाषाण प्रख्यत्वम्। तस्मात् सवासनस्यैव रस-चर्व्वणेति सर्वथा निस्तूषं भक्तिरसदर्शनम्॥ ननु तथाप्यल्प मिदमुच्यते। सनवधेति। सत्येव हि रसान्तराण्यपि (१) भोज-राजादिभि र्दर्शितानि। तथाहि स्नेह: स्थायिभाव:। प्रेयान् यथा "यदेव रोचते मह्यं तदेव कुरुते प्रिया। इतिवेति न जानाति तत् प्रियं यत् करोति सा॥" अत्र वत्सल प्रकृते र्धीर ललित नायकस्य प्रियालम्बन विभावो विषय:। सौन्दर्य्याद्युद्दीपन विभावो, मोहमति धृति स्मृत्यादि व्यभिचारो। स्नेह: प्रेयानिति प्रतीयते। तथा मतिस्थायिभावादुदात्त:। यथा (२) "साधारणो निरातङ्क: कन्यामन्योपि याचते। किंपुनर्जगतां जेता प्रपौत्र: (प्रयोक्तु:) परमेष्ठिन:॥" अत्र हिरामस्योदात्त प्रकृते: सीतेयं मम स्वीकार योग्येत्येवं रूपेण प्रवृत्तामति:। रावण प्रार्थना लक्षण प्रोत्साह-नाभ्यामुद्दीप्यमाना जायमान चित्तवितर्क व्रीड़ाऽवहित्था स्मृत्यादिभि: कालोचितोत्तरानुमीयमानेश्च विवेक चातुर्य्य धैर्य्यौदार्य्यादिभि: संसृ-ज्यमाणोदात्त रसरूपेन निष्पद्यते। गर्व स्थायिभाव उद्धत:। यथा "धृतायुधोयावदहं तावदन्यै: किमायुधै:। यद्वाण सिद्धमन्त्रेण मम तत्केनसेत्स्यति (३) इति। मैवं मौलिकस्य स्थायिन एवात्र सद्भावात् स्नेहादयो हि व्यभिचारिषु तैरेव पठिता:। "गर्व स्नेहो धृतिर्व्रीड़ि" त्यादिना। व्यभिचारिण: स्थायिनश्चेतितु 'मम

(१) श्रीमद्भोजराज प्रणीत सरस्वतीकण्ठाभरणे, साहित्य दर्पणे चन्द्रालोके च।

(२) भरत प्रणीतामरव्याख्यायां, अलङ्कार कौस्तुभे च कविकर्णपूरीये।

(३) उज्ज्वल नीलमणौ व्यभिचार भावप्रकरणे।

मातावन्ध्ये'ति वत् विप्रतिसिद्धे वचसि एवमप्युच्यमाने व्यभिचारि संख्ययारससंख्यापत्तिःस्यात्। अतएवेदेमस्पृष्टं भरतादिभिः। एतेन गर्वं स्थायिभावो लौल्यनामाऽपरः रस इत्यपि प्रत्यु(यु)क्तम्। तस्मादयुक्त मुक्तं आचार्य्येण स नवभेति॥

(१) भक्तिरस एव रसस्यादिरूपेन नवधानुभूयत इत्युक्तम्। तत्र निदर्शनानि भुञ्जनो हासः स्थायिभावे। विकृतवेषालङ्कार धार्ष्ट्य लौल्य कुहकाः सत्प्रलाप व्यङ्गदर्शन दोष उदाहरणादि विभावैनाऽसावष्ट (ख) कपोल स्पन्दन दृष्टि व्याक्रोशाकुञ्चन स्वेदास्यराग पार्श्वग्रहणाद्यनुभावेऽपि अवहित्थालस्य तन्द्राचपा स्वप्नादि सञ्चारिणि। हास्यरसेगोप्योभक्ता इत्यादि (ह)। नवेति। सचत्रेधा। उत्तम मध्यमाधमेषु स्मितादिभेदात्। यदाह भरतः। (२) "ईषद्विकसितैर्गण्डैः कटाक्षैः सौष्ठवान्वितैः। अलक्षित द्विजंधीर मुत्तमानां स्मितं भवेत्। आकुञ्चिताक्षि गण्डं यत् सस्मनं मधुरं तथा। कालागतं सास्यरागं तद्वैविहसितम्भवेत्। अस्थान हसितं यत्तु साश्रुनेत्रं तथैव च। उत्कम्पितांसकशिरः तच्चापहसितं भवेत। ततापि त्रीणि च। (३) प्रकृताविव भूयिष्टं दृश्यते रसः इति भरत वचनाद्यशोदादिषु तमाह। वत्सानिति। क्रोशे मामित्याक्रोशे। स्तेयं चौर्य्यलभ्यं नतु दत्तम् दधिपयश्च। योगै रूपायैः। मर्कान् मर्कटान्। भोक्ष्यन् भोक्ष्यमाणः सन्। वैशब्दश्चेदर्थे। उपक्रोश्य रोदयित्वातोकान् वालान्॥ १०।८।२९ (२)

---

(१) अभिनव गुप्तपादाचार्य्येण नाट्यसूत्र वाख्याने।

(२) नाट्यसूत्रे तद्व्याख्याने च।

(३) भरत प्रणीत नाट्य शास्त्रे अमरटीकायां भरत कृतायाञ्च। भक्तिरसामृत सिन्धुत्तर विभागे प्रथम लहर्य्यां। साहित्य दर्पणे तृतीय परिच्छेदे। गरुड़ पुराणे ९९ अः, १७ श्लोकः।

हस्ताग्राह्मे रचयति विधिं पीठकोलूखलाद्यै-
श्छिद्रं ह्यन्तर्निहित वयुनः शिक्यभाण्डेषु तद्वित्।
ध्वान्तागारे धृतमणिगणं स्वाङ्गमर्थ प्रदीपं
काले गोप्यो यर्हि गृहकृत्येषु सुव्यग्र चित्ताः ॥३॥

एवं धार्ष्ट्यान्युशति कुरुते मेहनादीनि वास्तौ
स्तेयोपायैर्विरचित कृतिः सुप्रतीको यथास्ते-
इत्थं स्त्रीभिः सभयनयनश्रीमुखालोकिनीभिः।
व्याख्यातार्था प्रहसितमुखी नह्युपालब्धुमैच्छत् ॥४॥

---

हस्तेति। विधिरुपाय। अन्तर्निहितस्य नवनीतादेः। वयुने ज्ञानेसति। अर्थ प्रदीपं अर्थं प्रकाशकम्। स्वाङ्गं रचयति। यर्हीति रेफ हकारयोर्विश्लेषःछन्दोऽनुरोधात् ॥ १०।८।३० (३)

एवमिति। स कृष्णः। उशति कमनीये वस्तुनि। वास्तुर्वेश्मभूः। विरचितकृतिः कृतकार्य्यः। सुप्रतीकः शोभनावयवः। नेत्रस्य लक्षणा सम्यक्त्व नात्यात् सभये भयविलोल नयने। यस्मिन् श्रीमति भगन्मुखे तदालोकिनीभिः व्याख्यातः अर्थो वत्सस्य मोचनादिर्यस्य सा यशोदा। उपालब्धुं तर्ज्जितुम्। अत्र यशोदाया उत्तम प्रकृतिकत्वात् उत्तम हास्यम्। प्रहसितमुखी अतएव प्रकर्षार्थः प्रशब्दादेव आलम्बनम्। वत्समोचनादिधार्ष्ट्यम् विभावः। अनुभावः यशोदायां रसाभिव्यक्तिः। सञ्चारिणः स्तुत्वाः ।१०।८।३१॥ (४)

कृष्णस्य गोप्योरुचिरं वीक्ष्य कौमार-चापलम् ।
शृण्वत्याः किलतन्मातुरिति होचुः समागता ॥५॥
गोपकन्याः ।
तस्य तत्क्ष्वेलितं दृष्ट्वा गोप्यः प्रेमपरिप्लुताः ।
व्रीड़िताः प्रेक्ष्यचान्योन्यं जातहासानिर्ययुः ॥६॥

इति मुक्ताफले हास्यरसः ॥

---

कृष्णस्येति श्लोको वक्तृकथनार्थः । गोप्यो यशोदा ।१०।८।२८। (५)

मध्यम हास्यमाह । तस्येति । तस्य श्रीकृष्णस्य । तद्-वस्त्रादान रूपम् क्ष्वेलनं परिहासचेष्टा । व्रीड़िता नग्नत्वात् । न निर्ययुर्जलाशयात् । अत्र देव आलम्बनम् । क्ष्वेलनं विभावः । अन्योन्य प्रेमलक्षणमनुभावः । व्रीड़ासञ्चारो । न चात्र शृङ्गार एव हास्याङ्गभूतोवेतिवाच्यम् । अद्यापितासां कौमारानपगमात् । शृङ्गारोहि युवप्रकृतिः । अतएवाचार्य्येण 'गोपकन्या' इत्युक्तम् । तासाञ्च यशोदापेक्षया मध्यमत्वेन हास्य मध्यमत्वं तृतीयं स्वयं स्वसंज्ञेयम् शुकः ।१०।२२।१२॥ (६)

इति हेमाद्रि विरचितायां कैवल्यदीपिकायां हास्यरसः ॥

---

शृङ्गाररसो द्विविधः। सम्भोगो विप्रलम्भश्च।
तत्र सम्भोगशृङ्गारे कौरवेन्द्र पुरस्त्रियः॥
सवै किलायं पुरुषः पुरातनो
य एक आसीदविशेष चात्मनि।
अग्रे गुणेभ्यो जगदात्मनीश्वरे
निमीलितात्मन् निशिसुप्तशक्तिषु॥७॥

अथरति स्थायिन मुज्ज्वल वेषात्मक मुक्तम् युवप्रकृतिकं स्त्रीपुंस-हेतुकं माल्य-ऋतु-शैल-पुर-हर्म्य-नदी चन्द्रोपवन-दीर्घिका जल-क्रीड़ादि श्रूयमानानुभूयमान विभावं जुगुप्सालस्यौष्टवर्ज-सञ्चारिणं गुणं दीर्घापाङ्गस्मिताद्यनुभावं - शृङ्गारं सप्रभेदमाह। शृङ्गारेति। स्त्रीपुंसयोः सम्बन्धतया भोगः सम्भोगः। स च सम्बन्धश्चतुर्धा। परस्पर दर्शन स्पर्शन संजल्प सम्प्रयोगभेदात्। भेदान्तराणां तत्रैवान्तर्भावः। तथाहि कुसुमावचयदर्शने। चुम्बनालिङ्गना केशग्रहादयो हि स्पर्शने। चन्द्रोदय वर्णना-दयस्तु संजल्पे संसक्ततयापानं संस्पर्शने। एवमन्ये जल-क्रीड़ादीनां सम्प्रयोगस्यतु स्पर्शरूपत्वेऽपि प्राधान्यात् पार्थक्यम्। विप्रकर्षेण लम्भः प्राप्ति विप्रलम्भः। स च विप्रकर्षचतुर्द्धेति वक्ष्यते। तत्रापि सम्भोगपूर्वको विप्रलम्भ इति सम्प्रयोगस्य प्रागुक्तिः। स च सुखमय धृति-स्मृति मति हर्षादि सञ्चारी। रोमाञ्च खेदकम्पाश्रु मेखला—स्खलन श्वसित साध्वसकेशवन्धन वस्त्र-संयमन वस्त्राभरण माल्यादि सम्यङ्निवशेन विचित्रेक्षण गुणवर्णन चाटु प्रभृति वाचिक कायिक-व्यापारानुभावः। विभावास्तु प्रागुक्ताः तत्र नायक प्रयुक्तादपि सम्भोगादनुराग प्राचुर्य्येण नायिका

स एव भूयो निजवीर्य्यं चोदितां
स्वजीवमायां प्रकृतिं सिसृक्षतीं।
अनामरूपात्मनिरूपनाम्नो
विधित्समानोऽनुससार शास्त्रकृत् ॥८॥

---

प्रयुक्त एव प्रकथ्यत इति तं दर्शयन् दर्शनसम्भोगमवतारयति। तत्रेति। कौरवेन्द्र पुरं हस्तिना पुरम्। सवै इत्यादि। वैशब्दः स्मरणे। किलशब्दस्तूत्प्रेक्षायाम्। उत्प्रेक्षा च दुर्निरूप्यत्वात् य एकोऽद्वितीयः पुरुषः सोऽयं कृष्णः पुरातनः। आद्यः कदा एकः। आत्मन्यविशेषे भेदहेतूपाधि रहिते स्वरूपे तदपिकदा अग्रेगुणेभ्यः गुण स्वीकारात् पूर्वम् तथानिशि गुणत्यागादनन्तरम्। कदागुणत्यागः जगदित्यादि। प्रपञ्चाकारेण दर्शितमात्मानं यदा न दर्शयति। तथासुप्तशक्तिषु चिच्छक्त्यादयः शक्तयो यदा सुप्ता भवन्ति। आत्मन्नित्यत्र (१) सुपांसुलुक् पूर्व्वसवर्णेति सप्तम्यालुक् (१)।१।१०।२१॥ (७)

निराकारमुक्त्वा साकारं निरूपयति। स एवेति। स एव निराकार एव। प्रकृति मनुससार। अधिष्ठितवान्। भूयः सृष्टि प्रवाहस्यानादित्वात्। निजवीर्य्य-चोदितां कालप्रेरिताम्। अतएव स्वजीवमायां सिसृक्षतीं स्वस्मिन्नीश्वरे जीवमायां असत्यं जीव ,प त्वं स्रष्टुमिच्छन्ती। अरूपस्य रूपाणि, अनाम्नोनामानि, सञ्चित्यानुससार। तानिचान्ये जानन्त्विति। शास्त्रकृत् शास्त्रं वेदः॥ १।१०। २२ (८)

---

(१) पाणिनिः ७।१।३९ सूत्रम्।

स वाऽयं यत्पदमत्र सूरयो
जितेन्द्रिया निर्ज्जितमातरिश्वनः ।
पश्यन्ति भक्त्युत्कलितामलात्मना
नन्वेष सत्त्वं परिमार्ष्टुमर्हति ॥९॥

दुर्लभस्य सुलभतां निरूपयन्ति सवाऽयमिति । यत्तुरीयपदं समाधौ सूरयः पश्यन्ति सोऽयं भक्त्या उत्कलितः अमलश्च यः आत्मा तेनात्मात्मनि जितमातरिश्वन इति व्यत्ययात् 'प्रथमार्थे द्वितीया । नु अहो एष कृष्णः सत्वं प्रत्यक्षत्वं । परिमार्ष्टुं नाशयितुं अर्हति । देशान्तरगमनेनाप्रत्यक्षो माभूत् सदैवास्मद्गोचरो भूयादिति भावः । एतदेव दर्शनसम्भोगो द्योतकम् । न चात्र परमार्थनिरूपणादेः प्रशान्त इति मन्तव्यम् । भगवति सकामत्वेन तासां तृष्णाक्षयरूप शमस्याभावात् । अतएव "नन्वेष सत्वमि" त्यत्र व्याख्यान्तरं नाद्रियते । रतिरेव स्थायीत्युत्तरश्लोकेषु सुव्यक्तम् । नापि "णिहु अरमणा स्मिलो अणवहस्मि पड़ि अगुरुणा मज्जस्मि स अन पारिहार क्रियया वणगमणं चेय यह इवहु" इत्यादौ सकलपरिहारवनगमनयोः शान्तानुभावयो रिवात्रास्तित्व प्रतिपादनस्यशान्तविभावत्वेन शृङ्गारविरुद्धत्वात् प्रतिकूलविभावादिग्रहलक्षणो रसदोषः प्रसज्यत इति चोद्यम् रत्युत्कर्षभङ्गादि दोषत्वं । 'मुख्यार्थ इति दोषः प्रसज्यत इति वचनात् । साक्षात्र भगवद्गुणानुवादेन पुष्यतीति न दोषत्वम् । पुरुषान्तरालम्बनत्वे तु (वि) भावादि प्रातिकूल्यं दोष एव वा यथा "प्रसादे वर्त्तस्व प्रकटय मुदं सन्त्यजरुषं प्रिये शुष्यन्त्यङ्गान्यमृतमिव ते सिञ्चतु वचः । निधानं सौख्यानां क्षणमभिमुखं स्थापयमुखम् । न

स वाऽयं सख्यनुगीतसत्कथो
वेदेषु गुह्येषु च वेदवादिभिः।
य एक ईशो जगदात्मलीलया
सृजत्यवत्यत्ति न तत्र सज्जते ॥१०॥

यदा ह्यधर्मेण तमोधियो नृपाः
जीवन्ति तत्रैष हि(सा) सत्वतः किल।
धत्ते भगं सत्यमृतं दयां यशो
भवाय रूपाणि दधद्युगे युगे ॥११॥

अहो अलं श्लाघ्यतमं यदोः कुलं
अहो अलं पुण्यतमं मधोर्वनम्।

---

मुग्धे प्रत्येतु प्रभवति गतः कालहरिणः॥" इत्यत्र "(गतः) कालहरिण" इत्यनित्यता प्रकाशनं शान्तानुभावः॥ १।१०।२३ (८)

उत्तमःश्लोकत्वं निरूपयति इत्यादि। स इति यो वेदवादिभिः अनुगीत सत्कथः सोऽयं गुह्येषु वेदान्तेषु वेदवेदान्तरहस्य प्रतिपादनकुशलैरित्यर्थः। कोऽसौ सत्कथः य एक ईशः आत्मलीलया जगत्सृष्ट्यादि करोति न च तत्र सज्जते इत्येवं रूपः॥१।१०।२४(१०)

अवताररूपं निरूपयति यदेति। सात्वतः कृष्णः। रूपाणि दधत् जगदादीनि धत्ते। भगं भजनीयत्वं। सत्यं सत्यप्रतिज्ञात्वं ऋतं सत्योपदेशकत्वम्। दयां भक्तानुकम्पाम्। यशोऽद्भुत कर्मत्वम्। भवाय स्थित्यै॥ १।१०।२५ (११)

कृष्णसङ्गमस्पृहां निरूपयन्ति। अहो इत्यादि। अहो आश्चर्यम्। अलं अत्यर्थम्। मधोर्वनं मथुरा, यत्कुलं वनञ्च स्वजन्म

यदेष पुंसा मृषभः श्रियः पतिः
स्वजन्मना चङ्क्रमणेन चाञ्चति ॥१२॥
अहोवत स्वर्यशसस्तिरस्करी
कुशस्थली पुण्ययशस्करी भुवः ।
पश्यन्ति नित्यं यदनुग्रहेषितं
स्मितावलोकं स्वपतिं स्म यत् प्रजाः ॥१३॥
नूनं व्रतस्नानहुतादिनेश्वरः
समर्च्चितो ह्यस्य गृहीतपाणिभिः ।
पिबन्ति याः सख्यधरामृतं मुहु-
र्व्रजस्त्रियः सम्मुमुहुर्यदाशयाः ॥१४॥

चंक्रमणाभ्यां अञ्चति गच्छति। पूजयति मानयति च। पुंसां ऋषभः। श्रियः प्रिय इत्याभ्यां स्त्रीणां स्पृहणीयं चिरललितञ्च उक्तम् ॥ १।१०।२६ (१२)

अहो इति। अहो वत अहो आश्चर्य्यम्। कुशस्थली द्वारका। यच्छब्दाभ्यां सैव स्मितयुक्त अवलोको यस्य तं। स्वपतिं कृष्णम्। स एव हि स्वस्यात्मनः पतिः। अन्यदेहस्य। यदुकुलादीनि धन्यानि। नत्वन्यस्य कस्यचित् कुलमेतत् परं वा। यदीदृशेन नायकरत्नेना-लङ्कृतमिति भावातिशयः ॥ १।१०।२७ (१३)

स्वर्गसम्भोगमाह नूनमित्यादि। नूनं शब्दो वितर्के कृष्णस्य गृहीतपाणिभिः पत्नीभिः ईश्वरोऽर्च्चितः। पूर्व्वजन्मसु अयमिति वाच्यं ईश्वरात्मलोकदृष्ट्या। यस्याधरामृतस्याशया अभिलाषेण

या वीर्य्यशुल्केन हृता स्वयम्वरे
प्रमथ्य चैद्यप्रमुखान् विशुष्मिणः ।
प्रद्युम्नशाम्बाम्बसुतादयो परा
याश्चा हृता भौमवधे सहस्रशः ॥१५॥
एताः परंस्त्रीत्वमपास्तपेशलं
निरस्तशौचं वत साधु कुर्व्वते ।
यासां गृहात् पुष्करलोचनः पति-
र्न जात्वपैत्याहृतिभिर्हृदि स्पृशन् ॥१६॥

व्रजस्त्रियः मुमुचुः । व्रजस्त्रीणां पुरस्त्रीत्वात् । स्वधर्म्मत्यागात् सम्मोहाख्य नवमस्मरदशोत्पत्तेश्च पुरुषोत्कर्षः ॥ १।१०।२८ (१४)

या इति । विशुष्मिणो बलिष्ठान् प्रद्युम्नसूता रुक्मिणी । साम्बसूता जाम्बवती । जाम्बसुता नाग्नजिती । भौमो नरकासुरः । सहस्रशः । सहस्रं सहस्रं यावत् षोड़श ॥ १।१०।२८(१५)

एता इति । एताः परं केवलं स्त्रीत्वम् । साधुकुर्व्वते । पेशलं प्रियम्वदत्वम् । शौचं शुचित्वम् । आहृतिभिः पारिजातादि प्रियवस्तुनामाहरणैः । हृदिस्पृशन् उत्कण्ठां जनयन् । न च पुरस्त्रीणां । सकामत्वेऽपि भगवतो निरपेक्षत्वेन परस्परानुभावात् रसाभासानुवादात । रसाभासोऽयमिति वाच्यम् । "एवम्विधा वदन्तीनां सगिरः पुरयोषिताम् । निरीक्षणेनाभिनन्दन् सस्मितेन ययौ हरिः" (१) इत्युत्तरत्र भगवतोऽपि स्वभावत्वानुवादात् । सुतशौनकम् ॥ १।१०।३० (१६)

(१) भागवतं १।१०।३१ श्लोकः ।

इत्थं रमापतिमवाप्यपतिं स्त्रियस्ता
ब्रह्मादयोऽपि न विदुः पदवीं यदीयाम् ।
भेजुर्मुदा विरत मेधितयानुराग
हासावलोक नवसङ्गम जल्पलज्जाः ॥१७॥

प्रत्युद्गमासनवरार्हण पादशौच
ताम्बूलविश्रमण वीजनगन्धमाल्यैः ।
केशप्रसारशयन स्नपनोपहार्य्यैः-
र्दासीशता अपि विभो र्विदधुःस्म दास्यम् ॥१८॥

मनांसि तासामरविन्दलोचनः
प्रगल्भलीलाहसितावलोकनैः ।
जहार मत्तद्विरदेन्द्रविक्रमो
दृशान्ददच्छ्रीरमणात्मनोत्सवम् ॥१९॥

---

इत्थमिति। पदवीं मार्गम्। एधितया भजनेनानुरागेण हासा वलोको नवसङ्गमाच्च जल्पलज्जा यासाम् तास्तथा। सङ्गमः सन्निधानम् ॥ १०।५९।४४ (१७)

भजनमेवाह। प्रत्युद्गमेति। प्रत्युद्गमः प्रत्युत्थानम्। आसनं स्वासने उपवेशनम्। अर्हणमुपायनम्। पादयोः शौचम् प्रक्षालनम्। विश्रम्यतेऽनेनेति विश्रामणम्। अङ्गसम्बाहनम्। प्रसारः प्रसाधनम्। स्वयं पचनम्। परिवेषणञ्च। दासीनां शतानि सन्ति यासाम्। स्म शब्दो वाक्यपूरणार्थः॥ १०।५९।४५ (१८)

स्पर्शनान्तरत्वात् अनन्तरं सम्प्रयोगमाह। मनांसीति। माधुर्येति। तासां मथुरास्त्रीणाम्। प्रगल्भप्रौढ़ालीलाविदग्धचेष्टा

दृष्ट्वा मुहुः श्रुतमनुद्रुतचेतसस्तं
तत्प्रेक्षणोत्स्मित सुधोक्षणलब्धमानाः।
आनन्दमूर्त्तिमुपगुह्य दृशात्मलब्धम्
हृष्यत्त्वचो जहुरनन्तमरिन्दमाधिम् ॥२०॥
पुण्यावत व्रजभुवो यदयं नृलिङ्ग—
गूढ़ःपुराणपुरुषो वनचित्रमाल्यः।
गाः पालयन् सहबलं क्वणयंश्च वेणुं
विक्रीड़याञ्चतिगिरित्ररमार्च्चिताङ्घ्रिः ॥२१॥

विक्रमो गमनं गतिः। शक्तिर्वा दृशां दृष्टीनाम् श्रीरमणात्मना लक्ष्मीमुपभुञ्जानेन शरीरेण, उत्सवं प्रीतिम् ॥ १०।४१।२७ (१८)

दृष्ट्वेति। मुहुर्वारं वारं श्रुतम्। श्रीकृष्णं दृष्ट्वा अनुद्रुतचेतसः। गच्छन्तं श्रीकृष्णम्। चित्तेनानुगच्छन्त्यः तत् किं प्रभुरपहृता एवेत्याह। तदिति। तत्तथाविधं भावाववोधनक्षमं यत्प्रेक्षणमुत् कृष्टञ्च स्मितं। तदेव निर्वापकत्वात् सुधा तयोक्षणं सेचनं तेन लब्धमानाः कृतस्वीकाराः। उपगूहनं आलिङ्गनम्। तत् किं प्रकाश-मेव नेत्याह। दृशा आत्मना बुद्ध्या लब्धम् प्राप्तमेव मादावन्तर्वहि-रिह प्रयोज्यमित्यादि कामतन्त्रानुसारेण वाह्यान्तर मुक्ता आधिं जहुरित्यन्तरमाह। आधिं तदप्राप्तिदुःखम्। अनन्तं चिरं सञ्चि-तम्। यद्वा अनन्तं यथा स्यात् तथा जहुः ॥ १०।४१।२८ (२०)

अत्रैव सात्त्विकानुभावमाह। हृष्यत्त्वचेति। प्रगल्भलीलादय उद्दीपनविभावाः। सञ्चारिणः स्वयमुह्याः। स एव भगवता पुरस्त्री-वृन्दिकामिनीनाम् मंश्लेषरूपः कविना मानसः सम्प्रयोग उक्तः। शरी-रन्तु पशुधर्म्मत्वेन ग्राम्यत्वात् एतत् प्रकर्षत्वात् विशिष्टदेवताविषय-

गोप्य स्तपः किमचरन् यदमुष्यरूपं
लावण्यसारमसमोर्द्धमनन्य सिद्धम्।
दृग्भिः पिवन्त्यनुसवाभिनवं दुरापं
एकान्त धामयशसः श्रिय ऐश्वरस्य ॥२२॥

त्वं न वर्णनीयत्वाच्च नोक्तः। रत्यादिशब्दवाच्यत्वेनाचार ।त् कृष्ण-स्वच इत्यनुभव द्वारेवोक्तः। हे अरिन्दम! परोच्चित्। अरयोऽत्र कामादयः षड्वर्ग्यं मान शृङ्गारनिर्भरचित्तो माभूदयमिति उचितम्। सम्बोधनम्। शुकः॥ दीर्घसम्प्रयोगस्य स्पृहया तं प्राप्तवतीर्गोपीः स्तुवन्ति पुण्या इत्यादि। वत विस्मये। पुण्याः पुण्याधिकाः। व्रजभुवो गोप्यः। नृलिङ्गेन मर्त्त्यमूर्त्त्या गूढ़ं गूढ़तामिवाह। वनचित्रेति। त्रिभिः वनमाल्यैश्चित्र इत्यर्थः। यत् या गोपी अच्चति गच्छति। उपभुङ्क्ते विक्रीड़या विविधक्रीड़या। विचित्रैः कामकरणैरित्यर्थः। गिरित्रो रुद्रः। रमा लक्ष्मीः। अनेन सकामविचित्रैः कामैरयमेव सेव्य इत्युक्तम्॥ १०।४४।१३ (२१)

आस्तामनेन सह सम्प्रयोगो दर्शनमप्यस्य दुर्लभमित्याहुर्गोप्य इति। यद् यस्मात् अमुष्य पुरुषरत्नस्य लावण्यसारम् अशेषलावण्येन गृहीतसारात्मकम्। लावण्यरूपयो रभेदप्रतिपत्तिः। सामान्याधिकरण्ये व्यङ्ग्यम्। अतएव असमोर्द्धं अविद्यतुल्याधिकम्। तच्च स्वभावसिद्धम्। न तु केनचित् कर्त्रा निर्म्मितम्। अतएवाभिनवं सर्वक्षणः प्रतिदर्शनेन नवं नवं अकृततपोभिः एकान्तधामस्थानत्रभिचारि, स्थानम्। ऐश्वरः ऐश्वर्य्यम्। एतेन दुर्भगत्व दुर्व्विधत्व दुर्व्वलत्वानि भर्त्तुर्दोषाः। स्त्रीणां वैराग्यहेतवोऽत्र न सन्ति इत्युक्तम्॥ १०।४४।१४ (२२)

यादोहनेऽवहनने मथनोपलेप
प्रेङ्खेङ्खनार्भरुदितोक्षणमार्ज्जनादौ
गायन्ति चैनमनुरक्तधियोऽश्रुकण्ठ्यो
धन्या व्रजस्त्रिय उरुक्रमचित्तयानाः ॥२३॥

प्रातर्व्रजाद्व्रजत आविशतश्च सायं
गोभिः समं क्वणयतोऽस्य निशम्य वेणुम् ।
निर्गम्य तूर्णमबलाः पथिभूरि पुण्याः
पश्यन्ति सस्मितमुखं सदयावलोकम् ॥२४॥

मैवं विभोऽर्हति भवान् गदितुं नृशंसम्
सन्त्यज्य सर्वविषयान् तव पादमूलम् ।
भक्त्या भजस्व दुरवग्रहमात्यजास्मान्
देवो यथादि पुरुषो भजते मुमुक्षून् ॥२५॥

---

या इति । या एनम् दोहनादौ गायन्ति चकारात् पश्यन्ति । अवहनने कण्डने । प्रेङ्खेङ्खनं हिन्दोलनम् । मार्ज्जनं अवकर-निरासः ॥ १०।४४।१५ (२३)

प्रातरिति । आविशतः आगच्छतः निर्गम्यगृहद्वारि स्थित्वे-त्यर्थः । शुकः ॥ १०।४४।१६ (२४)

संजल्पसम्भोगमाह गोप्य इति । गोप्यः हे विभो ! स्वामिन् एवं "तद्यातमाचिरंघोष"मित्येवं रूपं नृशंसं कठिनं भक्त्या भजनं कर्त्तुमारब्धाः "आदिकर्म्मणि क्तः कर्त्तरि च" (१) दुरवग्रहः दुरा-

(१) पाणिनिः ३।४।७१ सूत्रम् ।

यत् पत्यपत्य सुहृदामनुवृत्तिरङ्ग-
स्त्रीणां स्वधर्म्म इति धर्म्मविदा त्वयोक्तम् ।
अस्त्वेव मेतदुपदेशपदे त्वयीशे
प्रेष्ठो भवांस्तनुभृतां किलबन्धुरात्मा ॥२६॥
कुर्व्वन्तिहि त्वयिरतिं कुशलाः स्म आत्मन्
नित्यप्रिये पतिसुतादिभिरार्त्तिदैः किम् ।
तन्नः प्रसीदवरदेश्वरमास्मच्छिन्द्या
आशां भृतां त्वयिचिरादरविन्दनेत्र ! ॥२७॥

---

राध्यः । यद्यपि वयं तवाननुरूपाः तथापि सर्व्वस्व त्यागेन भजतः सर्व्वस्यापि स्वीकार एव सत्पुरुषधर्म्म इति दृष्टान्ते व्यङ्ग्यम् ॥ १०।२९।३१ (२५)

ननु किं मद्भजनेन भर्त्तुः शुश्रूषणमित्युक्तम् । स्वधर्म्म एवाद्रियतामिति चेत्तत्राहुः यत्पत्ये ति । हे अङ्ग ! यत्पत्याद्यनुवृत्तिः स्त्रीणां निजधर्म्म इति । यत्त्वयोक्तं तत्त्वय्येवास्तु । न तु प्राकृते पत्यादौ किल यस्मात्त्वं प्रेष्ठः । नान्यवत् प्रियमात्रत्वम् । तनुभृतां प्रेष्ठो नान्यवद् हितत्राणां । बन्धुः सुहृत् । आत्मेति । त्वद्भजनादपत्यं भजनमेव भविष्यति । आत्मैवह्य (यद) पत्यरूपः । त्वञ्च सर्व्वात्मा । न चैवं विशेषात् पत्यादि भजनमेव कार्य्यमिति वाच्यम् । त्वं हि धर्म्मवित् यथास्थितं धर्म्मं वेत्सि । उपदेशपदं गुरुः । यथाज्ञानं कथयसीत्यर्थः । ईशः कर्त्तुं कर्त्तुमकर्त्तुं च योग्यः फलदाने क्षम इत्यर्थः । पतयादयस्त्वमेवं रूपाः । तस्मात्लाघवेनैव फलसिद्धौ किं गौरवेण इत्यर्थः ॥ १०।२९।३२ (२६)

किञ्चातोऽपि त्वद्भजनमेव श्रेय इत्याहुः । कुर्व्वन्तीति ।

चित्तं सुखेन भवतापहृतं गृहेषु
यन्निर्विशत्युतकरावपि गृह्यकृत्ये।
पादौ पदं न चलतस्तव पादमूलाद्
यामः कथं व्रजमथो करवाम किंवा ॥२८॥
सिञ्चाङ्ग नस्त्वदधरामृतपूरकेण
हासावलोककलगीतजहृच्छयाग्निम्।
न चेद्वयं विरहजाग्न्युपयुक्तदेहा
ध्यानेन याम पदयोः पदवीं सखे ते ॥२९॥

---

कुशला दीर्घदर्शिनः। स्वेरन्यो स्वादिभिः (त्रिभिः) समस्यन्ते: पतयादयः त्रय उक्ताः।' हे निनर त्वं नित्यः," पतयादयस्तु अनितरत्वा-दार्त्तिदाः। ततस्तैः किं नो किमपि इत्यर्थः। तत्तस्मादन्यभजनस्य स दोषत्वात्। त्वद्भजनस्य सुगमत्वाच्च। आसामङ्ग सङ्गस्पृहाम्। चिरात् अशरीरग्रहणात्। अरविन्दनेत्रत्वात् आशा वरदेश्वरत्वेऽप्य-स्मदाशाच्छेदनमकीर्त्तिकरमिति भावः एवमपि गमनादेशे गन्तुमपि न शक्यत इत्याहुः॥

चित्तमित्यादि। सुखेन सुखरूपेण। निर्विशति। व्यापिपर्त्ति। उत अपि थौकरौ निर्विशतः। तावपिहृतौ। आस्तां तावत् गृह-गमनवार्त्ता। गृहप्राप्तिरप्यशक्या इत्याहुः॥ १०।२८।३४ (२८)

अतः कथं यामः। अतो न यामश्चेत् किं करवाम तवस्वीकारं विनेति भावः। करवामेति संप्रश्ने लोट्। तस्मादयमस्मत् प्रणयो मान्य इत्याहुः। १०।२८।३३ (२७) सिञ्चेति। अङ्ग अहो। अमृतं सुधापूरकः प्रवाहो हृच्छयाग्निं कामाग्निम्। हासादिभिरिन्ध-

यर्ह्यम्बुजाक्ष तव पादतलं रमाया
दत्तक्षणं क्वचिदरण्यजनप्रियस्य ।
अस्प्राक्ष्म तत्प्रभृति नान्य समक्षमङ्ग
स्थातुं त्वयाभिरमिता बत पारयामः ॥३०॥
श्रीर्यत् पदाम्बुजरजश्चकमे तुलस्या
लब्ध्वापि वक्षसि पदं किल भृत्यजुष्टम् ।

---

नैरुद्दीपितम् । कलं मधुरं । अधरसुधां पाययस्वेत्यर्थः । नोचेन्न-सिञ्चसिचेत् तत्राहुः । उपयुक्तं दाव्य' (दग्ध) शाब्दग्भातम् तत्राव-शेक्ष्यति । वयन्तु तत्पादमनिकृष्टा भविष्यम्म एवेतार्थः ॥ १०।२८।३५ (२८)

तथाप्यज्ञानरक्तेषु जनेषु प्रसङ्गोऽनुचित इव तत्राहुः । यर्हीति । दत्तक्षणं दत्तावसरम् । क्वचित् कस्मिन्नपि संकेतस्थाने अस्प्राक्ष्म: स्पृष्टवत्यः । त्वत्तोऽन्यं न जानीम इत्यर्थं कृतदिव्याः । अरण्यगन (जन) इत्यात्मानं निर्दिशन्ति । एते (न) रमारमणस्यापि ते स्वानु-रागमवेक्ष्येदमस्मामिर्दिव्यं कृतम् । न स्वरुचिमात्रेणेत्युक्तम् । तत्प्रभृति अन्येषां पतीनां समक्षं स्थातुमपि न पारयामः न शक्नुमः किं पुनरन्तुम् । अञ्जसा स्वारस्येन बलादुपभुञ्जते ते वतनिश्चितम् । अतस्त्वय्येवानुराग इत्यर्थः ॥ १०।२८।३६ (३०)

आस्तामङ्गसङ्गः तत्पादशुश्रूषणमप्यनुमन्यस्वेत्याहुः । श्रीरिति । यत् यस्मात् श्रीरपि पादरज एव चकमे । वक्षसि स्थानं लब्ध्वापि किम्भूतं रजः भृ(भृ)त्यैर्जुष्टम् । तथा तुलस्याः सम्बन्ध्यपि किल प्रसिद्धौ । यस्याः श्रियः उतेत्यपि अर्थे । अन्ये ब्रह्मादयः ।

यस्याः श्रीवीक्षणा उतान्य सुरप्रयास

स्तद्वद्वयञ्च तव पादरजः प्रपन्नाः ॥३१॥

तन्नः प्रसीदवृजिनार्द्दन तेऽङ्घ्रिमूलं

प्राप्ता विसृज्यवसतीस्तदुपासनाशाः।

त्वत् सुन्दरस्मितनिरीक्षण तीव्रकाम

तप्तात्मनां पुरुषभूषणदेहिदास्यम् ॥३२॥

वीक्ष्यालकावृतमुखं तव कुण्डलश्री

गण्डस्थलाधरसुधं हसितावलोकम्।

दत्ताभयञ्च भुजदण्डयुग विलोक्य

वक्षः श्रियैकरमणञ्च भवाम दास्यः ॥३३॥

---

प्रयासः तपः क्लेशः। तद्वत् श्रीवत्। वक्षसि स्थितापि श्रीः। भृत्योपभुक्तं सपत्नीसम्बन्ध्यपि पादरज एव चकम इति अतिशयः॥ १०।२८।३७ (३१)

तन्न इति। तत् तस्मात् श्रियापि काम्यमानत्वात्। हे वृजिनार्द्दन! दुःखनाशक वसतीर्गृहान् तवसुन्दराभ्यां स्मितनिरीक्षणाभ्यां य स्तीव्रः कामः तेन तप्त चित्तानामस्माकम् ॥१०।२८।३८(३२)

ननु सन्त्यव पुरुषान्तराणीति किं ममैव प्रार्थनयेति चेत्तत्राहुः वीक्ष्येति। अलकाश्चूर्णकेशाः कुण्डलश्रीश्च गण्डस्थलञ्चाधर-सुधा-चेति द्वन्द्वैक्यम्। हसिञ्चावलोकश्च श्रिया एक रमणम्। आर्षोऽ-वर्णागमः सन्धिर्वा। अमराण्यपेक्षं वक्षः श्रीप्रलोभकमित्येक शब्दार्थः। भवाम इतराशिषि लोट्॥ १०।२८।३८ (३३)

का स्त्र्यङ्ग ते कलपदामृत वेणुगीत
सम्मोहितार्य्यचरितान्नचलेत्त्रिलोक्याम् ।
त्रैलोक्यसौभगमिदञ्च निरीक्ष्य रूपं
यद्गोद्विजद्रुममृगाः पुलकान्यविभ्रन् ॥३४॥
व्यक्तं भवान् व्रजभयार्त्तिहरोऽभिजातो
देवो यथादिपुरुषः सुरलोकगोप्ता ।
तन्नो निधेहि करपङ्कजमार्त्तबन्धो
तप्तस्तनेषु च शिरःसु च किङ्करीणाम् ॥३५॥
इति श्रीवोपदेवकृते मुक्ताफले विष्णुभक्तानां
सम्भोगशृङ्गारो नाम एकादशोऽध्यायः ॥११॥

---

तथापि परपुरुषप्रसङ्गाच्च सन्मार्गातिक्रमोऽनुचित इति चेत्त-त्राहुः । कास्त्रीति । कलैर्मधुरैः पदैरमृतम् सुधीभूतं यद् वेणु-गीतम् । तेन सम्मोहिता उत्पन्नसम्मोहाख्य नवम स्मरदशाः त्रैलो-क्यस्य सौभगं सौभाग्यं जनप्रियत्वं यस्मिन् रूपे यत् यस्मात् वेणु-गीताद्रूपाद्वा गवादयः पुलकानविभ्रन् नितरां धृतवन्तः । द्विजाः पक्षिणः । अयोग्येष्वपीति । मंक्षु भावाविर्भावात् । का कथाऽस्मा-कम् स्मरवैवश्यादिदं चेष्टितं स्यादिति भावः ॥ १०।२९।४० (३४)
व्यक्तमिति । व्यक्तं स्पष्टम् । भयं परहेतुकम् । आर्त्तिर्मनः-पीड़ा । अभेदेऽपि देवो यथेति भेदोपमया सम्मोहितत्वं विवृतं । तत् तस्मात् । शब्दद्वयमुभयत्र प्राधान्यद्योतनार्थम् । गोप्यः श्रीकृष्णम् ॥ १०।२९।४१ (३५)
इति श्रीहेमाद्रिविरचितायां कैवल्यदीपिकायां विष्णुभक्तानां सम्भोगशृङ्गार नाम एकादशोऽध्यायः ॥११॥

# द्वादशोऽध्यायः ।

## विप्रलम्भशृङ्गारे गोप्यः ।

अक्षण्वतां फलमिदं नपरं विदामः
सख्यः पशूननु विवेशयतोर्वयस्यैः ।
वक्त्रं ब्रजेशसुतयोरनुवेणुजुष्टं
यैर्वानपीतमनुरक्तकटाक्षमोक्षम् ॥१॥

---

एवं चतुर्भेदसम्भोगशृङ्गारमुक्ता विप्रलम्भमाह । विप्रलम्भेति । स चतुर्द्धा पूर्वानुराग-मान-प्रवास वैचित्त्य भेदात् । तल्लक्षणन्तु "प्रासङ्गतयो र्यूनोरभिलाषः प्रवर्त्तते । मङ्गल्यो रमणीयोऽनुरागः स प्राच्य उच्यते ॥" "अहेरिवगतिः प्रेम्नः स्वभावः कुटिलो भवेत् । अतोहेतोरहेतोश्च युनोर्मानमुदञ्चति ।" "देशान्तरादिभिर्यूनो-र्व्यवधानं चिराय यत् । नवोऽनुरागः प्रौढ़ेवा प्रवासः सोऽभि-धीयते ॥" (१) यत्र तु सन्निकर्षेऽपि प्रियः प्रियावा विभ्रमवशात् स्वरूपमपि विस्मरति सवैचित्त्य विप्रलम्भः । स च प्राच्य स्त्रीभ्यो भिन्न एव तल्लक्षणा भावात् । न चायं नास्त्यैव इहैव वक्ष्यमाणत्वात् "अयिप्रिये" इत्यारभ्य "मुनिर्यथात्मान"मित्येतत् पर्य्यन्तं (२) नैषध-चरितेऽपि नवमसर्गे नलभैमीसंवादेऽस्यैव प्रपञ्चितत्वाच्च । यत्तु (३)

---

(१) उज्ज्वलनीलमणिः—स्थायी, मान, ४२ श्लोकः ।

(२) नैषधचरिते नवमसर्गे नलनृपदमयन्तीसंवादे, १०१ श्लोकमारभ्य १२१ श्लोकं यावत् । अन्यद्रहस्य पूर्णां व्याख्यां मल्लिनाथस्य तेषां श्लोकानामस्ति ।

(३) रुद्रटः काव्यालङ्कारप्रणेता वामुकभट्टतनयः शतानन्दोपनामकः । कश्चिन्मतेऽयं

भोज-रुद्रटाभ्यां स्त्रियाः पुरुषस्य वा(चा) पञ्चत्वेऽन्यतरस्मिन् दुःखाय-माने करुणाख्यमस्य भेदान्तरत्वमभ्युपगम्यते तदसत्। तस्य शोक-स्थायित्वेन करुणाख्यः पृथक्भूत रसत्वात्। केवलं स्त्रीपुरुषाल-म्बनत्वेन विप्रलम्भभ्रममात्रम्। अन्यथा प्रेयसोऽपि भेदान्तरमभ्यु-पगम्यते। यत्तु (४) मम्मटेन मेघदूतकाव्यमालोक्य शापश्चेतुरित्य-भेदान्तरमुक्तम् तदप्यसत्। तस्य प्रवासान्तर्गतत्वात्। अन्यथोक्त-मर्ण राजवश्चियन्त्रितादि निमित्ते भेदानन्त्यं स्यात्। अतएव हेम-चन्द्रादिभि (५) रेतन्नादृतम्। तस्मादुक्तभेदा एव युक्ताः। ननु विप्रलम्भो दुःखरूपत्वात् नोच्यतामिति वाच्यम्। सम्भोग-पोषक-त्वादस्य। यदाह राजा (६) "नविनाविप्रलम्भेन सम्भोगः पुष्टि-मश्नुते। कषायिते हि वस्त्रादौ भूयान् रागोऽनुषज्जते॥" अत्र च शोकौत्सुक्यमदग्लानिनिद्रासुप्तवोधचिन्ताऽसूया श्रमनिर्वेदमरणो-न्माद-जड़ताव्याधिस्वप्नापस्मारादयः सञ्चारिणः। सन्तापजागर-कार्श्य प्रलापच्चामतानैत्रवचोवक्रतादीन् सञ्चरणा (संवारणा) नुकारः। कृतिलेखनवाचनस्वभावनिह्नववार्त्ता प्रश्नस्नेहनिर्वेद सात्त्विकानुभवनशीलसेवनमरणोद्यम सन्देशादयोऽनुभावाः। तत्र पूर्वानुरागो द्वेधा दैवपारवश्ययोरप्राप्तिहेतुत्वात्। तत्र दैवहेतुकं तावदाह। अचक्षतामिति। हे सख्यः यैः व्रजेशसुतयो रामकृष्णयोः वक्त्रमक्षिभिर्निपीतम्। तेषामचक्षतां विशालदृष्टीनां इदं पानमिव

शृङ्गारतिलकप्रणेतेति। भोजराजः सरस्वतीकण्ठाभरणाख्यालङ्कार शास्त्रीय सन्दर्भप्रणेतेति धारानगरीश्वरः मालवदेशनायकः। एतस्य ज्योतिषः शिल्पव्याकरणदर्शनधर्मशास्त्रनीतिवैद्यके भूयांसो ग्रन्था अद्यत्वेऽपि राजन्ते।

(४) श्रीमम्मटभट्टप्रणीत काव्यतत्त्वप्रकाशे।

(५) हेमचन्द्राचार्य्यसूरिप्रणीतालङ्कारचूड़ामणौ अवादिपदेन काव्यप्रकाशचन्द्रालोकसरस्वती-कण्ठाभरणकौस्तुभसाहित्यदर्शनादयो ग्राह्याः।

(६) भोजराजीय सरस्वतीकण्ठाभरणे।

चूतप्रवालबर्हस्तवकोत्पलाब्ज
मालानुपृक्तपरिधान विचित्रवेषौ।
मध्ये विरेजतु रलं पशुपालगोष्ठ्यां
रङ्गे यथा नटवरौ क्वचगायमानौ ॥२॥
गोप्यः किमाचरदयं कुशलं स्म वेणु-
र्दामोदराधर मुधामपि गोपिकानाम्।
भुङ्क्ते स्वयं यदवशिष्टरसं ह्रदिन्यो
हृष्यत्त्वचोऽश्रु मुमुचुस्तरवो यथार्य्याः ॥३॥

---

केवलम् फलं नपरं नान्यत्। "छन्दस्यपि दृश्यत" (१) इत्यक्ष्णोनङिः "नलोपोऽनोऽनुरिति च मत्वे च (नटिवत्वे च)" अचक्षुतामिति रूपम्। अनु अनुक्रमेण अनुवेणुना रूपानुरूपेण वेणुना जुष्टम् सेवितम्। अनुरक्तानां सानुरागाणां कटाक्षाणां मोक्षोविसर्ज्जनम् यस्मिन् वक्त्रे तत्तथा॥ १०।२१।७ (१)

चूतेति। चूतस्य प्रवालाः पल्लवाः। बर्हं मयूरपिच्छम्। स्तवकः पुष्पगुच्छः। उत्पलं रात्रिविकाशि। अब्जं दिनविकाशि। तेषां मालाभिः अनुपृक्तं संपृक्तं यत् परिधानम् तेन विचित्रोवेषो ययो स्तौ तथा गोष्ठो मण्डलो॥ १०।२१।८ (२)

गोप्य इति। अपि (यि) गोपिकानां गोपिका सम्बन्धिनीनामपि गोपीभिः येषामित्यर्थः। स्वयं स्वातन्त्र्येणैव यस्य वेणोः पिवतः अवशिष्टम् रसं ह्रादिन्यो यमुनाद्याः स्तरवोऽपि भुञ्जते। तत्क्षतः हृष्यत्त्वचः उद्भिन्नवल्कलत्वात्। अश्रुममुचुः। चरत् चीरत्वात्।

(१) पाणिनिः ६।४।७३, ७।१।७६ सूत्रम्।

वृन्दावनं सखिभुवो वितनोति कीर्त्तिं
यद्देवकीसुतपदाम्बुजलब्धलक्ष्मि ।
गोविन्दवेणुमनुमत्तमयूरनृत्यं
प्रेक्ष्याद्रिसान्ववरतान्यसमस्तसत्त्वम् ॥४॥
धन्याःस्म भूढ़मतयोऽपि हरिण्य एता
या नन्दनन्दनमुपात्तविचित्रवेषम् ।
आकर्ण्य वेणुरणितं सह कृष्णसाराः
पूजां दधुर्विरचितां प्रणयावलोकैः ॥५॥

आर्य्या रसिकाः । आभ्यामनुभावाभ्यां तत्कर्त्तृकं पानं सम्भाव्यत इत्यर्थः ॥ १०।२१।८ (३)

वृन्दावनमिति यद् यस्माद्गोविन्दस्य निर्ब्बेदस्य वेणुं अर्थात् वाद्यमानमनुलक्षीकृत्य मत्तमयूरनृत्यं भवति (१)। वेणुध्वनिं श्रुत्वा मयूरास्तनितबुद्ध्या नृत्यन्तीत्यर्थः । प्रेक्ष्येषु दर्शनीयेषु अद्रेर्गोवर्द्धनस्य सानुषु अवरतानि वेणुगीतश्रवणार्थम् निभृतीभूतानि अन्यानि मयूरेभ्यः समस्तानि सत्वानि मृगादीनि यस्मिन् वृन्दावने तत् तथा ॥ १०।२१।१० (४)

धन्याःस्मेति । मूढ़मतयस्तिर्य्यक्त्वात् । वेणुः रणितो वादितो येन तम् । नन्दनन्दनस्य वेणुगीतमाकर्ण्येति च वक्तव्ये नन्दनन्दनमाकर्ण्येति लोको (एवो)क्त्योक्तम् । यथैवं गायन्नाकर्णितो भवद्भिरित्युच्यते । प्रणयावलोकैः प्रोत्फुल्लै र्नयननीलोत्पलैरित्यर्थः ॥ १०।२१।११ (५)

(१) श्रीमद् भागवत (दशमस्कन्धे) १०।२१।१० श्लोकः ।

कृष्णं निरीक्ष्य वनितोत्सवरूपशीलं
श्रुत्वा च तत् क्वणित वेणु विविक्तगीत न।
देव्यो विमानगतयः स्मरनुन्नसाराः
भ्रश्यत प्रसूनकवरा मुमुहुर्विनीव्यः ॥६॥
गावश्च कृष्ण मुखनिर्गतवेणुगीत-
पीयूषमुत्तभित कर्णपुटैः पिबन्त्यः।
शावाः स्नुतस्तनपयः कवलाः स्म तस्थु
र्गोविन्दमात्मनि दृशाश्रुकला स्पृशन्त्यः ॥७॥
प्रायोवताम्ब(म्ब)मुनयो विहगावनेऽस्मिन्
कृष्णेक्षितं तदुदितं कलवेणुगीतम्।

---

कृष्णमिति वनितानामनुरागजनन-समर्थानाम् स्त्रीणामुत्सवो याभ्यां ते रूपशीले स्वरूपाचरणं यस्य तं। तेन श्रीकृष्णेन क्वणितस्य वादितस्य वेणोर्विविक्त मसङ्कीर्णरागं गीतम्। देव्यो देवस्त्रियः। स्मरेण नुन्नः प्रेषितः सारो धैर्य्यं यासां ताः। भ्रश्यत् प्रसूनानि कवराणि केशपाशा यासां ताः तथा। विनीव्यो विस्रस्तवस्त्राः। मुहु-मुहुर्मोहाख्यां स्मरदशामीयुः॥ १०।२१।१२ (६)

गावश्चेति उत्तम्भितां ऊर्द्धीकृतां। च शब्दो भिन्नक्रमः। शावाश्च शावा वत्साः स्नुतः च्चरितः। अर्थात् मुखात् स्तनस्य पयसः कवलो ग्रासो येषां ते तथा। तं च पिवन्तस्तस्थुरिति विपरिणामः। गोविन्दं आत्मन्यन्तःकरणे स्पृशन्त्यः दृशा अश्रुकलाः आनन्दाश्रूणि स्पृशन्ति। वत्सपक्षेविपरिणामः तस्थुरित्यनेन क्रियान्तरविरहात् ताटस्थ्यात् स्तम्भ उक्तः॥ १०।२१।१३ (७)

प्राय इति प्राय उत्प्रेक्षायां वत अहो। ये मुनयस्ते विहगत्व-

आरुह्य ये द्रुमभुजान्रुचिर प्रवालान्,
शृण्वन्ति मीलितदृशो विगतान्य वाचः ॥८॥
नद्यस्तदातदुपधार्य्य मुकुन्दगीत
मावर्त्तलक्षितमनोभव भग्नवेगाः ।
आलिङ्गन स्थगितमूर्म्मिभुजैमुरारे-
र्गृह्णन्ति पादयुगलं कमलोपहाराः ॥९॥
दृष्ट्वा तपे व्रजपशून् सहराम गोपैः
सञ्चारयन्तमनुवेणुमुदीरयन्तम् ।
प्रेमप्रवृद्ध उदितकुसुमावलीभिः
सख्यु व्यधात् स्ववपुषाम्बुदमातपत्रम् ॥१०॥

मापन्ना इवेत्यर्थः । कृष्णोपचितं गीतं शास्त्रस्यमध्ये स्वप्रज्ञया कृष्णे-नैव दृष्टमित्यर्थः । तेनैवोक्तञ्च यत् कलं मधुरं वेणुगीतम् । भुजाः शाखाः विगता अन्येषाम् वाचो येभ्यः । वेणुगीतं विना अन्यवाचां श्रवणं नास्तीत्यर्थः ॥ १०।२१।१४ (८)

नद्य इति तत् अद्भुतं मनोभवेन कृष्णविषययारत्या भग्नो वेगो यासां ताः । स च आवर्त्तेन जलमध्यभ्रमणेन लक्षितः भगवत्युदित गाढ़भावत्वात् तत्रैव भ्रमन्त्योऽतः परतो गन्तुं न शक्नुवन्तीत्यर्थः । प्रवाहमध्ये आलिङ्गनेन स्थगितं सम्वृतं तोरं ऊर्म्मि भुजैर्गृह्णन्ति । सोऽयमयोग्येष्वपि सरिदादिषु भावसमारोपो रसाभास इत्युच्यते । यदाहुः "तदाभासा अनौचित्य प्रवर्त्तिता"(१) इति ॥ १०।२१।१५(९)

दृष्टेति प्रवृद्धे आतपे स्वेनवपुषा आतपत्रम् । कुसुमावलीभिश्च

(१) नाट्यशास्त्रे भरतमुनिप्रणीते ।

पूर्णाः पुलिन्द्य उरुगाय पदाब्जराग
श्रीकुङ्कुमेन दयितास्तनमण्डितेन ।
तद्दर्शनस्मररुजस्तृणरूषितेन
लिम्पन्त्य आननकुचेषु जहुस्तदाधिम् ॥११॥
हन्तायमद्रिरबला हरिदासवर्य्यो
यद्रामकृष्णचरणस्पर्शप्रमोदः ।
मानं तनोति सहगोगणयोस्तयोर्यत्
पानीयसूयवस कन्दरकन्दमूलैः ॥१२॥

---

प्रेमहर्षं व्यधात् । सख्युः श्रीकृष्णस्य । मेघोदये कुसुमस्तंसनस्य तत्कर्तृकताम् सम्भाव्येदमुक्तम् ॥ १०।२१।१६ (१०)

पूर्णा इति (पुण्याः)पुलिन्द्यो भिल्लस्त्रियः । पुण्याः सुकृताधिकाः । उरुगायस्य विष्णोः पदाब्जरागेण चरणलौहित्येन श्रीःशोभा तदात्मकं यत् कुङ्कुमं शोभातिशयः । सामान्याधिकरण्ये व्यङ्ग्यं । तथादयिताया लक्ष्म्याः स्तनाभ्यां मण्डितेन तृणेषु (पु) रूषितेन विच्छुरितेन । तस्य श्रीकृष्णस्य दर्शनेन स्मररुक् कामपीड़ा यासां तास्तथा । आननेषु कुचेषु च लिम्पन्त्यः लेपनं कुर्वन्त्यः । तदा तस्मिन् श्रीकृष्णे आधिं अप्राप्तिदुःखं लक्ष्मीस्तनाभ्यां भगवत्पादयोः संक्रान्तेन तत् तृणलग्नेन कुङ्कुमेन समाधिं शमयन्तीत्यर्थः । अतः पुण्याधिकाः ॥ १०।२१।१७ (११)

हन्तेति हन्त अबलाः । अयं गोवर्द्धनः यत् यस्मात् रामकृष्णचरणस्य स्पर्शेन तृणाङ्कुरोद्गम व्याजात् रोमहर्षो यस्य स तथा । मानं पूजाम् । भूर्भूमिः यवसं तृणम् । कन्दरोदरी ॥ १०।२१।१८ (१२)

गा गोपकैरनुवनं नयतोरुदार

वेणु स्वनैः कलपदैस्तनुभृत्सु सख्यः

अस्पन्दनं गतिमतां पुलकस्तरूणां

निर्योगपाशकृतलक्षणयो विचित्रम् ॥१३॥

एवम्विधा भगवतो या वृन्दावनचारिणः ।

वर्णयन्त्यो मिथो गोप्यः क्रीड़ास्तन्मयतां ययुः ॥१४॥

अन्तर्गृहगताः काश्चिद् गोप्योऽलब्धविनिर्गमाः ।

कृष्णं तद्भावनायुक्ता दध्युर्मीलितलोचनाः ॥१५॥

---

गा इति कलानि मधुराणि पदानि येषु तेषु वेणुस्वनेषु-तैःस्तनुभृत्सुमध्ये गतिमतां स्पन्दनं अकिञ्चित् चलनम् । अगति मतां -तरूणां तु पुलक इति चित्रम् । येन दोहकेन दोह (न)काले गाः पश्चात्पादयोर्नियम्यन्ते स निर्योगपाशः । तेन कृतं तल्लक्षणं चिह्नं किल [किण] रूपं ययो स्तौ तथा ॥ १०।२१। १८ (१३)

पूर्व्वानुरागेण भजतः फलमाह ॥ एवमिति । अयञ्च पूर्व्वानुराग एव अद्यापि तासां भगवता साकं अङ्गसङ्गाभावात् । सद्दिदर्शितोऽष्टविंशोऽध्याये । अतएवात्र "तद्व्रजस्त्रिय आश्रुत्य वेणु गीतम् स्मरोदयं । काश्चित् परोक्षम् कृष्णस्य स्वसखीभ्यो न्यवर्णयन्" (१) इत्युक्तम् । गोप्यो मिथः ॥ १०।२१।२० (१४)

पारवश्यहेतुकमाह । अन्तर्गृहेति । अलब्धो विनिर्गमो याभिः । तद्भावना भर्त्तृभावना ॥ १०।२९।९ (१५)

---

(१) भागवत १०।२१।३ श्लोकः ।

दु:सहप्रेष्ठविरहतीव्रतापधुताशुभा: ।
ध्यानप्राप्ताच्युताश्लेषनिर्वृत्या क्षीणमङ्गला: ॥१६॥
तमेव परमात्मानं जारबुद्ध्यापि सङ्गता: ।
जहुर्गुणमयं देहं सद्य: प्रक्षीणबन्धना: ॥१७॥
गत्यानुराग स्मितविभ्रमेक्षितै-
र्मनोरमालाप विहारविभ्रमै: ।
आक्षिप्तचित्ता: प्रमदा रमापते-
स्तास्ता विचेष्टा जगृहुस्तदात्मिका: ॥१८॥

---

बलवद्ध्यानाच्च तासां मुक्तिरासीदित्याह दु:सहेति। दु:सहेन प्रेष्ठस्यविरहेण य स्तीव्रतापो दु:खं तेन धुतं क्षीणं अशुभं पापं यासां तास्तथा। ध्याने प्राप्तो योऽच्युताश्लेष: तेन यानिर्वृति: सुखं तेन क्षीणं मङ्गलं पुण्यं यासां ता: तथा। पुण्यपापक्षये हि कैवल्यम्। तत्र सुखोपभोगेन पुण्यक्षय: ॥ १०।२९।१० (१६)

तमिति तं कृष्णमिव जार उपपति:। ता सङ्गता प्राप्ता:। ताद्रूप्यमापन्ना इत्यर्थ:॥ गुणमयं लिङ्गदेहम्। बन्धनं पुण्यापुण्यम्। शुक: ॥ १०।२९।११ (१७)

अथ मानविप्रलम्भ:। स च प्रणयेर्ष्याभ्यां द्वेधा। अत्र प्रेमपूर्व्वको वशीकार: प्रणय:। तद्भङ्गे मान:। स च स्त्रिया: पुंस उभयोर्वा तत्र भेदान्तराणि स्वयमुह्यानि। पुंविषयन्तु प्रणयमानमत्राह। गत्येत्यादि। अनुरागेण यत् स्मितं विभ्रमेक्षितानि चञ्चलावलोकनानि। आलापो गोष्ठी। विहारो जलक्रीड़ादि:। विभ्रम: शृङ्गारचेष्टा तैराक्षिप्तं आकृष्टम् ॥ १०।३०।२ (१८)

गतिस्मितप्रेक्षणभाषणादिषु
प्रियाः प्रियस्य प्रतिरूढमूर्त्तयः ।
असावहन्त्वित्यबला स्तदात्मिका,
न्यवेदिषुः कृष्णविहारविभ्रमाः ॥१९॥
गायन्त्य उच्चैरमुमेव संहता
विचिक्युरुन्मत्तकवद्वनाद्वनम् ।
पप्रच्छुराकाशवदन्तरं बहि-
र्भूतेषु सन्तं पुरुषं वनस्पतीन् ॥२०॥
जयति तेऽधिकं जन्मना व्रजः
श्रयत इन्दिरा शश्वदत्र हि ।

गतीति गत्यादिषु प्रियस्य प्रतिरूढा अनुकृता मूर्त्तिर्याभिस्ताः । हे अबलाः । असौ कृष्णोऽहमिति न्यवेदिषुः परस्परं निवेदयामासुरित्यर्थः । यतः कृष्णविहारे विभ्रमो यासां तास्तथा । (१) "चित्तवृत्त्यनवस्थानं शृङ्गाराद्विभ्रमो मतः" ॥ १०।३०।३ (१९)

विभ्रममेवाह । गायन्त्य इति । अमुं कृष्णम् । संहता मिलिताः । वनाद्वनं वने वने विचिक्युः अन्वेषयामासुः । अन्तरमन्तः । शुकः ॥ १०।३०।४ (२०)

उन्मत्तवदित्युक्तम् । तमेव विचित्रप्रलापादिहेतुरुन्मादम् प्रपञ्चयति । जयतीति । एषु श्लोकेषु च कुतूहलदृष्टिना वर्णनिर्वाह चित्रं दर्शितम् । तत्राद्यवृत्ते प्रथमपादयोर्द्वितीयमक्षरं यकारः । अन्त्यपादयोर्वकारः ते जन्मनाऽधिकं जयति हि यस्मात् ।

(१) साहित्यदर्पणे ३।१४ श्लोकः ।

दयित दृश्यतां दिक्षु तावका-
स्त्वयिधृतासव स्त्वांविचिन्वते ॥२१॥
शरदुदाशये साधुजात सत्-
सरसिजोदर श्रीमुषा दृशा।
सुरतनाथ तेऽशुल्कदासिका-
वरद निघ्नतो नेह किम्वधः ॥२२॥
विषजलाप्ययाद् व्यालराक्षसाद्
वर्षमारुताद् वैद्युतानलात् ;

---

इन्दिरा लक्ष्मीः। प्रागतलक्ष्मया विरलः प्रचारः। त्वज्जन्मनः प्रभृतित्वधिक इत्यर्थः। एवं प्रशस्य स्वगतं विज्ञापयति ; दयितेति। दृश्यतां त्वया। तावकाः तावकीनाः। त्वयिधृतासव इत्यनेन तद्विचर्य्यावधिकं प्राणधारणमित्युक्तम् ॥ १०।३१।१ (२१)

शरदि उदाशयोजलाधारः। तस्मिन् साधुजातं यत् सत्-प्रशस्तं सरसिजम्। तस्य उदरश्रियम् गर्भशोभां मुष्णाति अपहरति यादृक् तया सुरतनाथ सम्भोगस्वामिन्! दृष्टैव सम्भोगदासीत्यर्थः। अशुल्कदासिकाः निर्म्मूल्यदासीः। अस्मान्निघ्नतः तादृग् दानाभावादित्यर्थः। वध इति वधजन्यं पापं तत्साधनत्वात्तच्छब्दः "आयुर्घृतमिति" (१) वत्। अत्र पादचतुष्केऽपि द्वितीयमक्षरं रेफः॥ १०।३१।२ (२२)

सदा वातुराकस्मिकमुपेक्षणं तवनोचितमित्याहुः। विषेति।

(१) "आयुर्घृतम्" इत्यत्र "युक्तारणमपि घृतं कार्य्यकारणभावसम्बन्ध-सम्बन्धायुसादात्म्येन प्रतीयते। अन्यवैलक्षण्येनापि अभिचारेणायुष्करत्वं प्रयोजनम्" साहित्यदर्पणम्। २१७ श्लोकः।

वृषमयात्मजाद् विश्वतोभया-
दृषभ ते वयं रक्षिता मुहुः ॥२३॥
न खलु गोपिकानन्दनो भवा-
नखिलदेहिनामन्तरात्मदृक् ।
विखनसार्थितो विश्वगुप्तये,
सख उदेयिवान् सात्वतां कुले ॥२४॥
विरचिताभयं वृष्णिधुर्य्य ते,
चरणमीयुषां संसृतेर्भयात् ।
करसरोरुहं कान्तकामदम्,
शिरसि धेहि नः श्रीकरग्रहम् ॥२५॥

---

विषरूपात् कालिन्दीजलाद् योऽप्ययो नाशः। व्यालः अघासुरः राक्षसः प्रलम्बः। वर्षात्। इन्द्रकोपात् सम्बर्त्तकोपद्रवः। मारुतो वात्यारूपस्तृणावर्त्तः। वैद्युतोऽनलः अशनुपातः। वृषोऽरिष्टः। मायात्मजो व्योमः। किं बहुना विश्वतः सर्वस्माद् भयाद् भयहेतोः। हे ऋषभ सर्वश्रेष्ठ! ते त्वया। अत्र पादत्रये प्रथमं वकारः। द्वितीयः षकारश्चतुर्थोऽपि॥ १०।३१।३ (२३)

ननु सर्वेषामस्माकं तुल्यत्वात् कः कं रक्षतीति चेत्तत्राहुः। न खल्विति। अखिलदेहिनामन्तरात्मनो जीवान् पश्यतीति तथा परमात्मा इत्यर्थः। विखनसा ब्रह्मणा। उदेयिवान् उदितोऽसि। सात्वतां यदूनाम्। अत्र पादचतुष्केऽपि द्वितीयोवर्णः खकारः। पालकत्वाद् अस्मानपि पाहीत्यर्थः॥ १०।३१।४ (२४)

विरचितेति। संसारभयात्त्वच्चरणं प्राप्तानां कृताऽभयं कर-

व्रजजनार्त्तिहन् वीरयोषिताम्,
निजजनस्मयध्वंसन स्मित: ।
भज सखि भवत् किङ्करी: स्मनो-
जलरुहाननं चारुदर्शय ॥२६॥
प्रणतदेहिनां पापकर्षणम्,
तृणचरानुगं श्रीनिकेतनम् ।
फणिफणार्पितं ते पदाम्बुजम्,
कृणु कुचेषु न: कृन्धि हृच्छयम् ॥२७॥
मधुरया गिरा वल्गुवाक्यया,
बुधमनोज्ञया पुष्करेक्षण ।

---

कमलं न: शिरसि धेहि । श्रिया: करं गृह्णातीति । तत्तथा । अत्र पादचतुष्केऽपि द्वितीयो रेफ: ॥ १०।३१।५ (२५)

व्रजेति । भो वीरयोषितां मध्ये ये निजजना स्त्वत्परिग्रहास्त्रिय-स्तेषां स्मय: प्राणप्रिया वयमिति दर्प: । (तस्य ध्वंसनम् स्मितं यस्य ।) तस्य ध्वंसनं स्मितं (स्थितम्) यस्य स तथा । भवत् किङ्करीरस्मान् भज । अत्र पादचतुष्केऽपि द्वितीयो जकार: ॥ १०।३१।६ (२६)

प्रणतेति । तृणचरा गाव: । निकेतनमाश्रय: । फणी शेष: कालो-यस्य । कृणु-कुरु । कृन्धिच्छिन्धि (अर्पय) । हृच्छयं कामम् । अत्र द्वितीयो नकार: ॥ १०।३१।७ (२७)

मधुरयेति । वल्गूनि वाक्यानि यस्याम् । बुधमनोज्ञया विदग्ध-हृदयहारिण्या । विधिकरी: आज्ञाकरी: । न भवतोऽध्योममान्यत्

विधिकरीरिमा वीर मुह्यती-

रधरसीधुनाप्याययस्व नः ॥२८॥

तव कथामृतं तप्तजीवनम्,

कविभिरीड़ितं कल्मषापहम् ।

श्रवणमङ्गलं श्रीमदाततम्,

भुवि गृणन्ति ते भूरिदा जनाः ॥२९॥

प्रहसितं प्रियप्रेमवीक्षितम्,

विहरणञ्च ये ध्यानमङ्गलम् ।

रहसि संविदो याहृदिस्पृशः,

कुहक नो मनः क्षोभयन्ति हि ॥३०॥

चलसि यद्व्रजाच्चारयन् पशून्,

नलिनसुन्दरं नाथ ते पदम् ।

---

प्रियतमं अस्मि इत्येवं रूपया मृषा वाचा विमोहिता इत्यर्थः। अधर-सीधुना अधरामृतेन। अत्र धकारो द्वितीयः॥ १०।३१।८ (२८)

तवेति। आततं बहु। भूरिदाः। स्थूलदातारः। ते गृणन्ति। अत्र द्वितीयो वकारः। पादचतुष्कस्य दलद्वये च क्रमात् तकार-ककार-शकार-भकाराः॥ १०।३१।९ (२९)

प्रहसितेति। ध्यानं मङ्गलं चिन्त्यमानं सुखावहं इत्यर्थः। रहसि सम्विदः एकान्तेप्रतिश्रुतानि हृदिस्पृशो हृदयङ्गमाः। कुहक कपटिन्। अन्यथोक्तमन्यथा करोतीति कुहकत्वम्। अत्रहकारो द्वितीयः॥ १०।३१।१० (३०)

चलसीति। नलिनसुन्दरं कमलवत् कोमलम्। शिलैः कणिश-

शिलतृणाङ्कुरैः सीदतीति नः,
कलिलतां मनः कान्त गच्छति ॥३१॥
दिनपरिक्षये नीलकुन्तलै-
र्वनरुहाननं बिभ्रदावृतम्।
घनरजस्वलं दर्शयन् मुहु-
र्मनसि नः स्मरं वीर यच्छसि ॥३२॥
प्रणतकामदं पद्मजार्चितम्,
धरणिमण्डनं ध्येयमापदि।
चरणपङ्कजं शन्तमञ्च ते,
रमण नस्तनेष्वर्पयाधिहन् ॥३३॥
सुरतवर्द्धनं शोकनाशनम्,
स्वरितवेणुना सुष्ठुचुम्बितम्।

---

खण्डैः। कलिलतां अधैर्य्यम्। अत्र लकारो द्वितीयः ॥१०।३१।११(३१)

दिनेति। कुन्तलैरावृतम्। घनोरजोविभ्रत्स्वलं सुष्ठु भूषणम्। कीदृशं वनरुहाननं कमलवन्मुखम् दर्शयन् स्मरं परं यच्छसि। घनं गोधनम्। भीमादिवत् पूर्व्वपदलोपः। अत्र मकारो द्वितीयः ॥ १०।३१।१२ (३२)

प्रणतेति। पद्मजो ब्रह्मा लक्ष्मीर्वा। पद्मजे इत्यत्र "जनसनेति विट् विड्वनो"रिति (१) आत्वम्। शन्तमं सुखतमम्। तेन त्वदीयानामस्माकम्। अत्राद्यपादयोर्द्दलद्वये क्रमात् पकारधकारौ अन्त्ययोस्तृतीयवर्णो नकारः॥ १०।३१।१३ (३३)

---

(१) पाणिनिः ३।२।६१

इतररागविस्मारणं नृणाम्,
वितर वीर नस्तेऽधरामृतम् ॥३४॥

अटति यद्भवानह्नि काननम्,
त्रुटिर्युगायते त्वामपश्यताम् ।
कुटिलकुन्तलं श्रीमुखञ्च ते,
जड उदीक्षतां पक्ष्मकृद् दृशाम् ॥३५॥

पतिसुतान्वय भ्रातृबान्धवा-
नतिविलङ्घ्य तेऽन्त्यच्युतागताः ।
गतिविदस्तवोद्गीत मोहिताः,
कितव योषितः कस्त्यजेन्निशि ॥३६॥

व्रजवनौकसां व्यक्तिरङ्ग ते,
वृजिनहन्त्र्यलं विश्वमङ्गलम् ।

---

सुरतेति । स्वरितः षड्जादिस्वरयुक्तः । इतररागा अधरामृता-दन्येऽभिलाषाः । अत्र पूर्वार्द्धे द्वितीयो रेफः । उत्तरार्द्धे तृतीयः । यद् यदा । त्रुटिः त्रसरेणुत्रयोपलक्षितः कालः । अपश्यतां अस्मदा-दीनां उदीक्षताम् । पक्ष्मकृद् निमेषकर्त्ता जडः नीरसत्वात्, अत्राद्य-दलयोरकारः । अन्त्ययोस्तकारः । पादचतुष्के द्वितीयमक्षरं टवर्गः । १०।३१।१४ (३४)

अटतीति स्पष्टम् ॥ १०।३१।१५ (३५)

पतीति । अन्वयः कुलम् । अतिविलङ्घ्य । अतिक्रम्य ते अन्ति तवसमीपं गतयो गानभेदाः । हे कितव धूर्त्त अत्र द्वितीयस्तकारः । हृच्छयस्योदय उत्पत्तिर्यस्मात् प्रहसिताननात् । अतिस्पृहया । अत्र द्वितीयो वकारः ॥ १०।३१।१७ (३६)

त्यज मनाक् च न स्त त्स्पृहात्मनाम्,
स्वजनहृद्रुजां यन्निषूदनम् ॥३७॥
रहसि संविदं हृच्छयोदयम्,
प्रहसिताननं प्रेमवीक्षणम् ।
बृहदुरःश्रियो वीक्ष्य धामते,
मुहुरतिस्पृहा मुह्यते मनः ॥३८॥
यत्ते सुजातचरणाम्बुरुहं स्तनेषु
भीताः शनैः प्रिय दधीमहि कर्कशेषु ।
तेनाटवीमटसि तद्व्यथ तेन किं स्वित्,
कूर्पादिभि र्भ्रमति धीर्भवदायुषां नः ॥३९॥

---

व्रजेति । व्यक्तिः प्रागेवम् । वृजिनहन्त्री दुःखशमनी । त्वत् स्पृहायामात्मनो यासां तास्तथा । स्वजनहृद्रुजां हृदयरोगानां निषूदनं शमकं यत् आलिङ्गनादि तद् मनाग् अल्पमपि त्यज मुञ्च-देहीत्यर्थः । स्वजनविशेषणेन त्वदधीनं हृदयरोगशमनमित्युक्तम् । अत्राद्यपादयोर्हलद्वयेष्वादिर्वकारः । (क्रमाद् वकार जकारौ) अन्त्यपादयोर्जकारो द्वितीयः । संयोजयतीत्यत आरभ्य एतत्पर्य्यन्तं एकादशाक्षराया जातिः षट्शतोत्तर चतुःषष्ठि भेदः ॥ १०।३१।१८(३७)

रहसीति । स्पष्टम् ॥ १०।३१।१७ (३८)

यदिति । यत्ते सुजातमति कोमलं । भीताः कर्कशस्तनस्पर्शात् (न्) मा(र)स्य सौकुमार्य्यमभाङ्क्षीदिति भयम् । तेन चरणाम्बुरुहेण । अटवीं अरण्यम् । यद् यदा नयसि (न यच्छसि) गच्छसि । नयोपगताविति य (अ)कारान्तोप्यस्ति । "यत्तदोः नित्यसम्बन्धात्" ।

वामबाहुकृतवामकपोलो-
वल्गितभ्रूरधरार्पितवेणुम्।
कोमलाङ्गुलिभिराश्रितमार्गम्,
गोप्य ईरयति यत्र मुकुन्दः ॥४०॥
व्योमयानवनिताः सह सिद्धै-
र्विस्मितास्तदुपधार्य्य सलज्जाः।
काममार्गणसमर्पितचित्ताः,
कश्मलं ययुरपस्मृतनीव्यः ॥४१॥

---

तदास्माकं बुद्धिर्भ्रमति किमिति कूर्पादिभिः सूक्ष्मोपलादिभिः किञ्चिद्व्यथते किं स्विदिति वितर्के। भवान् आयुर्येषां स्तास्तथा। गोप्यः श्रीकृष्णम्॥ १०।३१।१९ (३९)

अथ द्वाविंशत्या श्लोकैः प्रवासमाह। वामबाहुरिति। अत्र चैकादशयुगलानां प्राग्वच्च वर्णविवर्गनिर्वाहः। प्रवासत्वे तु गोप्यः। "(श्रीमत्) कृष्णे वनं याते तमनुद्रुतचेतसः। कृष्णलीलाः प्रगायन्त्यो निन्युर्दुःखेन वासरान्"(१) इति गमकम्। इदं चरणभ्रमणेलक्षितं स्वागताख्यं छन्दः। वामबाहौ कृतो निहितो वामः कपोलो येन। वल्गिते किञ्चिदुच्चलिते भ्रुवौ यस्य स तथा। कोमलाभिरङ्गुलीभिराश्रिताः सप्तमार्गाः। षड्जादिस्वरव्यञ्जकानि स्थानानि यस्मिन् वेणौ तम्। यत्र यदा ईरयति वादयति हे गोप्यः। अत्राद्य पादयोर्व्वकारः आदिः कृत इति चित्रम्॥ १०।३५।२ (४०)

व्योमेति। तदा व्योमयानवनिताः खेचर-स्त्रियः। तद्वेणुवादन-कामस्य मार्गणाः सम्मोहनादयः पञ्चशराः स्तेषां समर्पितम्। तद्-

(१) भागवते १०।३५।१ श्लोकः।

हन्तचित्रमबला: शृणुतेदम्,
हारहास उरसिस्थिरविद्युत् ।
नन्दसूनुरयमार्त्तजनानाम्,
नर्म्मदोयर्हि कूजितवेणु: ॥४२॥
वृन्दशोव्रजवृषामृगगावो-
वेणुवाद्यहृतचेतस आरात् ।
दन्तदष्टकवला धृतकर्णा:,
निद्रिता लिखितचित्रमिवासन् ॥४३॥

शीभूतं चित्तं यासाम् । कश्मलं मोह: । अपस्र(स्त)ताशिथिलो (स्रग्रा) भूतानोवी यासां ता: । अतएव वेणुगीतोद्दीपित स्वभावस्य नीवीस्रथत्वेन प्रकटितत्वात् सलज्जा: । अत्राद्ययोर्व्वकार: । अन्त्ययो: ककार: ॥ १०।३५।३ (४१)

हन्तेति । हन्त चित्रं हे अबला: (शृणुतेदम्) हारवद् विशदो-हासो यस्य । विशदाद्युतिर्यस्या: सा विद्युल्लक्ष्मी: उरसिस्थिता यस्य । "अमूर्द्धमस्तकात् स्वाङ्गादकामे" (१) इत्यलुक् । नर्म कौतुकम् । यर्हि यदा कूजित वेणु: वेणुं कूजयति । अत्राद्ययो-र्हकार: । अन्त्ययोर्नकार: ॥ १०।३५।४ (४२)

वृन्दश इति । वाद्यं वादनम् । भावेकृत्य: । आराद् निकटे । दन्तैर्दष्टा न तु निगीर्णा: कवला यै: । धृतकर्णा वेणुगीते दत्ताव-धाना: । निद्रिता इति "तारकादित्वादितच्" (२) । निद्रिता-नामपि किञ्चिच्चलनमुपलभ्यते । अत्र तु तदपि नास्तीति वक्तुमुद्य-मान्तरं लिखितग्रहणम् । स्मितं भ्रमनिवृत्त्यर्थम् । अत्राद्ययोर्व्व-कार: ॥ १०।३५।५ (४३)

(१) पाणिनि: ६।३।१२ सूत्रम् । (२) पाणिनि: तारकादिभ्यो निर्द्दिष्टेतच् प्रत्यय सूत्रम् ।

बर्हिण स्तवकधातुपलाशै-
र्बद्धमल्लपरिबर्ह विडम्बः ।
कर्हिचित् सबल आलि सगोपै-
र्गाः समाह्वयति यत्र मुकुन्दः ॥४४॥
तर्हि भग्नगतयः सरितो वै,
तत्पदाम्बुजरजोऽनिलनीतम् ।
स्पृहयतीर्वयमिवाबहुपुण्याः,
प्रेमवेपितभुजास्तिमितापः ॥४५॥

---

बर्हिण इति। बर्हिणो मयूरा विद्यन्ते स्वामितया येषां तानि बर्हिणानि मयूरपिच्छानि। "अर्शआदित्वादच्" (१)। स्तवकाः पुष्पगुच्छाः। धातुर्मनःशिलादि। पलाशं पत्रं तैर्बद्धोरचितः। मल्लपरिबर्हाणां मल्लोपकरणानाम् विडम्बोऽनुकारो येन। कर्हिचित् कदाचित्। एवं विचित्रमित्यर्थः। आलि-वयस्यः बलो बलभद्रः। अत्राद्ययोर्बकारः॥ १०।३५।६ (४४)

तर्हीति। तर्हि तदानीम्। भग्नगतयः मज्ञातजाड्यमश्चारिभावत्वात्। तस्य मुकुन्दस्य। अनिलेन दूतीभूतेन नीतं प्रापितम्। वैशब्द उत्प्रेक्षायाम्। निष्कारणा नदीप्रवृत्तिः सकारणत्वेनोत्प्रेक्ष्यते। उत्प्रेक्षायाश्च भगवतः सरिताश्च भक्त-पत्नी। सम्व्यवहारमारोप्य-व्यङ्ग्यः॥ स्पृहयतीः स्पृहयन्त्यः। रजःस्पृहयतीरिति द्वितीयानिर्देशो रजसः ईप्सिततमत्वविवक्षया। अन्यथाहि "(२) स्पृहेरीप्सित" इति

---

(१) पाणिनिः ५।२।१२७ सूः।

(२) पाणिनिः १।४।३६ सूः।

अनुचरैः समनुवर्णितवीर्य्य-
आदिपुरुष इवाचल भूतिः ।
वनचरो गिरितटेषु चरन्तो-
र्वेणुनाह्वयति गाः स यदा हि ॥४६॥
वनलतास्तरव आत्मनि विष्णुं,
व्यञ्जयन्त्य इव पुष्पफलाढ्याः ।
प्रणतभारविटपा मधुधाराः,
प्रेमहृष्टतनवो ववृषुः स्म॥४७॥

सम्प्रदानत्वे चतुर्थी भाव्यम् । अवहुपुण्यावयमिवेति । यथा वयं तत्-पादरजः स्पृहयामो न तु प्राप्नुमः । अवहुपुण्यत्वात् तथैता इति । स्पृहामात्रे स्वदृष्टान्तो नत्वप्राप्तौ । नदीभिः ( अपि बहुशः ) प्राप्त-त्वात् । गोपीभिरपि बहुशः प्राप्तत्वेऽपि क्षणं विप्रलम्भासहत्वाद-प्राप्तबुद्धिः । प्रेम्णा वेपिताश्चिनस्त्रोभूताः भुजोर्म्मिरूपा यासां ताः । ( स्तिमिता निश्चलाः ) आभ्यां कम्पस्तम्भौ शृङ्गारानुभावावुक्तौ । अत्राद्ययोस्तकारः ॥ १०।३५।७ (४५)

अनुचरैरिति । भूतिरैश्वर्य्यम् । स कृष्णः । अत्राद्ययोरवर्णाः (र्णः) अन्त्ययोर्वः ॥ १०।३५।८ (४६)

चिरमनुशीलानां स्वस्मिन् अभिव्यक्तिमाह वनलतेति । भारेण प्रणताः प्रणतभाराः ते विटपा येषां । मधुधारा क्षीरधाराः मिषा-दानन्दाश्रूणीत्यर्थः । हृ(ह)ष्टतनव उद्भिन्नत्वचक्रात् । अत्राद्ययोर्व-कारः (अन्त्ययोः प्रशब्दः) ॥ १०।३५।९ (४७)

दर्शनीयतिलकोवनमाला-
दिव्यगन्धतुलसी मधुमत्तैः ।
अलिकुलैरलघुगीतमभीष्ट-
मादृियन् यर्हि सन्धित वेणुः ॥४८॥
सरसि सारस हंसविहङ्गा-
श्चारुगीतहृतचेतस (एत्य) आरात् ।
हरिमुपासत ते यतचित्ता-
हन्त मीलितदृशो धृत मौनाः ॥४९॥
सहबलः स्रगवतंस विलासः,
सानुषु क्षितिभृतो व्रजदेव्यः ।
हर्षयन् यर्हि वेणुरवेण,
जातहर्ष उपरम्भति विश्वम् ॥५०॥

---

दर्शनीयेति वनमालायां या दिव्यगन्धा तुलसी तस्या मधुना परिमलेन मत्तैर्भ्रमरैरलघुदीर्घं यद् गीतम् तद् आदृियन् तस्यादरं कुर्व्वन्। यर्हि यदा सन्धित अधरेण कृतसन्धानो वेणुर्येन स तथा। अत्राद्ययोर्दः (र्हः) अन्त्ययो रेफः (रवर्णः) ॥ १०।३५।१० (४८)

सरसीति। हन्त हे सखि! आद्ययोः सः अन्तयोः र्हः ॥ १०।३५।११ (४९)

सहेति। स्रगवतंसाभ्यां मालाकर्णपुराभ्यां विलासः शोभा यस्य स तथा। हे व्रजदेव्यः! वेणुरवेण विश्वं हर्षयन् जातहर्षो यर्हि स्वयमुपरम्भति आनन्देन स्वयं शब्दं करोति। आद्ययोः सः ॥ १०।३५।१२ (५०)

महदतिक्रमणशङ्कितचेता-
मन्दमन्दमनुगर्ज्जति मेघ: ।
सुहृदमभ्यवर्षत् सुमनोभि:,
छायया च विदधत्प्रतपत्रम् ॥५१॥
विविधगोपचरणेषु विदग्धो-
वेणुवाद्य उरुधा निजशिक्षा: ।
तव सुत: सति यदाधरबिम्बे-
दत्तवेणुरनयत् स्वरजाती: ॥५२॥
सवनशस्तदुपधार्य्य सुरेशा:,
शक्रशर्व्वपरमेष्ठि पुरोगा: ।

महदिति। महत्शब्देनास्य शब्दस्तिरस्कृतोमाभूत् इति शङ्का। अतो मन्दं मन्दं गर्ज्जति। अनु तच्छब्दितानन्तरं सुहृदं कृष्णम्। सुमनोभि: पुष्पै: प्र(आ)तपत्रम् छत्रम्। आद्ययोर्म: अन्त्ययो: स: ॥ १०।३५।१३ (५१)

विविधेति। चरणं चर्य्या क्रीड़ेत्यर्थ:। वाद्यं वादनम्। उरुधा बहुधा। हे सति यशोदे! तव सुतो यदा स्वरजाती: (१) षड्-जादिप्रभेदाननयद् उद्भावितवान्। निजा स्वप्रज्ञोत्प्रेक्षिता शिक्षा-संप्रदायो यासु स्वरजातिषु। आद्ययोर्ल्व: ॥ १०।३५।१४ (५२)

सवनश इति अनुसन्धत्। तत्तथाविधं गीतम्। शर्व्वो रुद्र: (२) आनतां कन्धरा चित्तञ्च येषाम्। चित्तपूर्व्वकं प्रणेमुरित्यर्थ:।

(१) अमर—स्वर्गवर्ग—सप्तम परिच्छेद: ।

(२) "...र्व्व: शर्व्वश्च शङ्कर:" इति त्रिकाण्डकोष: ।

कवय आनतकन्धरचित्ताः,
कश्मलं ययुरनिश्चिततत्त्वाः ॥५३॥
निजपदाब्जदलैर्ध्वजवज्र-
नीरजाङ्कुशविचित्रललामैः ।
व्रजभुवः शमयन् खुरतोदम्,
वर्ष्मधुर्य्यगतिरीडित वेणुः ॥५४॥
व्रजति तेन वयं स विलास-
वीक्षणार्पित मनोभववेगाः ।
कुजगतिङ्गमितानविदामः,
कश्मलेन कवरं वसनं वा ॥५५॥
मणिधरः क्वचिदागणयन् गा-
मालया दयितगन्धतुलस्याः ।

कश्मलं मोहः । कस्य स्वरस्यायं प्रभेदो गीयत इति निश्चयाभावाद् मोहः । आद्यद्वयोः शः । अन्त्ययोः कः ॥ १०।३५।१५ (५३)

निजेति । दलैरवयवैः नीरजं पद्मम् । ध्वजादयो विचित्राणि ललामानि चिह्नानि येषाम् । खुरतोदं खुरव्यथाम् । वर्ष्मणा देहेन धुर्य्यः श्रेष्ठो गज इति यावत् तद्वद्गतिर्यस्य । स तथा । आद्य-योर्नः अन्त्यद्वयोर्व्वः ॥ १०।३५।१६ (५४)

व्रजतीति । यद् व्रजति तेनेत्यर्थः । सविलासं स शोभं यद्वीक्षणम् । तेनार्पितो मनोभववेगो यासां । कुजगतिं गमिताः । द्रुमवज्जड़ीभूताः । कवरं केशपाशं । आद्ययोर्वः अन्त्यद्वयोः कः ॥ १०।३५।१७ (५५)

प्रणयिनोऽनुचरस्यकदांसे,
प्रक्षिपन् भुजमगायत यत्र ॥५६॥
क्वणित वेणुरव वञ्चितचित्ताः,
कृष्णमन्वसत कृष्णगृहिण्यः।
गुणगणार्णमनुगत्य हरिण्यो-
गोपिका इव विमुक्त गृहाशाः ॥५७॥
कुन्ददाम कृतकौतुकवेषो-
गोप गोधनवृतो यमुनायाम्।
नन्दसूनुरनघे! तववत्सो-
नर्मदः प्रणयिनां विजहार ॥५८॥
मन्दवायुरुपवात्यनुकूलम्,
मानयन् मलयजस्पर्शेन।

---

मणीति। मणयः काचघटितादयः। दयितो गन्धो यस्याः। तुलस्याः तस्या मालया विशिष्टः। प्रणयिनः प्रियस्य कदा कदापि। आद्ययोर्मः। अन्त्ययोः प्रशब्दः॥ १०।३५।१८ (५६)

क्वणितेति। कृष्णं अन्वसत। अनुगता आसन्। कृष्णस्य मृगस्य हरेश्च गृहिण्यः गुणगणस्य अर्णमर्णवम्। गोपिका इव हरिण्यो विरहपाण्डुराः। आद्ययोः कः अन्त्ययोर्गः॥ १०।३५।१९ (५७)

कुन्देति। दाम माला हे अनवद्ये! यशोदे!। यदा विजहार तदा मलयजस्य चन्दनस्य स्पर्शेन विशिष्टो वायुरुपसमीपे वाति। उपदेवा विद्याधरादयः। वादयादिभिर्विशिष्टाः। प्रथमे अन्त्ययोर्नकारः। द्वितीये आद्ययोर्मः। अन्त्ययोर्द्वयोरैक्याद्वः ॥१०।३५।२०(५८)

वन्दिन स्तमुपदेवगणा ये,
व.द्यगीतबलिभिः परिवव्रुः ॥५९॥
वत्सलो व्रजगवां यदगध्रो-
वन्द्यमानचरणः पथि वृद्धैः ।
वत्स (कृत्स्न) गोधनमुपोह्य दिनान्ते,
गीतवेणुरनुगेड़ितकीर्त्तिः ॥६०॥
उत्सवं श्रमरुचापि दृशीना-
मुन्नयन् खुररजश्छुरित स्रक् ।
दित्सयैति सुहृदाशिष एष-
देवकी जठरभूरुडुराजः ॥६१॥
मधुपकितववन्धो मास्पृ शाङ्घ्रिं सपत्न्याः,
कुचविलुलितमालाकुङ्कुमश्मश्रुभिर्नः ।

---

मन्दे ति स्पष्टम् ॥ १०।३५।२१ (५८)

वत्सलेति। यत् यदा एष सुहृदाशिषो दित्सया एति तदा खुर-रजसाच्छुरित स्रग् भवति। अगो गोवर्द्धनः। उपोह्य निर्व्वर्त्य ॥ १०।३५।२२ (६०)

उत्सवेति। श्रमरुचा श्रमशोभयाऽपि दृशीनां उत्सवं उन्नयन् प्रापयन्। उडुराजश्चन्द्रमाः। प्रथम आद्ययोरुः। द्वितीय आद्ययो-दकारः। अन्त्ययोर्दः। मदविघूर्णितेति श्लोकद्वयं बलभद्रविषय-त्वाद् अत्र नोक्तम्। गोप्यो मिथः ॥ १०।३५।२३ (६१)

एवमल्पव्यवधानं प्रवासमुक्त्वा बहुव्यवधानमाह। मधुपकितवेति।

वहतु मधुपतिस्तन्मानिनीनां प्रसादम्,
यदुसदसि विडम्ब्यं यस्य दूतस्त्वमीदृक् ॥६२॥
सकृदधरसुधां स्वां मोहिनीं पाययित्वा,
सुमनस इव सद्यस्तत्यज्जेऽस्मान् भवादृक् ;
परिचरति कथन्तत् पादपद्मं नु पद्मा,
अपिबत हृतचेता ह्युत्तमः श्लोकजल्पैः ॥६३॥

---

हे मधुप ! कितवबन्धो धूर्त्तसम्बन्धिन् नः अङ्घ्रि सपत्न्याः कुचयोर्विलु-लितं संयोगविमर्दात् प्रभ्रष्टम् मालाया यत् कुङ्कुमम् । तद्रक्तैः श्मश्रु-भिरास्पृश । रति व्यतिकरे सपत्नीस्तनकुङ्कुमरञ्जितायां उपवेशाद् भ्रमरस्य शोणश्मश्रुतां सम्भाव्येदमुच्यते । मधुपेति । ( कृष्णः ) तस्य मानिनीनां मथुरोणाम् । तन्मानिनीनामिति सोत्प्रासं (सोत्साहम्) विडम्ब्यं उपालम्भनीयम् । स्त्रैणत्व प्रकाशनाद् ईदृक् कुचकुङ्कुमेन श्लाघ्यमानत्वाद् निर्लज्जास्पदत्वेन मधुपतिरप्येवंविध इत्युक्तम् । अतएव मधुपत्वं तस्य च कितवत्वम् । प्रायेण हि मधुपाः कितवाश्च निश्शंका भवन्ति ॥ १०।४७।१२ (६२)

कितव त्वं बन्धुत्वं चाह । सकृदित्यादि । सुमनसोऽस्मान् भवानिव चलप्रकृतिर्दृश्यत इति । भवादृक् श्रीकृष्णः । यथा त्वं सुमनसः पुष्पाण्युपभुज्य त्यजसि । तस्य चरणसौहृदस्य पादपद्मं, पद्मालक्ष्मीः कथं परिचरति । नु शब्दो वितर्के अपि अहो । हृतं वञ्चितं चित्तं यस्याः । उत्तमःश्लोकस्य जल्पैः विविधैः चाटुकारैः प्रियवाक्यैः भ्रमितचित्ता परिचरतीत्यर्थः । वत इत्यनुकम्पायाम् ॥ १०।४७।१३ (६३)

किमिह बहुषडङ्घ्रे गायसि त्वं यदूना-
मधिपतिमगृहाणामग्रतो नः पुराणम्।
विजयसखसखीनां गीयतां तत्प्रसङ्गः,
क्षपित कुचरुजस्ते कल्पयन्तीष्टमिष्टाः॥६४॥
दिवि भुवि च रसायां काः स्त्रियस्तद् दुरापाः,
कपटरुचिरहास भ्रू विजृम्भस्य याः स्युः।
चरणरज उपास्ते यस्य भूतिर्वयं का?
अपि च कृपणपक्षे ह्युत्तमः श्लोकशब्दः॥६५॥

---

भ्रमरगुञ्जितं कृष्णगुणगानं मत्वाह। किमिहेति। हे षडङ्घ्रे! भ्रमरयदूनामधिपतिमिति लक्षणया तच्चरितमभिमतम्। तत् किं बहुगायसि। यतस्तु पुराणं जीर्णं वयञ्चागृहाः एकाकिन्यः। विजयोऽर्जुनः। तस्य सखा कृष्णः। तस्य सख्यो मथुरा स्त्रियः। तासामग्रतो गीयताम् ताश्च तवेष्टं कल्पयन्ति। पूरयिष्यन्ति इत्यर्थः। वर्त्तमानसामीप्ये (वर्त्तमानवद् वा) भविष्यदर्थे लट्। यत स्ताः क्षपितकुचरुजः इष्टाश्च तस्य न तु वयमित्यर्थः॥ १०।४७।१४ (६४)

भो मातः मैवं वोचः त्वामप्यभिप्रेत्याह। त्वामनुस्मृत्यानङ्ग-विकलः त्वां प्रसादयितुमादिष्टवानिति। अत आह दिवीति। मामाह्वातुमयमागत इत्यभिप्रेत्याह। स्वर्गादौ तस्य दुरापायाः स्त्रियः ताः काः न काश्चनापीत्यर्थः। अतः किं मदाह्वानेन। कपटेन रुचिरो हासो भ्रूजृम्भश्च यस्याः। यस्य चरणरजो लक्ष्मीरप्युपास्ते तस्य वयं काः न काश्चनापीत्यर्थः। अपि चैवंविधस्यापि अस्मासु कृपया युज्यते। यतः उत्तमःश्लोकशब्दः कृपणानां पक्षे सहायभूते

विसृज शिरसि पादं वेद्म्यहं चाटुकारैः,
अनुनयविदुषस्तेऽभ्येत्य दौत्यैर्मुकुन्दात्।
स्वकृत इह विसृष्टापत्यपत्यन्यलोकान्,
व्यसृजदकृतचेताः किन्नु सन्धेयमस्मिन् ॥६६॥

मृगयुरिव कपीन्द्रं विव्यधे लुब्धधर्म्मा,
स्त्रियमकृत विरूपां स्त्रीजितः कामयानाम्।
बलिमपि बलिमत्त्वा वेष्टयद् ध्वाङ्क्षवद्य-
स्तदलमसित सख्यैर्दुस्त्यजस्तत्कथार्थः ॥६७॥

---

पुंसि वर्त्तते। स च उत्तमःश्लोकत्वादनाथानप्यस्माननुग्रहिष्यतीति भावः॥ १०।४७।१५ (६५)

भ्रमरं (पा)दे स्वचरणपतितं मत्वाह। विसृजेति। अनुनयविदुषः सन्धानप्रकारज्ञान् मुकुन्दागतेन त्वया चाटुकारैः प्रियवाक्योच्चारणैः। शिरसि कृतम् मे पादं विसृज वेद्म्यहं मुकुन्दं। नु अहो अस्मिन् मुकुन्दे किं सन्धेयम्? यः अस्मान् व्यसृजत्। स्वकृते कृष्णार्थं विसृष्टास्त्यक्ताः। अन्ये गृहादयः। अकृतमकृतज्ञं चेतो यस्य॥ १०।४७।१६ (६६)

अकृतचेतस्त्वमेवाह। मृगयुरिवेति। मृगयुर्व्याधः। कपीन्द्रो बाली। लुब्धस्वभावः स्त्रियं सूर्पणखाम्। अकृत कृतवान्। कामयानां कामयमानाम्। बलिं वैरोचनम्। बलिमुपहारं प्रतिग्रहरूपम्। अत्त्वा भक्षयित्वा। अवेष्टयद् ववन्ध। ध्वाङ्क्षवत् काकवत्। तत् तस्मादकृतज्ञत्वात्। असितः श्रीकृष्णः॥ १०।४७।१७ (६७)

यदनुचरितलीला कर्णपीयूष विप्रुट्,
सकृददनविधूत द्वन्द्वधर्म्मा विनष्टाः ।
सपदि गृहकुटुम्बं दीनमुत्सृज्य दीना-
बहव इह विहङ्गा भिक्षुचर्य्यां चरन्ति ॥६८॥
वयमृतमिव जिह्मव्याहृतं श्रद्दधानाः,
कुलिकरुतमिवाज्ञाः कृष्णवध्वो हरिण्यः ।
ददृशुरसकृदेतत् तन्नख स्पर्शतीव्र-
स्मररुज उपमन्त्रिन् भण्यतामन्य वार्त्ताः ॥६९॥

---

नन्वलं चेत् किमिति प्रस्तूयते तत्राह दुस्त्यज इति। दुस्त्यजत्व-मेवाह। यदनुचरितेति। यस्य अनु अनुकूला चरित लीलैव कर्ण-पीयूषं तस्य विप्रुषो बिन्दवः तेषां सकृददनेन विधूतास्त्यक्ता द्वन्द्वधर्म्माः स्त्रीपुरुषाणामाचाराः रागद्वेषादयो वा यैस्ते तथा। विभ्यः पक्षिभ्यः नष्टाः पृथग्भूताः त्यक्तसङ्गा इत्यर्थः। सपदि लीला कर्ण-नान्तरम्। गृहं कुटुम्बञ्चेह वृन्दावने भिक्षुचर्य्यां परमहंस-स्थितिम् ॥ १०।४७।१८ (६८)

ननु पूर्व्ववृत्तान्तो यथा तथाऽस्तु एतत् सन्धानं न चलतीति चेत्त-त्राह वयमिति। वयं सर्वा अपि जिह्मस्य कुटिलस्य कृष्णस्य व्याहृतमुक्तम् ॥ ऋतमिव असत्यमपि सत्यं मन्यमानाः ददृशुरित्ये तस्य विपरिणामाद्दृष्टिम। एतत्तस्य विप्रलम्भकत्वम्। यथा कुलि-कस्य व्याधस्य रुतं कपटगीतं हरिण्यो वास्तवं मन्यमाना बधेनासत्यं ददृशुः। कृष्णोहरिमृगस्य। हे उपमन्त्रिन् प्रलोभक! तस्मादन्य-वार्त्ताक्रियताम् ॥ १०।४७।१९ (६९)

प्रियसख ! पुनरागाः प्रेयसा प्रेषितः किम्,
वरय किमनुरुन्धे माननीयोऽसि मेऽङ्ग ।
नयसि कथमिहास्मान् दुस्त्यजद्वन्द्वपार्श्वम्,
सततमुरसि सौम्य श्रीर्वधूः साकमास्ते ॥७०॥
अपि बत मधुपुर्यामार्यपुत्रोऽधुनाऽऽस्ते,
स्मरति स पितृगेहान् सौम्य बन्धूंश्च गोपान् ।
क्वचिदपि स कथा नः किङ्करीणां गृणीते,
भुजमगुरुसुगन्धं मूर्ध्न्यधास्यत् कदा नु ॥७१

किञ्चिद् भ्रमणं कृत्वा व्यावृत्तं भ्रमरं भगवता प्रेषितं मत्वाह प्रियसखेति । हे प्रियसख ! प्रेयसाकृष्णेन प्रेषितः सन् किं पुनः रागाः आगतोऽसि । किमनुरुन्धे कं अनुरोधं अनुवृत्तिं करोमि किन्ते कामं पूरयामीत्यर्थः । मथुरागमनमेव वरयामीतिचेत् तत्राह । नयसीति । इह अस्मिन् प्रस्तावे दुस्त्यजं द्वन्द्वं माथुरीभिः सह मिथुनीभावो येन तस्य पार्श्वं तदासक्तत्वेनास्माभिः सह तस्य प्रसङ्गाभावाद् व्यर्थं गमनमिति भावः । न कदाचिदेकान्ते त्वयाऽपि सह प्रसङ्गो भविष्यतीति चेत्तत्राह । सततमिति । हे सौम्य ! सोमवत्प्रियदर्शन ! सा प्रसिद्धा कं सुखं यथा स्यात् तथाऽऽस्ते ॥ १०।४७।२० (७०)

मनोगतं पृच्छति अपीति । बत अहो । मधुपुरी मथुरा । आर्यस्य वसुदेवस्य पुत्रः सः क्वचिदपि कस्मिन्नपि प्रसङ्गे कथाः वार्त्ता गृणीते करोतीत्यर्थः । अपीति निपातः सम्बोधने । धास्यत् धास्यति । नु शब्दः प्रश्ने । गोप्यो भ्रमरम् ॥ १०।४७।२१ (७१)

पट्टमहिष्यः—

कुररि विलसि त्वं वीतनिद्रा नशेषे,
स्वपिति जगति रात्र्यामीश्वरो गुप्तबोधः ।
वयमिव सखि कच्चिद् गाढ़ निर्विद्धचेता,
नलिननयनहासोदारलीलेक्षितेन ॥७२॥
नेत्रे निमीलयसि नक्तमदृष्टबन्धु,
स्त्वं रोरवीषि करुणं बत चक्रवाकि ।
दास्यङ्गता वयमिवाच्युत पादजुष्टम्,
किम्वा स्रजं स्पृहयसे कवरेण वोढ़ुम् ॥७३॥

अथ वैचित्त्ये विप्रलम्भमाह । पट्टमहिष्य इति । कुररीति । हे कुररि नशेषे । जगति स्वपति शय्यायामपि त्वं वीतनिद्रा यत्तत् किमीश्वरस्त्वत् स्वामी कुररः गुप्तबोधः अदृष्टोभूतः । वयमिव यथा वयं गुप्तेश्वरत्वाद्वीतनिद्राः । अनेन निद्राच्छेदलक्षणा स्मरदशा उक्ता (१) । सर्वविलासाश्रयस्य सन्निहितत्वेऽपि उन्मादमाहात्म्याद् गुप्तबोधिः । न त्वत्र भगवतोऽन्तर्द्धानादि समुत्थम् । नशेष इत्यत्र न च्युतोऽच्युत इति वत् "नभ्राण्नपात् न लोपो नञः" (२) । कच्चित् शब्दो हि इष्टसंप्रश्ने । नलिननयनः कृष्णः । निर्विद्धचित्तास्त्वं वीतनिद्रत्वे कारणान्तरम् ॥ १०।९०।१५ (७२)

नेत्र इति । नक्तं रात्रौ बन्धुः प्रियतमः । रोरवीषि भृशं शब्दं

(१) विप्रलम्भपर्य्याये उज्ज्वलनीलमणौ ।

(२) पाणिनिः ६।३।७३ सूत्रम् ।

भो भोः सदा निष्टनसे उदन्व-
न्नलब्धनिद्रोऽधिगतप्रजागरः।
किम्वा मुकुन्दापहृतात्मलाञ्छनः,
प्राप्तं दशां त्वञ्च गतो दुरत्ययाम् ॥७४॥
त्वं यक्ष्मणा बलवतासि गृहीत इन्दो-
क्षीणस्तमो न निजदीधितिभिः क्षिणोषि।
कच्चिन्मुकुन्द गदितानि यथा वयं त्वम्,
विस्मृत्य भोः स्थगितगीरुपलक्ष्यसे नः ॥७५॥
किम्वाचरितमस्माभिर्मलयानिल तेऽप्रियम्।
गोविन्दापाङ्गनिर्भिन्ने हृदीरयसि नः स्मरम् ॥७६॥

करोषि। अहो इति खेदे। अच्युतस्य पादाभ्यां भक्त्यर्पितलाञ्छनां वयमिव यथावयं स्पृहयामः। अनेन सङ्कल्पलक्षणा ॥ १०।९०।१६ (७३)

भो इति हे उदन्वन् समुद्र निष्टनसे नितरां शब्दायसे। मुकुन्देनापहृतं आकृष्टं यदात्मनो लाञ्छनं समुद्रशयना (शायिनी) मूर्त्तिः तेन प्राप्तां दशाङ्गतः। त्वञ्चेति चकारेण वयञ्च। समुद्रशायिन एव पुरुषस्य कृष्णत्वात् प्रतिसमुद्रं हरिः गत इति कविसमयाच्च। अत्र निष्टनस इत्यनेन प्रलापलक्षणा ॥ १०।९०।१७ (७४)

त्वमिति। यक्ष्मणा दक्षशापजेन रोगेण प्रक्षिणोषि। न नाशयसि। यथा वयं विरहजेन यक्ष्मणा क्षीणाः। तमोऽज्ञानम्। दीधितिभिः प्रज्ञारश्मिभिर्नक्षिणुथाः। विस्मृत्य विशेषात् श्रुत्वा स्थगितगीर्निश्चलः। उपलक्ष्यसे दृश्यसे नोऽस्माभिः। अनेन व्याधिलक्षणा ॥ १०।९०।१८ (७५)

मेघश्रीमंस्त्वमसि दयितो यादवेन्द्रस्य नूनम्,
श्रीवत्साङ्कं वयमिव भवान् ध्यायति प्रेमबद्धः ।
अत्युत्कण्ठः शबलहृदयोऽस्मद्विधो बाष्पधाराः,
स्मृत्वा स्मृत्वा विसृजसि मुहुर्दुःखदस्तत् प्रसङ्गः ॥७७॥

प्रियरावपदानि भाषसे,
मृतसञ्जीविकयानया गिरा ।
करवाणि किमद्य ते प्रिय-
म्वद मे वल्गितकण्ठ कोकिल ! ॥७८॥

न चलसि नवदस्युदारदुर्गे,
क्षितिधर चिन्तयसे महान्तमर्थम् ।
अपिवत वसुदेव नन्दनाङ्घ्रिम्,
वयमिव कामयसे स्तनैर्विधर्त्तुम् ॥७९॥

शुष्यद्ध्रदाः कृशतया (दर्शिता) वत सिन्धुपत्नाः,
सम्प्रत्यपास्त कमल श्रिय इष्ट भर्त्तुः ।

---

किम्बेति । किमप्रियमाचरितं नो हृदि ईरयसि उद्दीपयसि । अनेन मनःसङ्गलक्षणा ॥ १०।९०।१९ (७६)

मेघेति । शबलं व्याकुलम् । अत्र स्मृतिः ॥ १०।९०।२० (७७)

प्रियेति । प्रियस्य नाम पदानीति । (भाषसे) अनया पञ्चमस्वर-युक्तया वल्गितो वल्गोक्तः । अत्र गुणकीर्त्तनम् ॥ १०।९०।२१ (७८)

नेति । अपि अहो । यथावयं स्तनैर्विधर्त्तुं कामयामहे । अत्र तपानाशः ॥ १०।९०।२२ (७९)

यद्वद्वयं मधुपतेः प्रणयावलोक-

मप्राप्यमुष्टहृदयाः पुरुकर्शिताः स्मः ॥८०॥

हंसस्वागतमास्यतां पिव पयो ब्रूह्यङ्ग शौरेः कथाम्,

दूतं त्वानु विदाम कच्चिदजितः स्वस्त्यास्ति उक्तं पुरा।

किम्वा नश्चलसौहृदः स्मरति तं कस्माद्भजामो वयम्,

क्षौद्रालापयकामदं श्रियमृते सैवैकनिष्ठा स्त्रियाम् ॥८१

इति श्रीवोपदेवकृते मुक्ताफले विष्णुभक्तानां

विप्रलम्भशृङ्गारो नाम द्वादशोऽध्यायः।

---

हे सिन्धुपत्न्यो महानद्यः! अः: कष्टम्। यूयं सूर्पस्था भवथः। शुष्यन्त्यो (पुष्यन्त्यो) हृदाः हृदयस्थानीयाः प्रदेशा यासां ताः। अर्पिताः कमलश्रियो मुखायमानपद्मशोभा यासां ता स्तथा। वयमप्येवंविधाः। अत्र तनुता ॥ १०।९०।२३ (८०)

हंसेति। हे हंस आस्यतां उपविश्यताम्। शौरेः कृष्णस्य। नु अहो! अजितः कृष्णः। पुरा पूर्व्वमस्मान् प्रति यदुक्तं तत् किं स्मरति? तच्च कस्माद्भजामो वयम्। यतोऽसौ क्षौद्रवद् मधुवन्मधुरालापो न तु कामदः। श्रियमृते सा हि यासां स्त्रीणां मध्ये-एकनिष्ठा एकस्मिन्नेव स्थिरीभूता न तु चञ्चलेति सोत्प्रासोक्तिः। अयमर्थः अचञ्चला अप्यस्मान् उज्झि (हि) त्वा चञ्चलां श्रियं स भजते इति। अत्रोन्मादः। महिष्यःकुरर्यादीन् ॥ १०।९०।२४ (८१)

अत्र च स्मृति गुणकीर्त्तन-व्याधि-प्रलापाश्चतस्रो दशाः काव्यप्रकाशनिष्ठाः। निद्राच्छेदादयस्तु षट् नयनप्रीतिरित्यत्र रति-

रहस्यस्था (१) दर्शिता इति ज्ञेयम्। तासां नानामहिषीगतत्वाद् यत् क्रमादुक्ताः। मृतिलक्षणात्वन्यास्मरदशास्ति (२) "सा च इतोऽनेन भावेन कृष्णे योगेश्वरेश्वरे। म्रियमाणेन माधव्यो लेभिरे वैष्णवीं गतिम्"॥ (३) इत्येतेन मूलग्रन्थे न सूचिताऽप्यमङ्गलत्वादिह नोक्ताः। एकादशश्लोके जलकेलिप्रसङ्गे मूले दर्शिता (४)। तत्र च सन्निहितेऽपि भगवति तदालाप सौष्ठवेन तासां वैचित्त्याविर्भावात्स्य भेदस्य पूर्व्वानुरागादिष्वन्तर्भावः शक्यो वक्तुम्। तथाच तत्रोक्तं "(५) कृष्णस्यैवंविहरतो गत्यालापेक्षितस्मितैः। नर्म्मक्ष्वेलि परिष्वङ्गैः स्त्रीणां किल हृताधियः॥ ऊचुर्मुकुन्दैकधियो गिर उन्मत्तवज्जडं। चिन्तयन्त्योऽरविन्दाक्षं यास्तामेगदतः शृणु" इति। न चास्मिन्नध्याये भगवतो व्यवधानादिकमुक्तम्। तस्माद्वैचित्त्यरूपं विप्रलम्भस्य भेदान्तरमवश्यमभ्युपेतव्यम्। अयमेवात्र विदग्धवृद्धेराचार्य्यस्याभिप्रायः।

इति हैमाद्रिविरचितायां कैवल्यदीपिकायां विष्णुभक्तानां विप्रलम्भशृङ्गारो नाम द्वादशोध्यायः (१२)।

(१) कक्कोक प्रणीतरतिशास्त्रम्। तच्च वैश्यदत्तार्थे लिखितम्। तत्र रतिविषयेऽनेके विषयाः सन्ति।

(२) "चिन्ताव जागरोद्वेगौ तानवं मलिनाङ्गता, प्रलापो व्याधिरुन्मादो मोहो मृत्युर्दशा दश" इत्युज्ज्वलनीलमणौ प्रवासाख्य विप्रलम्भे धृतोऽयं श्लोकः।

(३) श्रीमद्भागवतम् १०।९०।२५

(४) " १०।९०।११।

(५) " १०।९०।१३-१४

## अथ त्रयोदशोऽध्यायः ।

---

### विषाभक्तानां करुणरसः ।

तत्राऽर्ज्जुनः—

यत् संश्रयाद् द्रुपदगेहमुपागतानाम्,
राज्ञां स्वयम्बरमुखेस्मयदुर्म्मदानाम् ।
तेजो हृतं खलु मया निहतश्च मत्स्यः,
सज्जीकृतेन धनुषाधिगता च कृष्णा ॥१॥

यत् सन्निधावहमुखाण्डवमग्नयेऽदा-
मिन्द्रञ्च सामरगणं तरसा विजित्य ।
लब्धा सभा मयकृताद्भुतशिल्पमाया-
दिग्भ्यो हरन्नृपतयो बलिमध्वरे ते ॥२॥

---

एवमष्टभेदं शृङ्गारमुक्त्वा क्रमप्राप्तं करुणमाह । करुणेति । सचेष्टनाशानिष्टसम्प्रयोगविभावो दैवोपालम्भनिश्वास-तानवमुख-शोषणस्वरभेदाश्रुपात-वैवर्ण्य प्रलय-संस्तम्भ-कम्पभूलुण्ठनगात्र-स्रंसना (स्तम्भा) साक्रन्दनाद्यनुभावो निर्व्वेदग्लानिचिन्तौत्सुक्य-मोहश्रम-त्रास-विषाद-दैन्य-व्याधि-जड़तोन्मादापस्मारालस्यमरणप्रभृतिदुःखसमयदुःखमयव्यभिचारीति । तत्रेष्टनाशविभावे करुणरसे अर्ज्जुनोक्तौ भक्तौ । तत्र प्रथममर्ज्जुनमाह । तत्र द्रौपदीस्वयम्बरे । कृष्णोपकारं स्मरत्यर्ज्जुनः । यत् संश्रयादिति । कृष्णा द्रौपदी ॥ १।१५।

७ (१)

खाण्डवदहने । राजसूये च कृष्णोपकारं स्मरति । यत् सन्नि-

पत्न्यास्तवाधिमखवक्‍लृप्तमहाभिषेक-
श्लाघिष्ठ चारुकबरं कितवैः सभायाम्।
स्पृष्टं विकीर्य्य पदयोः पतिताश्रुमुख्या-
यस्तत् स्त्रियो कृतहतेश विमुक्तकेशाः ॥३॥
योनो जुगोपवनमेत्यदुरन्तकृच्छ्राद्-
दुर्व्वाससोऽरिरचितादयुताग्रभुग् यः।
शाकान्नशिष्टमुपयुज्य यतस्त्रिलोकीम्,
तृप्तममंस्त सलिले विनिमग्न सङ्घः ॥४॥

---

धाविति। उ अहो युधिष्ठिरः अहं अदां दत्तवान्। मयेन कृता (१) अद्भुता शिल्पमाया यस्यां सभायाम् ॥ १।१५।८ (२)

पत्न्या इति। अधिमखम् राजसूयमधिकृत्य कृमो रचितो यो महाभिषेकः तेन आश्लिष्टं श्लाघ्यवत्तम् यत् चारुकवरं केशपाशः। कितवैर्दुःशासनादिभिः विकीर्य्योन्मुच्यस्पृष्टं पतिताश्रुमुखं यस्याः। तथा पतितं पादयोः। सापेक्षत्वेऽपि समासः। तदानीमेव स्मरणात् पुरस्थितस्य कृष्णस्य पदयोः। तत् स्त्रियः तेषां कितवानां स्त्रियः। अकृत कृतवान्। हतैरीशैर्हेतुभूतैर्व्विमुक्तकेशाः ॥ १।१५।१० (३)

दुर्व्वाससः शापे कृष्णोपकारं स्मरति। योनो जुगोपेति। वनवासस्तावत् कृच्छ्रं तत्रापि दुर्वाससा दुरन्तं कृच्छ्रं। सचारिणा दुर्य्योधनेन रचितः। वनवासस्थान् पाण्डवान् युधिष्ठिरद्रौपदीभोजनानन्तरं याचस्वेति प्रार्थितः यावद्द्रौपदी न भुङ्क्ते। तावदक्षयमन्नमितिहि सूर्य्येण वरो दत्तः। यो दुर्व्वासा अयुताग्रभुक्शिष्याणा-

(१) शिल्पशास्त्रप्रणेत्रा मयेन रचिता।

यत्तेजसाऽथ भगवान् युधि शूलपाणि-
र्विस्मापितः सगिरिजोऽस्त्रमदान्निजं मे ।
अन्येऽपि चाहममुनैव कलेवरेण,
प्राप्तो महेन्द्रभवने महदासनार्द्धम् ॥५॥
तत्रैव मे विहरतो भुजदण्डयुग्मम्,
गाण्डीवलक्षणमरातिवधाय देवाः ।
सेन्द्राः श्रिता यदनुभाविनमाजमीढ-
तेनाहमद्य मुषितः पुरुषेण भूम्ना ॥६॥

मयुतस्याग्रे भुङ्क्ते । किं कृत्वा कृष्णो जुगोप । शाकावशिष्टमुप-भुज्य तदानीमेव द्रौपदीस्मरणादागत्य शाकरूपस्यान्नस्य यत्शिष्टं पात्रे लग्नं तत् स्वयमश्नुता यतो भोजनाद् दुर्व्वासाः त्रिलोकीत्मा-मस्रंस्त । न केवलमात्मानं 'सशिष्यं तु सलिले स्नात्वा भोक्तुमागच्छ-तेति युधिष्ठिरवचनाद् यत्र (दा) स्नातुं गतः तत्र कीदृशः विनिमग्नः शिष्यसहितः आत्मा यस्य स तथा ॥ १।१५।११ (४)

दिव्यास्त्रलाभे कृष्णोपकारं स्मरति श्लोकद्वयेन । यत्तेजसेति । अन्येपि लोकपाला निजान्यस्त्राण्यदुः । अहञ्च महेन्द्रस्यासनार्द्धं प्राप्तः ॥ १।१५।१२ (५)

तत्रेति । तत्रैव स्वर्गे । अरातयो निवातकवचनामानो दैत्याः । यदनुभाविनं येन कृष्णेन प्रभाववत्कृतम् । भुजदण्डयुग्मं श्रिताः जग्मुः शरणं जग्मुः । हे आजमीढ ! युधिष्ठिर । तेनेत्यादि सर्व्वं वाक्यशेषः । भूम्ना अपरिच्छिन्नेन वाप्यभिव्यञ्जकं विना न दृश्यत इति मुषितत्वम् । अस्मदादिदेहानां त्वनुमापकत्वम् । न तु कृष्ण-तद्देहवत् प्रत्यक्षत्वापादकत्वम् ॥ १।१५।१३ (६)

यद्बान्धवः कुरुकुलाब्धिमनन्तपार-
मेकोरथेन ततरेह मतीर्थ्य सत्त्वम् ।
प्रत्याहृतं पुरुधनञ्च मया परेषाम्,
तेजस्पदं मणिमयञ्च हृतं शिरोभ्यः ॥७॥

यो भीष्मकर्णगुरुशल्यचमूष्वदभ्र-
राजन्यवर्यरथमण्डलमण्डितासु ।
अग्रे चरो मम विभो रथयूथपाना-
मायुर्मनांसि च दृशा सह ओज आर्च्छत् ॥८॥

यद्दोःषु मां प्रणिहितं गुरुभीष्मकर्ण-
द्रोणि (नप्तृ) त्रिगर्तशलसैन्धवबाह्लीकाद्याः ।
अस्त्राण्यमोघमहिमानि निरूपितानि,
नोपस्पृशुर्नृहरिदासमिवासुराणि ॥९॥

---

गोग्रहणे कृष्णोपकारं स्मरति । यद्बान्धव इति । यद्बान्धवः कृष्णसहायः । अनन्तगाम्भीर्यस्यावधिः पारो विस्तारस्य यस्य तम् । ततरे तीर्णवान् । अनार्थ्यमत्त्वं हिंस्रगजादिकम् । पुरुबहुधनम् । परेराहृतं गोधनं (परेषां) च मणिमयं मुकुटादि धनञ्च हृतम् । तद्धि-तेजःपदं तद्धरणे तेजो हरणात् ॥ १।१५।१४ (७)

कुरुक्षेत्र युद्धे कृष्णोपकारं स्मरति, यो भीष्मेति श्लोकत्रयेण । दृशा दर्शनेन । आर्च्छदाकृष्टवान् । आयुर्मनांसि सह ओजश्च सह । कर्मेन्द्रियाणां बलमोजः । बुद्धीन्द्रियाणां शक्तिः मनांसि त्रीण्यन्तःकरणानि ॥ १।१५।१५ (८)

यदिति यस्य कृष्णस्य । दोःषु भुजेषु । प्रणिहितं मां नो अस्त्रा-

सौत्ये वृतः कुमतिनात्म द ईश्वरो मे,
यत् पादपद्ममभवाय भजन्ति भव्याः।
मां श्रान्तवाह मरयो रथिनो भुविष्ठम्,
नो प्राहरन् यदनुभावनिरस्त चित्ताः ॥१०॥
नर्म्माण्युदाररुचिरस्मित शोभितानि,
हे पार्थ हेऽर्ज्जुन सखे कुरुनन्दनेति।
संजल्पितानि नरदेवहृदिस्पृशानि,
स्मर्त्तुर्लुठन्ति हृदयं मम माधवस्य ॥११॥
शय्यासनाटनविकत्थनभोजनादि-
ष्वैक्याद्वयस्य ऋतवानिति विप्रलब्धः।

---

ण्युपस्पृशुः। निरूपितानि प्रेरितानि। अमोघमहिमा (तं) पूजनं (जितं) येषां तानि तथा। आसुराण्यस्त्राणि नृहरिदासं प्रह्लादं यथा न स्पृशन्ति स्म॥ १।१५।१६ (९)

सौत्य इति। सौत्ये सारथित्वे मे मया कुमतिना वृतः। स ईश्वर आत्मानमीश्वरत्वं वृतो ददाति भजन्ति च भव्याः। अभवाय यस्य पादपद्मं यस्यानुभावेन निरस्तचिन्ता उन्मनीकृता अरयो न प्राहरन्। स सूतः कृतः। आत्मानं निन्दति॥ १।१५।१७ (१०)

कृष्णेन सहवासं स्मरति श्लोकद्वयेन। नर्म्माणीति। नर्म्माणि परिहासवचांसि। हे पार्थ इत्यादि सम्बोधनपूर्व्वकं संजल्पितानि उदारवचांसि मम हृदयं लुठन्ति शोकेन इतस्ततः पातयन्ति॥ १।१५ ।१८ (११)

यस्येति। विकत्थनं कलाकौशलदर्शनम्। ऐक्यादविनाभावात्।

सौहृदं विहरत तनयस्य सख्यम्,
सेहे महान्महितया कुमते रघं मे ॥१२॥

सोऽहं नृपेन्द्ररहितः पुरुषोत्तमेन,
सख्या प्रियेन सुहृदा हृदयेन शून्यः।
अध्वन्युरुक्रमपरिग्रहमङ्गरक्षन्,
गोपैरसद्भिरवलेव विनिर्जितोऽस्मि ॥१३॥

तद्वै धनुस्त इषवः सरथो हयास्ते,
सोऽहं रथीनृपतयो यत आनमन्ति।
सर्वं क्षणेन त्वदभूदसदीशरिक्तम्
भस्मन् हुतं कुहकराद्धमिवोप्तमूष्याम् ॥१४॥

हे वयस्य! ऋतवांस्त्वं सत्ययुक्तस्त्वमिति लक्षणा मूलाऽत्यन्त-तिरस्कृता। विवक्षितवाच्येन ध्वनिना विप्रलम्भ उपहसितः कृष्णः मे अघं अपराधं सेहे। महान् महितया महत्त्वातिशयेन हि महत्त्वम् ॥ १।१५।१८ (१२)

कृष्णवियोगफलं कथयति। सोऽहमिति द्वयेन। सख्यमुपकारेण। प्रियत्वं निरुपधि प्रेमास्पदत्वेन। सुहृत्त्वं प्रत्युपकारानपेक्षम्। उपकर्त्तृत्वेनोरुक्रमपरिग्रहं कृष्णवल्लभा वर्गाः ॥ १।१५।२०(१३)

तदिति। यतो धनुरादेः असद् अप्रयोजकं। ईशेन रिक्तं हीनं यथा ऊष्यामूषरभूम्यामुप्तम्। कुहकेन कपटेन राद्धं प्राप्तम् (पक्वं) तदेव भस्मनि हुतं। एतद्द्वयमत्यन्तमप्रयोजकमिदमित्यर्थः। अर्जुनो युधिष्ठिरम् ॥ १।१५।२१ (१४)

उद्धवः।

यन्मर्त्त्यलीलौपयिकं स्व योग-

मायाबलं दर्शयता गृहीतम्।

विस्मापनं स्वस्य च सौभगर्द्धेः,

परं पदं भूषणभूषणाङ्गम् ॥१५॥

यद्धर्म्मसुनोर्ब्बत राजसूये,

निरीच्य दृक् स्वस्त्ययनं त्रिलोकः।

कार्त्स्न्येन चाद्येह गतं विधातु-

रर्व्वाक्सृतौ कौशलमित्यमन्यत ॥१६॥

यस्यानुरागम्तुतहासरास-

लीलावलोक प्रतिलब्धमानाः।

---

उद्धवः कृष्णस्व(स्य)रूपं स्मरति। यन्मर्त्त्येति। यत्र मर्त्त्यानां या लीला तस्यामौपयिकं योग्यं तच्च स्वयोगमायाबलम्। लोकः पश्यत्विति गृहीतम्। मणिमन्त्रौषधीर्व्विना समाधिनैव याविर्भवति सा योगमाया। न केवलमन्यस्य स्वस्य च। विस्मापनं कथमिद-माविर्भूतमिति। यतः सौभाग्यं सम्पत्तेः परं स्थानम्। भूषणाना-मपि भूषणान्यङ्गानि यस्य स तथा ॥ ३।२।१२ (१५)

यदिति। यद्रूपं राजसूये निरीच्य त्रिलोकोऽमन्यत। अद्य अर्घ्य-दानावसरे। इह कृष्णरूपे यत् कार्त्स्न्य तद्गुणसम्पूर्णत्वम्। तेन गतं ज्ञानं मया विधातुः कौशलमर्व्वाक् सृतौ कर्म्ममार्गे तत्कर्म्म-भोगायतननिर्म्माणे। न ज्ञानमार्गेण। सालोक्यादिभोगायतन-निर्म्माणेनेति ॥ ३।२।१३ (१६)

व्रजस्त्रियो दृग्भिरनुप्रवृत्ता-
धियोऽवतस्थुः किलकृत्यशेषाः ॥१७॥
स्वशान्तरूपेष्वितरैः स्वरूपै-
रभ्यर्द्यमानेष्वनुकम्पितात्मा ।
परावरेशो महदंशयुक्तो-
ह्यजोऽपि जातो भगवान् यथाग्निः ॥१८॥
मां खेदयत्येतदजस्य जन्म-
विडम्बनं यद्वसुदेवगेहे ।

---

यस्येति । यस्य कृष्णस्य । अनुरागप्रु तेन हासादिना प्रतिलब्धो-मानोयाभिस्तास्तथा । प्रतिशब्देन ताभिरपि तथा हास्याद्याचरित-मिति गम्यते न दृग्भिः सर्व्वत्र कृष्णदर्शनैः अनुप्रवृत्ता सर्वं परित्यज्य कृष्णमेवानुगता धीर्यासां तास्तथा । ताः कृति (तौ) कर्त्तव्ये । अशेषाः शेषरहिताः । अवतस्थुः कृतकृत्याबभूवुरित्यर्थः ॥ ३।२। १४ (१७)

स्वेति । यः कृष्णोऽजोऽपि जन्मादिशून्योऽपि । परावरेशोऽपि जन्मना विना कार्य्यं कर्त्तुं समर्थोऽपि जातः महतो महत्तत्त्वस्यांशेन विशुद्धोर्ज्जितसत्वेन मुक्तः । उपाधिना विना जन्मासम्भवात् । यथा अग्निर्महाभूतत्वेन सर्वत्र सन्नपि दारुसम्बन्धात्तत्र जायते । यद्यपि शान्तान्यशान्तानि च तस्य वरूपाणि । तथापि शान्तानामनुकम्पया जातः ॥ ३।२।१५ (१८)

मामिति । एतत्त्रयं विडम्बनं अनुचिताचरणं मां खेदयति । किन्तद्वसुदेवगेहे तज्जन्म यच्च व्रजे वासः । यच्च पुराद्व्रजात्सीत् ।

व्रजे च वासोऽरिभयादिव स्वयम्,
पुराद् व्यवात्सीद्यदनन्तवीर्य्यः ॥१९॥
दुनोति चेतः स्मरतो ममैतत्,
यदाह पादावभिवन्द्य पित्रोः।
ताताऽम्बकंसादुरुशङ्कितानाम्,
प्रसीदतन्नोऽकृतनिष्कृतीनाम् ॥२०॥
को वा ऽमुष्याङ्घ्रिसरोजरेणुम्,
विस्मर्तुमीशीत पुमान् विजिघ्रन्।
यो विस्फुरद् भ्रूविटपेन भूमे-
र्भारं कृतान्तेन तिरश्चकार ॥२१॥
दृष्टा भवद्भिर्ननु राजसूये,
चैद्यस्य कृष्णं द्विषतोऽपि सिद्धिः।

---

मथुरातो द्वारकामगात्। त्रिष्वपरिभयादिवेति लोकोत्प्रेक्षातः। न चानन्तवीर्य्यस्यारिभयम्। नृसिंहवदरिवधः। कार्य्य इति मे मतिरित्यर्थः॥ ३।२।१६ (१९)

दुनोतीति। एतच्च मम चेतो दुनोति। यद्वसुदेवं प्रति तातेत्याह। देवकीं प्रति अम्बेति। यच्च पादवन्दनं यच्च प्रसीदतां युवामस्माकमिति वचनं यतो वयं कंसादत्यन्तभीताः। अकृतनिष्कृताः। अनिष्पादितपुत्त्रकार्य्याः। युवयोर्बन्धमोचाकरणात्॥ ३।२।१७ (२०)

कोवेति। ईशीत शक्नुयात्। विजिघ्रन् गन्धवासितेन्द्रियः सन् विस्फुरन् भ्रूविटपो यस्मिन् कृतान्ते स तथा। भ्रूभङ्गेन प्रेरित इत्यर्थः॥ ३।२।१८ (२१)

यां योगिनः स्वं स्पृहयन्ति सम्यक्,
योगेन कस्तद्विरहं सहेत ॥२२॥
तथैव चान्ये नरलोकवीरा-
य आहवे कृष्णमुखारविन्दम् ।
नेत्रैः पिबन्तोः नयनाभिरामम्,
पार्थास्त्रपूताः पदमापुरस्य ॥२३॥
तत्तस्य कैङ्कर्य्य मलम्भृतान्नो-
विग्लापयत्यङ्ग यदुग्रसेनम् ।
तिष्ठन् निषस्सं परमेष्ठिधिष्णोऽ
न्यवोधयद्देव निधारयेति ॥२४॥
स्वयंत्वसाम्यातिशय स्त्र्यधीशः,
स्वाराज्यलक्ष्म्याप्त समस्तकामः ।

---

दृष्टे ति । भवद्भिर्विदुरादिभिः । आहवे कुरुक्षेत्रे संग्रामे ॥ ३।२।१९ (२२)

तथेति । पार्थोऽर्जुनः । अस्य विष्णोः तथैवेति स्पष्टम् ॥ ३।२।२० (२३)

तदिति । कैङ्कर्य्यं नोऽस्मान् भृत्यान् अलमत्यर्थं विग्लापयति । यत् परमेष्ठिधिष्णोऽ राजासने निषण्णमासीनमुग्रसेनं तिष्ठन्नसौ-नोऽन्यबोधयत् । विज्ञप्तवान् । हे देव ! निधारय अवधारयेति ॥ ३।२।२२ (२४)

यतस्तेन सहातिशयः साम्यं वा कस्यापि नास्तीति स्वयमिति ।

बलिं हरद्भिश्चिरलोकपालैः,
किरीटकोटीड़ित पादपीठः ॥२५॥
अहो बकी यं स्तनकालकूटम्,
जिघांसयाऽपाययदप्यसाध्वी ।
लेभे गतिं धात्र्युचितां ततोऽन्यम्,
कं वा दयालुं शरणं व्रजेम ॥२६॥
मन्ये ऽसुरान् भागवतां स्त्र्यधीशे,
संरम्भमार्गाभिनिविष्टचित्तान् ।
ये संयुगे ऽचक्षत तार्क्ष्य पुत्र-
मंसे सुनाभायुधमापतन्तम् ॥२७॥

सुनीतिः ।

नान्यं ततः पद्मपलाशलोचना-
द्दुःखच्छिदं ते मृगयामि कञ्चन ।

---

त्रयाणां पुरुषाणां अधीशः स्वाराज्य लक्ष्म्या माययाऽनभिभूतत्वेन चिरलोकाश्चिरकालावस्थायिनो ब्रह्मलोकादयः ॥ ३।२।२१ (२५)

अहो इति। बकी पूतना यं कृष्णम्। एवमसाध्वपि धात्र्युचितां गतिं लेभे। धात्री यशोदा। माता हि देवकी। अपकारेऽप्युपकारो दयालुत्वम् ॥ ३।२।२३ (२६)

मन्य इति। असुरान् भागवतान् मन्ये। संरम्भो बुद्ध्या हन्तुमुद्यमः। अचक्षत अपश्यत्। तार्क्ष्यपुत्रं गरुड़म्। कीदृशमंसे स्कन्धे सु वा आयुधश्चक्रायुधो यस्य स तथा। षष्ठीस्थानेयोगेति ज्ञापकादसंज्ञायामप्यलुक। उद्धवः विदुरम् ॥ ३।२।२४ (२७)

दस्यून् पुरा षण्णविजित्य लुम्पतो-
मन्यन्त एके स्वजिता दिशो दश ।
जितात्मनो ज्ञस्य समस्य देहिनाम्,
साधोः स्वमोहप्रभवाः कुतः परे ॥३३॥
शोचे ततो विमुखचेतस इन्द्रियार्थ-
मायासुखाय भरमुद्वहतो विमूढान् ।
प्रायेण देवमुनयः सुविविक्तकामाः,
मौनं चरन्ति विजने न परार्थनिष्ठाः ॥३४॥
नैवोद्विजे पर दुरत्यय वैतरण्या-
स्त्वद्वीर्य्यगायन महामृतमग्नचित्ताः ।

---

अजितात्मतामेवाह । दस्यूनिति । दस्युन् शत्रून् । षट् काम क्रोध लोभ-मोह-दम्भ-ईर्षाख्यान् । लुम्पतः स्वसीमानमुल्लङ्घ्य विषय-भुञ्जानान् । एके त्वादृशाः । देहिनां देहाभिमानिनाम् । स्वमोह-प्रभवाः स्वरूपाज्ञानजाः । परे शत्रवः । ज्ञस्य देहाभिमानरहितस्य । कुतो भवेयुः । जितात्मत्वादिन्द्रियजयः । समत्वादात्मनो जयः । साधुत्वात्तन्निर्वाहः । प्रह्लादः पितरम् ॥ ७।८।१० (३३)

शोच इति । हे देव नृसिंह माऽहं शोचे ततस्त्वत्कथायाः इन्द्रियार्थमाया सुखाय विषयजनित सुखप्रतिरूपाय । भरं गृहधुरम् । तान् मुनय उद्धरिष्यन्तीति चेत् तत्राह । प्रायेणेति । अत्र शोच इति शोकस्य स्थायिनः कथनम् ॥ ७।९।४३ (३४)

नैवेति । एतान् विमुखचेतसः कृपणान् शोच्यान् न विमुमुक्षे न

नैतान् विहाय कृपणान् विमुमुक्ष एको-
नान्यं त्वदस्य शरणं भ्रमतोऽनुपश्ये ॥२५॥
यन्मैथुनादिगृहमेधि सुखं हि तुच्छम्
कण्डूयनेन करयोरिव दुःखदुःखम्।
तृप्यन्ति नेह कृपणा बहुदुःखभाजः,
कण्डूतिवन् मनसिजं विषहेत धीरः ॥२६॥
मौनव्रतश्रुततपोऽध्ययनस्वधर्म-
व्याख्यारहो जपसमाधय आपवर्ग्याः।
प्रायः परं पुरुष ते त्वजितेन्द्रियाणां
वार्त्ता भवन्त्युत नवात्र तु दाम्भिकानाम् ॥२७॥

---

विमोक्तुमिच्छामि। अस्य जगतः विरक्तो भूत्वा पतिष्यत इति चेत्तत्राह॥ ७।८।४४ (२५)

यदिति। यद्यस्मादिह मैथुनादौ गृहमेधिनि गृहसम्बन्धिनि गृहसंसर्गिणि। मैथुनैः संसर्गार्थत्वात् तुच्छे सुखे कृपणा न तृप्यन्ति न विरज्यन्ते। दुःखाद्दुःखं अत्यन्तदुःखरूपमित्यर्थः। अत्र दृष्टान्तमात्र। कण्डूयनेनेति। करयोः कण्डूयनेन यत् सुखं तदापातमात्ररम्यत्वेऽपि परिणामविरसत्वाद् यथा दुःखं तथेत्यर्थः। ननु कुतः पुनरेषां कृपणत्वं तत्राह। कण्डूयनेति। धीरोहि मनसिजं कामं विषहेत। न चैनं विषहन्ते। तस्मात्तथेत्यर्थः॥ ७।८।४५ (२६)

ननु तर्हि विरक्तानामप्येषां साधनानुष्ठानान्मोक्षो भविष्यतीति चेत्तत्राह। मौनेति। हे पुरुषनृसिंह! ते मौनादयोऽपवर्गाः। अपवर्गप्रयोजनभूता अपि परं केवलं दाम्भिकानां वार्त्ता जीवनोपाया

तत्तेऽर्हत्तम नमः स्तुतिकर्म्मपूजा
कर्म्मस्मृतिश्चरणयोः श्रवणं कथायाम् ।
सं सेवया त्वयि विनेति षडङ्गया किं
भक्तिं जनः परमहंसगतौ लभेत ॥३८॥

रुद्रः ।

देवदत्तमिदं लब्ध्वा नृलोकमजितेन्द्रियः ।
यो नाद्रियेत त्वत्पादौ स शोच्यो ह्यात्मवञ्चकः ॥३९॥
देवदेव जगन्नाथ गोविन्द पुरुषोत्तम ।
नारायण हृषीकेश पुण्यश्लोकाच्युताव्यय ! ॥४०॥
यस्त्वां विसृजते मर्त्य आत्मानं प्रियमीश्वरम् ।
विपर्य्ययेन्द्रियार्थार्थं विषमत्त्यमृतं त्यजन् ॥४१॥

---

भवन्ति, न तु अपवर्गाय । व्रतं एकादश्युपवासादि । श्रुतं शास्त्रम् । तपः कृच्छ्रादि । स्वधर्मो नित्यनैमित्तिकानुष्ठानम् । व्याख्यातदर्थविचारः । रहः एकान्तशीलनम् ॥ ७।९।४६ (३७)

मत्कथयाभविष्यतीति चेत्तत्राह । तत्त इति । हे अर्हत्तमनृसिंह ! ते त्वत्सम्बन्धिनम् नमो नमनम् । स्तुतिकर्म्म स्तुतिकरणम् । कर्म्मगृहमार्ज्जनादि । इति एवम् । षडङ्गया सेवया विना प्रह्लादः नृसिंहम् ॥ ७।९।५० (३८)

देवदत्तेति लोके मनुष्यदेहं देवदत्तं लब्ध्वा नात्मयत्नेन ( नाद्रियेत ) अजितेन्द्रियत्वात् अनादरः ॥ १०।६३।४१ (३९)

देवदेवेत्यादि सम्बोधनानि ॥ १०।६४।२७ (४०)

यस्त्वामिति । भगमयुक्तलोकचेष्टित-दर्शनादाक्रोशेन कृपातिशयं

चमसः ।

य एषां पुरुषं साक्षादात्मप्रभवमीश्वरम् ।
न भजन्त्यवजानन्ति स्थानभ्रष्टाः पतन्त्यधः ॥४२॥
दूरे हरिकथाः केचिद्दूरे चाच्युतकीर्त्तनाः ।
स्त्रियः शूद्रादयश्चैव तेऽनुकम्प्या भवादृशाम् ॥४३॥
विप्रो राजन्यवैश्यौ वा हरेः प्राप्ताः पदान्तिकम् ।
श्रौतेन जन्मनाऽथापि मुह्यन्त्याम्नायवादिनः ॥४४॥
सर्वेषु शश्वत्तनुभृत्स्ववस्थितं
यथा खमात्मानमभीष्टमीश्वरम् ।
वेदोपगीतं च न शृण्वतेऽबुधा
मनोरथानां प्रवदन्ति वार्त्तया ॥४५॥

---

ध्वनयन्ति । ये सुखबुद्ध्या गृहीता दुःखरूपा भवन्ति ते विपर्य्यया इन्द्रियार्था विषयाः । हे देवदेव ! यस्त्वदर्थं त्वां विसृज्यते सोऽमृतं परित्यज्य विषमत्ति ॥ रुद्रः श्रीकण्ठाम् ॥ १०।६३।४२ (४१)

य इति । एषां ब्राह्मणादीनां मध्ये पुरुषं विष्णुं । आत्मनः प्रभवं जनकम् । स्थानाद् ब्राह्मणादेः ॥ ११।५।२ (४२)

दूरे हरित्यादिस्रक् । भवादृशां निमिप्रभृतीनाम् ॥ ११।५।४ (४३
श्रौतं जन्म उपनयनम् ॥ ११।५।५ (४४)

मुह्यन्तीत्युक्तं तमेवाह सर्वेष्विति । न शृण्वते च । शृण्वन्त्यपि नेत्यः ।थं अभीष्टमिति । तस्य पुरुषार्थरूपत्वमुक्तम् । सर्वेष्विति। सौलभ्यम् । यथार्थमिति उपाधिदोषैरदूषितत्वम् । ईश्वरमिति

लोके व्यवायामिषमद्यसेवा
नित्यास्तु जन्तोर्नहि तत्र चोदना ।
व्यवस्थितिस्तेषु विवाहयज्ञ
सुराग्रहैरासु निवृत्तिरिष्टा ॥४६॥

निग्रहसामर्थ्य (निग्रहः सामर्थ्यम्)। वेदेति प्रमाणसिद्धत्वम्। तत् किं शुभव्यापारानन्तरवैयग्रात्। एवंविधस्याप्यश्रवणम्। नेत्याह। मनोरथानामिति कर्म्मणि षष्ठी। कामिनां तदपि शोभेत यदि सम्पादतितुं शक्नुयुः। न तु तथेत्याह वार्त्तयेति। तत्किमो-श्वरेनिरूढं दूषणमस्ति नेत्याह अबुधा इति ॥ ११।५।१० (४५)

एवं मोहमाहात्म्यात् स्त्रीसेवादयोऽपि "(१) ऋतौ भार्य्यामुपेयात्" इत्यादौ वेदेनैव विहिता इत्यपि मन्यमानान् बोधयितु माह। लोक इत्यादि। व्यवायो मैथुनम् आमिषं मांसम्। मद्यं प्रसिद्धम्। एषां सेवा नित्यारागतः प्राप्ता हि स्फुटम्। तत्र तासु सेवासु। चोदना वैदिकी प्रवर्त्तना (प्रेरणा) नास्ति। "अप्राप्ते शास्त्रमर्थवदिति" न्यायात्। नन्वेवं "ऋतौ भार्य्यामुपेया"दित्यादेः कोऽर्थ इति चेत्तत्राह। व्यवस्थितिर्नियम इष्टो वेदस्य। तथाहि यदि व्यवायः कार्य्यः (कर्त्तव्यः) तर्हि विवाहेनैव। यद्यामिषं भक्षणं तर्हि यज्ञेनैव। यदिमद्यं सेव्यं तर्हि "सुराग्रहेणैव। न तु निर्व्यवस्थित्या एव तत्राह (नेत्याह) आश्विति। आशु शीघ्रम्। निवृत्तिर्यया व्यवस्थित्या सा तथा। अयमर्थः। वेदो हि व्यवायादीना मनर्थानुबन्धितां प्रावेद्य सर्वथा ततो निवृत्तिमिच्छन् स्वरसवाहिनो मनियतां तत्प्रवृत्तिं विवाहादिच्छलेन निरुणद्धि॥ किञ्च सकामाः

(१) आश्रमोपनिषत्।

धनञ्च धर्मैकफलं यतो मे
ज्ञानं स विज्ञानमनुप्रशान्तिः।
गृहेषु युञ्जन्ति कलेवरस्य
मृत्युं न पश्यन्ति दुरन्तवीर्य्यम् ॥४७॥

यद्घ्राणभक्षो विहितः सुरायाः
स्तथा पशोरालभनं न हिंसा।
एवं व्यवायः प्रजया न रत्यै
इमं विशुद्धं न विदुः स्वधर्मम् ॥४८॥

---

पुरुषाः रागोद्रेकात् काम्यानपि त्यक्त्वा दृष्टोपभोगार्थमेव प्रवर्त्तन्त इत्याह ॥ ११।५।११ (४६)

धनञ्चेति। धर्म्म एकं केवलं फलम् यस्य स तथा। यतो धर्म्मात् ज्ञानम् ... ज्ञानं शास्त्रे विनियोग ... विवि क्षार्थ धारणाशक्तिः। अनुपश्चात् प्रशान्तिः। सकलकर्मक्षयात् कैवल्यावाप्तिः। एवं विधं परम्परया मोक्षफलम् धनं गृहेषु स्वरादिषु युञ्जन्ति व्यर्थयन्ति। ननु दृष्टसुखत्यागेनादृष्ट सुखार्थितेव कुबुद्धि-रिति चेत् तत्राह। कलेवरस्येति। स एष यज्ञादिव्याजेन मांसादिग्रहः सांख्यविद्भिः (सांख्यज्ञैः) प्रबलो धर्म्म इत्याख्यायते॥ ११।५। १२ (४७)

यदिति। शुद्धं मत्वा यत्प्राणेति। प्राणेन नासिकासञ्चारिणा वायुनैव स्वादयन् विहितं न तु पानम्। तथाच (१) आश्वलायन-

---

(१) आश्वलायन कल्पसूत्रस्य तृतीयोऽध्यायो द्रष्टव्यः

इदवस्यान्ते इवयति अथ जिह्वाया अथ वक्षः"। अथ संगतो "वट्शतीनि नियुज्यन्ते

द्विषन्तः परकायेषु स्वात्मानं हरिमीश्वरम्।
मृतके सानुबन्धेऽस्मिन् बद्धस्नेहाः पतन्त्यधः ॥४८॥

---

महर्षिणा स्वसूत्रे तृतीयेऽध्याये "प्रा(प्ता)णभक्ष्योऽत्रे"त्युक्तम्। तथापि गोरग्निषोमीयादेरालम्भनं हिंसा न भवति। किन्तु नालभेत वत्समालभेति वदालभतेः स्पर्शार्थः। न चैवमवदानादिवचनविरोधः। पिष्टपशौ यज्ञे सङ्कल्पनायां सुकरत्वात्। अतएव महाभारते मोक्षधर्मेषु वेदविवादे ऋषिभिरुक्तम्। "अजैर्यज्ञेषु यष्टव्यमिति वैदिकी श्रुतिः। अजसंज्ञानि बीजानि छागं न मन्तुमर्हत॥ नैषधर्मः सतां देवो यत्रवै विद्यते पशुः। अतोऽन्यथा ब्रुवाणस्य पशुसंज्ञ एव राजा तैरेव सप्तः (प्राप्तः)। अत्रापि च "प्रेत्यखादन्ति ते च तान्" इत्यादिना भूयसा तत्र तत्र सा निषिद्धा। तस्मायमर्थः। सकामेषु क्रतुषु सर्वसाद्गुण्य सव्यपेक्षत्वात् यथाश्रुतएवार्थो ग्राह्यः। भगवत्प्रीत्यर्थेषुचादर्शितरीत्या तत्र वैगुण्येऽपि दोषाभावात्। यथोक्तम् "नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते" (१) इति। प्रजया हेतुभूतयारतिस्त्वानुषङ्गिकीतिविशुद्धं हिंसादिकलङ्करहितत्वात्॥ किञ्च "(२) पशुना यजेत" आत्मघातः स्वामिघातश्च स्यात् इत्याद्य॥ ११।५।१३ (४८)

द्विषन्त इति। मृतकं देहः। अनुबन्धः पुत्रादिः। गृहादिपतुर्णामोक्षा। चमसः निमिम्॥ ११।५।१५ (४८)

---

ाद्यूनां मध्यमेऽहनि। आश्रुलि:। धर्म्मेधस्य वचनादूनानि पञ्चभि स्त्रिभिः॥" गौड़पादीय ाष्यम्। सांख्यकारिका १।४।

(१) श्रीमद्भगवद्गीता २।४० श्लोकः।

(२) बृहदारण्यक १।२।७

हित्वात्याया सरचिता: गृहापत्यसुहृच्छ्रियः ।
तमोविशन्त्यनिच्छन्तो वासुदेव पराङ्मुखा: ॥५०॥

नृदेहमाद्यं सुलभं सुदुर्लभं
प्लवं सुकल्पं गुरुकर्णधारम् ।
मयानुकूलेन नभस्वतेरितं
पुमान् भवाब्धिं न तरेत् स आत्महा ॥५१॥

अदितिः ।

यज्ञेश यज्ञपुरुषाच्युत तीर्थपाद
तीर्थश्रवः श्रवणमङ्गलनामधेयः ।

---

हित्वेति ॥ ११।५।१८ (५०) स्पष्टं

नृदेहमित्यादि । अत्र प्राप्य (प्य) अध्याहार: । आद्यं नाना-योनि प्रापक कर्मोपार्ज्जकत्वात् । सुलभं अनादौ संसारे बहुश: प्राप्यमानत्वात् । दुर्ल्लभं अत्यस्थिरत्वात् । तस्येच्छया वा अप्राप्त-त्वात् । प्लवमुडुपम् । सुकल्पं सुदृढम् । अस्य च वृत्तस्यात्र पाठे प्रयोजनं चिन्त्यम् । इदं हि भगवतो वाक्यं तस्य भजनीयत्वेन भक्तत्वाभावात् । भक्तिरसानुभवाद्धि भक्ता: । यथा गोप्यादय: । भक्तिरसश्च विष्णोस्तद्भक्तानां वा चरित श्रवणादिना जातश्चमत्कार इति प्रागुक्तम् । न चात्र भगवानेव भक्तिरसस्यानुभविता तस्मा-च्चिन्त्य: पाठ: ॥ ११।२०।१७ (५१)

यज्ञेशेति—तीर्थं गङ्गा पादेऽस्येति तीर्थपाद: । श्रव: कीर्त्ति: । आपन्नानां शरणागतानां लोकानां यद् वृजिनं दु:खम् । तस्योपशम-

आपन्नलोकवृजिनोपशमोदयाद्य
शं न कृधीश भगवन्नसि दीननाथः ॥५२॥

नारदः ।

स्वपादमूले पतितं तमर्भकं
विलोक्य देव कृपया परिप्लुतः ।
उत्थाप्य तत् शीर्ष्ण्यदधात् कराम्बुजं
कालाहि वित्रस्तधियां कृताभयं ॥५३॥
स तत्करस्पर्शधुताखिलाशुभः
सपद्यभिव्यक्तपरात्मदर्शनः ।

---

आय उदयः अवतारोऽस्येति । शं सुखम् । कृधि कुरुत । पुत्रसहितानां यतस्त्वं दीननाथोऽसि । अत्र क्लिश्यत पुत्रान् दृष्ट्वाऽदितेरुत्पन्नशोकः स्थायी । अदितिः भगवन्तम् ॥ ८।१७।८ (५२)

स्वेति । तं प्रह्लादम् । देवो नृसिंहः । अत्र प्रह्लादविषये कृपात्मकस्य भगवच्चरणानुभवान्नारदस्य भक्तत्वम् । एवं करुणानुविद्ध भक्तिरसं भावयन्तं पुरुषस्याप्तकामता लक्षणं फलं भवति इत्यभिप्रेत्याह ॥ ७।९।५ (५३)

स इति । स प्रह्लादः । तस्य नृसिंहस्य । करस्पर्शेन धूतमपनीतम् अखिलं ससंस्कारं अशुभं माया पटलम् यस्य स तथा । सपदि तस्मिन्नेव क्षणे । अभिव्यक्तमाविर्भूतम् । परस्य अशनायातीतस्य । अपेतब्रह्मक्षत्रादिभावस्य । आत्मनः क्षेत्रज्ञस्य । दर्शनं साक्षात्कारो यस्य स तथा । तस्य नृसिंहस्य पादपद्मम् ।

तत् पादपद्मं हृदि निर्वृतो दधौ,
हृष्यत्तनुः क्लिन्नहृदश्रुलोचनः ॥५४॥

इति श्रीबोपदेवविरचिते मुक्ताफले विष्णुभक्तानां
करुणरसो नाम
त्रयोदशोऽध्यायः ॥ १३ ॥

---

निर्वृतः क्लिन्नसंशयत्वात्। निर्वृतत्वेन हृष्यत्तनुत्वादयः त्रयः सात्त्विकानुभावाः। क्लिन्नमार्द्रं भक्तिरसेन हृदयं यस्य स तथा। अश्रूणि लोचने यस्य तादात्म्यनिर्देशः आनन्दाश्रूणां प्रभूतत्वं क्षणमतिशयं द्योतयितुं व्यधिकरणबहुव्रीहिर्वा ॥ ७।८।६ (५४)

इति हेमाद्रिविरचितायां कैवल्यदीपिकायां करुणरसो
नाम त्रयोदशोऽध्यायः ॥१३॥

---

## चतुर्द्दशोऽध्यायः ।

विष्णुभक्तानां रौद्ररसः ।

रौद्ररसे हिरण्यकशिपुः ।

व्यक्तं त्वं मर्त्तुकामोऽसि योऽतिमात्रं विकत्थसे ।
मुमूर्षूणां हि मन्दात्मन् ननु स्युर्विक्लवा गिरः ॥१॥
यस्त्वया मन्दभाग्योक्तो मदन्यो जगदीश्वरः ।
क्वासौ यदि स सर्व्वत्र कस्मात् स्तम्भे न दृश्यते ॥२॥
सोऽहं विकत्थमानस्य शिरः कायाद्धरामि ते ।
गोपायेत हरिस्त्वाद्य यस्ते शरणमीप्सितम् ॥३॥

---

अथ मात्सर्य्यदारापहारदेशजात्यभिजन-विद्याकर्म्मनिन्दा असत्य-वचनस्वभृत्याधिक्षेपोपहासवाक्पारुष्यद्रोहादिविभावं नयनराग-भ्रूकुटीकरणदन्तौष्ठपीडन गण्डस्फुरण-हस्ताग्रनिष्पेषताडनप्रहरणाह-रणशस्त्रसम्पातरुधिरापकर्षणच्छेदनाद्यनुभावं श्रमसंवेगोत्साह विबोधा-मर्षचापलादिव्यभिचारिणं क्रोधस्थायिनं रौद्ररसमाह । रौद्रेति । तत्रापि हिरण्यकशिपौ शिशुपाले च मात्सर्य्यविभावः क्रोध इति दर्शयन् परितुष्टत्वाद्धिरण्यकशिपुगतं प्रथमं प्रस्तौति । व्यक्तमिति । व्यक्तं निश्चितं अतिमात्रं अतिशयिनम् (तम्) ॥ ७।८।११ (१)
य इति स्पष्टं ॥ ७।८।१२ (२)

एवन्दुरुक्तैर्मुहुरर्द्दयन्रुषा,
सुतं महाभागवतं महासुरः।
खड्गं प्रगृह्योत्पतितो वरासनात्,
स्तम्भं तताडातिबलः स्वमुष्टिना ॥४॥
सविक्रमन् पुत्त्रबधेप्सु रोजसा,
निशम्य निर्ह्रादमपूर्व्वमद्भुतम्।
अन्तः सभायां नददर्श तत्पदम्,
वितत्रसुर्य्येन सुरारियूथपाः ॥५॥
सत्यं विधातुं निजभृत्यभाषितम्,
व्याप्तिञ्च भूतेष्वखिलेषु चात्मनः।
अदृश्यतात्यद्भुतरूपमुद्वहन्,
स्तम्भे सभायां न मृगं न मानुषम् ॥६॥

सोऽहमिति—त्वा त्वाम्। गोपायेत रक्षतु। शरणं रक्षिता॥ ७।८।१३ (३)

एवमिति। दुरुक्तैर्दुर्व्वाक्यैर्मुहुर्व्वारंवारम्। वरासनं सिंहासनम्। अत्र रुषेति स्थायिन उक्तिः। खड्गं प्रगृह्य स्तम्भं तताडेत्यनुभावयोरुत्पतितेति इत्यावेगाख्यस्य सञ्चारिणः। नृसिंहस्यालम्बनम्। एवमन्यत्र॥ ७।८।१४ (४)

स इति। स हिरण्यकशिपुर्व्विक्रमन् विक्रमंकुर्व्वन् ओजसाविशिष्टः निर्ह्रादम् अट्टहासः। अन्तःसभायां सभामध्ये। तस्य निर्ह्रादस्य पदमाश्रयं (ये) येन निर्ह्रादेन॥ ७।८।१५ (५)

सत्यमिति। निजभृत्यस्य प्रह्लादस्य भाषितं हरिः सर्व्वगत

ससत्त्वमेवं परितो विपश्यन्,
स्तम्भस्य मध्यादनुनिर्जिहानम् ।
नायं मृगो नापि नरोऽतिचित्र-
मस्मो किमेतन्नृमृगेन्द्ररूपम् ॥७॥
मीमांस्यमानस्य समुत्थितोऽग्रतो-
नृसिंहरूपं तदलं भयानकम् ।
प्रतप्तचामीकरचण्डलोचनम्,
स्फुरत्सटाकेश विजृम्भिताननम् ॥८॥
करालदंष्ट्रं करवालचञ्चल-
क्षुरान्तजिह्वं भ्रुकुटिमुखोल्बणम् ।
स्तब्धोर्द्ध्वकर्णं गिरिकन्दराद्भुत-
व्यात्तास्यनाशं हनुभेदभीषणम् ॥९॥

इति सत्त्वं कर्त्तृ अदृश्यत हरिरिति शेषः । न मृगं न मृगसम्बन्धि ॥ ७।८।१७ (६)

स इति—स दैत्यः सत्वं निर्ह्लादकर्त्तारम् प्राणिनम् । परितः सर्वासु दिक्षु विपश्यन् निर्जिहानं निर्गमनम् ॥ ७।८।१८ (७)

मीमांसमानस्येति । किमेतदिति मीमांसमानो विचारयन् समुत्थित (समुज्झितः) इत्यन्वयः । अलमत्यर्थं भयानकं भयङ्करम् । प्रतप्तं यच्चामीकरं सुवर्णम् । तद्वर्णे चण्डे अतिकोपाग्निलोचने यस्मिन् रूपे । स्फुरन्त्यः सटाः जटाः केशराणि च कण्ठस्य समन्तात् स्थिताः केशाः । जृम्भितं विकसितं आननञ्च यस्मिन् ॥ ७।८।१९(८)

करालेति । करालवत् खड्गवच्चञ्चलां क्षुरां तद्वत्तीक्ष्णा च जिह्वा

दिविस्पृशत्कायमदीर्घ पीवर-
ग्रीवोरुवक्ष:स्थलमल्पमध्यमम् ।
चन्द्रांशु गौरैश्छुरितं तनूरुहै-
र्विष्वग्भुजानीकशतं नखायुधम् ॥१०॥
दुरासदं सर्व्वनिजेतरायुध-
प्रवेकविद्रावित दैत्यदानवम् ।
प्रायेण मेऽयं हरिणोरुमायिना,
वध:स्मृतोऽनेन समुद्यतेन किम् ॥११॥
एवं ब्रुवन् त्वभ्यपतद्गदायुधो-
नदन्नृसिंहं प्रतिदैत्यकुञ्जर: ॥१२॥
अलक्षितोऽग्नौ पतित:पतङ्गमो-
यथा नृसिंहौजसि सोऽसुरस्तदा ।

यस्मिन् । भ्रूकुटीयुतेन मुखेनोल्वनं गिरिकन्दराद्भुतं प्रसारितं आस्यं नासा च यस्मिन् हनाभेदेन विभक्तत्वेन ॥ ७।८।२०-२१ (९)

दिवीति । अदीर्घा पीवरा च ग्रीवा गल: उरुविशालं वक्ष:स्थलञ्च यस्मिन् । अल्पं कृशं मध्यमं मध्यभाग: । तनूरुहैर्लोमादिभि: । छुरितं सिञ्चितम् । विष्वक् समन्तात् । भुजा एवानीक शतानि सैन्यशतानि यस्य ॥ ७।८।२१-२२ (१०)

दुरासदमिति । निजं वक्राादि । इतरत् खड्गादि । प्रवेकं उत्तमं । अयं नृसिंह: । अनेन समुद्यमेन । मम किं न किमपीत्यर्थ: । ७।८।२२-२३ (११)

एवमिति । अभिमुखमागत: ॥ ७।८।२३ (१२)

न तद् विचित्रं खलु सत्त्वधामनि,
स्वतेजसा योऽनुपुराऽपिवत्तमः ॥१३
ततोऽभिपद्याभ्यहनन्महासुरो-
रुषा नृसिंहं गदयोरुवेगया ।
तं विक्रमन्तं सगदं गदाधरो-
महोरगं तार्क्ष्यसुतो यथाग्रभीत् ॥१४॥
स तस्य हस्तोत्कलितस्तदा सुरो-
विक्रीड़तो यद्वदहिर्गरुत्मतः ।

अलक्षित इति—स च नृसिंहस्य ओजसि तेजोराशौ पतितः सन्नलक्षितः । अग्नाविव पतङ्गः । तत्तथाविधं तेजो संभवम् । सत्वधामनि विष्णौ । यतोऽसौ पुरा सृष्टयादौ तमः । प्रलयान्धकारम् । (१) "आसीदिदं तमोभूतं अप्रज्ञातमलक्षणम् । अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्व्वतः" इति वचनात्तदा तमः सद्भावः ॥ ७।८।२४ (१३)

तत इति अभिपद्य अभ्यपतत् । किञ्चिदभिमुखमागत्य पुनराजगाम । दयाविशिष्टः । तं दैत्यं विक्रमं कुर्व्वाणम् । गदाधरो नृसिंहः । तार्क्ष्यसुतो गरुड़ोऽग्रभीत् ॥ (१) "ग्रहेर्भश्छन्दसी"ति भकारः । अप्रयासेन ग्रहणम् । दृष्टान्तेन व्यंजितम् ॥ ७।८।२५ (१४)

स इति—उत्कलित उन्मुक्तः । तदुत्कलनमसाधुममन्यन्त । हृतौकसो हृतस्थानाः । घनामेघाः । छदा अपवारणानि येषां ते

(१) मनुः १।५ श्लोकः ।

असाध्वमन्यन्त हृतौकसोऽमरा-
घनच्छदा भारत सर्व्व धिष्ण्यपाः ॥१५॥
तं मन्यमानो निजवीर्य्यशङ्कितम्,
यद्धस्तमुक्तो नृहरिं महासुरः।
पुनस्तमासज्जत खड्गचर्म्मणी,
प्रगृह्य वेगेन गतश्रमो मृधे ॥१६॥
तं श्येन वेगं शतचन्द्रवर्त्मभि-
श्चरन्तमच्छिद्रमुपर्य्यधो हरिः।
कृत्वाट्टहासं खरमुत्स्वनोल्वणम्,
निमीलिताक्षं जगृहे महाजवः ॥१७॥
विष्वक् स्फुरन्तं ग्रहणातुरं हरि-
र्व्यालो यथाखुं कुलिशाक्षतत्वचम्।
द्वार्य्युरुमापात्य ददार लीलया,
नखैर्यथाहिं गरुड़ो महाविषम् ॥१८॥

---

तथा। माऽस्मानद्राक्षीदिति भयम्। धिष्ण्यपाः लोकपालाः। हे भारत! परीक्षित्॥ ७।८।२६ (१५)

तमिति। स्पष्टं॥ ७।८।२७ (१६)

तमिति—तं नृसिंहम्। यत् यस्मात्त दैत्यं श्येनस्येव वेगो यस्य। शतचन्द्रं फलकं। अच्छिद्रं अलक्ष्यमाणावकाशं यथास्यात्तथोपर्य्यधश्च सञ्चरन्तम्। उच्चहासेन स्वशब्देन उल्वणम्॥ ७।८। २८ (१७)

संरम्भदुष्प्रेक्ष्य करालोचनो-
व्यात्ताननान्तं विलिहन् स्वजिह्वया ।
असृग् लवाक्ताकरुणकेशराननो-
यथान्त्रमाली द्विपहत्यया हरिः ॥१९॥
नखाङ्कुरोत्पाटितहृत्सरोरुहम्,
विसृज्य तस्यानुचरानुदायुधान् ।
अहन् समन्तान्नखशस्त्रपार्ष्णिभि-
र्दोर्दण्डयूथोऽनुपथान् सहस्रशः ॥२०॥
सटावधूता जलदाः परापतन्,
ग्रहाश्च तद्दृष्टि विमुष्टरोचिषः ।

---

विष्वगिति । ग्रहणेनातुरं व्यग्रम् व्यालो यथेति ग्रहणे दृष्टान्तः ॥ ७।८।२८ (१८)

संरम्भेति । संरम्भेन संरम्भेण दुःप्रेक्ष्ये करालेलोचने यस्य स तथा । व्यात्तस्य प्रसारितस्याननस्यान्तं सृक्किरूपम् । असृजो रुधिरस्य लवैर्बिन्दुभिः अक्तानि विलिप्तानि । अतएवारुणानि केशराण्याननञ्च यस्य । यथान्त्रहरिः सिंहो द्विपस्य गजस्य हत्यया हननेन ७।८।३० (१९)

नखाङ्कुरेति । नखाङ्कुरोत्पाटितं हृत्सरोरुहं यस्य स तं । विसृज्याहनत् । हतवान् । पार्ष्णिर्गुल्फाधोभागः । दोर्दण्डानां यूथं सङ्घो यस्मिन् । अनुपथान् अनुचरागलस्यानुगामिनः ॥ ७।८। ३१ (२०)

अम्भोधयः श्वासहता विचुक्षुभु-
र्निर्ह्रादभीता दिग्गिभा विचुक्रुशुः ॥२१॥
द्यौस्तत्सटोत्क्षिप्त विमानसङ्कुला,
प्रोत्सर्पत क्ष्मा च पदाभिपीड़िता।
शैलाः समुत्पेतुरमुष्य रंहसा,
तलोज्ज्वला स्वं ककुभो न रेजिरे ॥२२॥
ततः सभायामुपविष्टमुत्तमे,
नृपासने संभृत तेजसं विभुम्।
अलक्षित द्वैरथमत्यमर्षणम्,
प्रचण्डवक्त्रं न बभाज कश्चन ॥२३॥
निशम्य लोकत्रयमस्तकज्वरम्,
तमादिदैत्यं हरिणाहतं मृधे।
प्रहर्षवेगोत्कलितानना मुहुः,
प्रसूनवर्षैर्ववृषुः सुरस्त्रियः ॥२४॥

---

सटेति। सटाभिःस्कन्धकेशैः कीर्णैरवधूताः पराहताः परापतन् दूरे पतिताः। ग्रहाः सूर्यादयः॥ ७।८।२३ (२१)

द्यौरिति। द्यौः स्वर्गः। तत्सटाभिः। उत्क्षिप्तैरूर्द्धं गमितैः विमानैः सङ्कुला सम्बाधा प्रोत्सर्पत प्रकम्पेणोद्गता। क्ष्मा पृथिवी। अमुष्य नृसिंहस्य। रंहसा वेगेन॥ ७।८।३३ (२२)

ततो बभाजेत्यन्तम्। अलक्षितं द्वाभ्यां रथाभ्यां निर्वृत्तं यु(यु)द्धम्। अदृष्टप्रतिभटत्वात्॥ ७।८।३४ (२३)

निशम्येति। उत्कलितं उत्फुल्लम् ७।८।३५ (२४)

संरम्भदुष्प्रेक्ष्य करालोचनो-
व्यात्ताननान्तं विलिहन् स्वजिह्वया ।
असृग् लवाक्तारुणकेशराननो-
यथान्त्रमाली द्विपहत्यया हरिः ॥१९॥
नखाङ्कुरोत्पाटितहृत्सरोरुहम्,
विसृज्य तस्यानुचरानुदायुधान् ।
अहन् समन्तान्नखशस्त्रपार्ष्णिभि-
र्दोर्दण्डयूथोऽनुपथान् सहस्रशः ॥२०॥
सटावधूता जलदाः परापतन्,
ग्रहाश्च तद्दृष्टि विमृष्टरोचिषः ।

---

विष्वगिति । ग्रहणेनातुरं व्यग्रम् व्यालो यथेति ग्रहणे दृष्टान्तः ॥ ७।८।२९ (१८)

संरम्भेति । संरम्भेन संग्रामेण दुःप्रेक्ष्य करालं लोचनं यस्य स तथा । व्याक्तस्य प्रसारितस्याननस्यान्तं सृक्किरूपम । असृजो रुधिरस्य लवैर्विन्दुभिः अक्तानि विलिप्तानि । अतएवारुणानि केशराण्याननञ्च यस्य । यथाहरिः सिंहो द्विपस्य गजस्य हत्यया हननेन ७।८।३० (१९)

नखाङ्कुरेति । नखाङ्कुरोत्पाटितं हृत्सरोरुहं यस्य स तं । विसृज्याहनत् । हतवान् । पार्ष्णिर्गुल्फाधोभागः । दोर्दण्डानां यूथं सङ्घो यस्मिन् । अनुपथान् अनुचरागणस्यानुगामिनः ॥ ७।८। ३१ (२०)

अम्भोधयः श्वासहता विचुक्षुभु-
र्निर्ह्रादभीता दिगिभा विचुक्रुशुः ॥२१॥
द्यौस्तत्सटोत्क्षिप्त विमानसङ्कुला,
प्रोत्सर्पत क्ष्मा च पदाभिपीड़िताः।
शैलाः समुत्पेतुरमुष्यरंहसा,
तत्तेजसा खं ककुभो न रेजिरे ॥२२॥
ततः सभायामुपविष्टमुत्तमे,
नृपासने संभृत तेजसं विभुम्।
अलक्षित द्वैरथमत्यमर्षणम्,
प्रचण्डवक्त्रं न बभाज कश्चन ॥२३॥
निशम्य लोकत्रयमस्तकज्वरम्,
तमादिदैत्यं हरिणाहतं मृधे।
प्रहर्षवेगोत्कलितानना मुहुः,
प्रसूनवर्षैर्ववृषुः सुरस्त्रियः ॥२४॥

सटेति। सटाभिःस्कन्धस्थैः केशैरवधूताः पराहताः परापतन् दूरे पतिताः। ग्रहाः सूर्यादयः॥ ७।८।३३ (२१)

द्यौरिति। द्यौः स्वर्गः। तत्सटाभिः। उत्क्षिप्तैरूर्द्धं गमितैः विमानैः सङ्कुला सव्यथा प्रोत्सर्पत प्रकर्षेणोद्गता। क्ष्मा पृथिवी। अमुष्य नृसिंहस्य। रंहसा वेगेन॥ ७।८।३३ (२२)

ततो वधानन्तरम्। अलक्षितं द्वाभ्यां रथाभ्यां निर्वृत्तं यु(यु)द्धम्। अदृष्टप्रतिभटमित्यर्थः॥ ७।८।३४ (२३)

निशम्येति। उत्कलितं उत्फुल्लम् ७।८।३५ (२४)

तदा विमानावलिभिर्नभस्तलम्,
दिदृक्षतां सङ्कुलमासनाकिनाम् ।
सुरानका दुन्दुभयोऽथजघ्निरे,
गन्धर्वमुख्या ननृतुर्जगुः स्त्रियः ॥२५॥

शिशुपालः ।

इत्थं सभाजितं वीक्ष्य सर्वे प्राञ्जलयो जनाः ।
नमो जयेति नेमुस्तं निपेतुः पुष्पवृष्टयः ॥२६॥

इत्थं निशम्य दमघोषसुतः स्वपीठा-
दुत्थाय कृष्णगुणवर्णनजातमन्युः ।
उत्क्षिप्य बाहुमिदमाह सदस्यमर्षी,
संश्रावयन् भगवते परुषाण्यभीतः ॥२७॥
ईशो दुरत्ययः काल इति सत्यवती श्रुतिः ।
वृद्धानामपि यद्बुद्धि र्बालवाक्यै र्विभिद्यते ॥२८॥

---

नाकिनो देवाः । हिरण्यकशिपुः प्रह्लादम् ॥ ७।८।३६ (२५)

इत्थमिति । इत्थं राजसूयाग्रपूजया सभाजितं सत्कृतम् नमो जयेति वदन्तः । तं कृष्णम् ॥ १०।७४।२८ (२६)

इत्थमिति । इत्थं "अर्हति ह्यच्युतः श्रैष्ठ्य"मित्यादि सहदेव-वाक्यम् । निशम्यश्रुत्वा । दमघोषसुतः शिशुपालः । स्वपीठात् स्वासनात् भगवते भगवदर्थं तमुद्दिश्येत्यर्थः । अत्रामर्षीति स्थायिनः क्रोधस्योक्तिः । गुणवर्णनजातमन्युरिति तत्सरस्य-विभावस्य । उत्क्षिप्यबाहुमित्यनुभावस्य सञ्चारिणस्तूह्याः ॥ १०।७४।३० (२७)

ईश इति । श्रुतिः प्रसिद्धिः । वृद्धानां भीष्मादीनां । बालः

यूयं पात्रविदां श्रेष्ठा मा मनुध्वं बालभाषितम् ।
सदसस्पतयः सर्वे कृष्णो यत् सम्मतोऽर्हणे ॥२९॥
तपो विद्याव्रतधरान् ज्ञानविध्वस्तकल्मषान् ।
परमर्षीन् ब्रह्मनिष्ठान् लोकपालैश्च पूजितान् ॥३०॥
सदस्पतीनतिक्रम्य गोपालः कुलपांसनः ।
यथा काकः पुरोडाशं सपर्यां कथमर्हति ? ॥३१॥
वर्णाश्रमकुलापेतः सर्वधर्मबहिष्कृतः ।
स्वैरवर्ती गुणैर्हीनः सपर्यां कथमर्हति ॥३२॥

---

सहदेवः ॥ १०।७४।३१ (२८)

यूयमिति । कृष्णोऽर्हणे सम्मत इति यद् बालभाषितं । मामनुध्वं नमन्यध्वम् सदसस्पतयः सभापतयः ॥ १०।७४।३२ (२९)

तप इति । कृष्णादीनतिक्रम्य १०।७४।३३ (३०)

सदस्पतीति । गोपालो वल्लभः । सपर्य्यां पूजां कथमर्हति न कथमपीत्यर्थः । वस्तुतः गाव इन्द्रियाणि तासां पालोऽधिष्ठाता । कुलं वंशम् पांसयति मलिनं करोति इति कुलपांसनः । (१) विस्मतो-र्लुगिति ॥ मतुपो लुक्, टेरित्यकारलोपः । तत्त्वतस्तु कुलपान् (कुत्सितं लपन्तीति कुलपान्) कुत्सितवाचः । अंसयति विभाजयति । पृथक्करोति निराकरोतीति कुलपांसनः । काको वायसः । अथवा अकं पापं दुःखम् च तत्र अको वक्रगामी तन्नाशक इत्यर्थः । (२) "अक वक्रगताविति" भुवा (भौवा)दौ पठ्यते ॥ १०।७४।३४ (३१)

वर्णेति । सर्व्वधर्म्मेभ्यो वहिस्कृतम् करणं यस्य यत् सर्वधर्मेभ्यो

(१) पाणिनिः ५।२।६५ सूः ।

(२) पाणिनीय धातु पाठो द्रष्टव्यः ।

ययातिनैषां हि कुलं शप्तं सद्भिर्बहिष्कृतम् ।
वृथा पानरतं शश्वत् सपर्य्यां कथमर्हति ॥३३॥
ब्रह्मर्षि सेवितान् देशान् हित्वैतेऽब्रह्मवर्च्चसम् ।
समुद्रं दुर्गमाश्रित्य बाधन्ते दस्यवः प्रजाः ॥३४॥
एवमादीन्यभद्राणि बभाषे नष्टमङ्गलः ।
नोवाच किञ्चिद्भगवान् यथा सिंहः शिवारुतम् ॥३५॥
ततः पाण्डुसुताः क्रुद्धा मत्स्य कैकेयसृञ्जयाः ।
उदायुधाः समुत्तस्थुः शिशुपालजिघांसवः ॥३६॥
ततश्चैद्यस्त्वसम्भ्रान्तो जगृहे खड्गचर्म्मणी ।
भर्त्सयन् कृष्णपक्षीयान् राज्ञः सदसि भारत ॥३७॥
तावदुत्थाय भगवान् स्वान् निवार्य्य स्वयं रुषा ।
शिरः क्षुरान्तचक्रेण जहार पततो रिपोः ॥३८॥

---

न लभ्यते तत्फलमयं लम्भयतीत्यर्थः ॥ स्वैरवर्त्ती ईश्वरत्वात् । गुणैर्हीनश्चिन्मात्रत्वात् । अर्थान्तरन्तु वक्रत्वं (वक्तव्यम्) ॥ १०।७४।३५(३२)

ययातीति स्पष्टं ॥ १०।७४।३६ (३३)

ब्रह्मर्षीति स्पष्टम् ॥ १०।७४।३७ (३४)

एवमिति स्पष्टं । मङ्गलं तच्छरीरारम्भकं पुण्यं यस्य स तथा । शिवारुतं श्रुत्वेति शेषः ॥ १०।७४।३८ (३५)

तत इति । उदायुधाः उद्यतास्त्राः ॥ १०।७४।४१ (३६)

तत इति । हे भारत ! परीक्षित् ॥ १०।७४।४२ (३७)

तावदिति । स्वान् भीमादीन् । क्षुरवत् अन्तो यस्य । (आ)पततः आगच्छतः ॥ १०।७४।४३ (३८)

चैद्यदेहोत्थितं ज्योतिर्वासुदेवमुपाविशत् ।
पश्यतां सर्वभूतानां उल्केव भुवि खाच्च्युता ॥३८॥

इति श्रीवोपदेवकृते मुक्ताफले विष्णुभक्तानां
रौद्ररसो नाम चतुर्दशोऽध्यायः ॥

---

एवं रौद्ररसेन भजन्तो भगवत्सायुज्यफलं भवतीत्याहुः चैद्येति । खात् आकाशात् । मूलं: श्रीभागवतम् ॥ १०।७४।४५ (३८)

इति हेमाद्रिविरचितायां कैवल्यदीपिकायाम् विष्णुभक्तानां
रौद्ररसो नाम चतुर्दशोऽध्यायः ॥१४॥

पञ्चदशोऽध्यायः ।

---

विष्णुभक्तानां भयानकरसः ।

भयानकरसो यथा ।

धनुषो भज्यमानस्य शब्दः खं रोदसी दिशः ।
पूरयामास यं श्रुत्वा कंसस्त्रासमुपागमत् ॥१॥
दीर्घप्रजागरो भीतो दुर्निमित्तानि दुर्मतिः ।
बहून्यचष्टोभयथा मृत्योर्दौत्यकराणि च ॥२॥
हतं कुवलयापीड़ं दृष्ट्वा तावपि दुर्जयौ ।
कंसो मनस्व्यपि तदा भृशमुद्विविजे नृप ! ॥३॥

---

अथ पिशाचादि विकृतरूपश्रवण तद्दर्शन-जन्तुवधादि-दर्शनश्रवण-शून्यगृहारण्यगमनादि विभावम्। कान्त्यचलदृष्टि-निरीक्षणहृदय-पादस्पन्दन-शुष्कोष्ठकण्ठत्वमुखवैवर्ण्य-स्वेदाद्यनुभावं, शङ्कापस्मार-मरणत्रास चापल्यदैन्यमोहादि व्यभिचारिणं लोपि च प्रकृतिषु स्वाभाविकमुक्तमेपु भयानकम्। भयानकं रसमाह भयानकेति। धनुष इत्यादौ भज्यमानस्य धनुषः रोदसीति भू-द्यावौ यं शब्दम्॥ १०।४२।१८ (१)

दीर्घेति। दीर्घः प्रजागरो निद्राक्षयो यस्य स तथा। अचष्ट अपश्यत्। उभयथा स्वप्ने जागरे च। दौत्यं दूतकर्म॥ १०।४२।२७(२)

हतमिति। तौ रामकृष्णौ उद्विविजे उद्विग्नोऽभूत्। हे नृप ! परीक्षित्। शुकः राजानम्॥ १०।४३।१८ (३)

तं खड्गपाणिं विचरन्तमाशु,
श्येनं यथा दक्षिणसव्यमम्बरे।
समग्रहीद् दुर्व्विषहोग्रतेजा-
यथोरगं तार्क्ष्यसुतः प्रसह्य ॥४॥
प्रगृह्य केशेषु चलत्किरीटम्,
निपात्य रङ्गोपरि तुङ्गमञ्चात्।
तस्योपरिष्टात् स्वयमब्जनाभः,
पपात विश्वाश्रय आत्मतन्त्रः ॥५॥
स नित्यदोद्विग्न-धिया तमीश्वरम्
पिबन्नदन्वा विचरन् स्वपन् श्वसन्।

---

तमिति। तं कंसं दक्षिणसव्यं दक्षिणतः सव्यतश्च विचरन्तम्। दुर्व्विषहं सोढुमशक्यम्। अतएव उग्रं तेजो यस्य स तथा। तार्क्ष्यसुतोऽपि दुर्व्विषहान् सर्पान् हन्तीति दुर्व्विषहहाः॥ १०।४४।३६ (४)

प्रगृह्येति। चलत्किरीटं कंसं, तुङ्गात् उच्चान्मञ्चात् रङ्गोपरि(स्वयं) निपात्य तस्योपरि स्वयं पपात। अब्जनाभः इन्द्रनीलोज्ज्वलत्वात्। विश्वाश्रय इत्यनेन गुरुत्वमकर्षादुपरिपातमात्रेण कंसस्य गतासुत्वमुक्तम्। ननु चक्रादिभिरकस्मात् किमित्येवमेव हत इत्याह आत्मेति। अत्र च कंसस्य नारदादिभ्यो भगवत्कर्त्तृकवधश्रवणात् उत्पन्नाभीः स्थायिभावो भीत इत्यलोकाः॥ १०।४४।३७ (५)

तस्य च धनुषः भङ्गश्रवणादुर्निमित्तं गजवधदर्शनादय उद्दीपनविभावाः। दोषदर्शनादयोऽनुभावाः। त्रासोद्वेगौ च सञ्चारिणौ। अथ भयानकरसेन भजतः फलमाह। स इति। सः कंसः।

ददर्श चक्रायुधमग्रतो यत-
स्तदेवरूपं दुरवापमाप ॥६॥

दुर्वासाः ।

संसदह्यमानोऽजितशस्त्रवह्निना,
तत्पादमूले पतितः सवेपथुः ।
आहाच्युतानन्त सदीप्सित प्रभो !
कृतागसं माऽव हि विश्वभावन ॥७॥

अजानता ते परमानुभावम्,
कृतं मयाघं भवतः प्रियाणाम् ।
विधेहि तस्यापचितिं विधात-
र्मुच्येत यन्नाम्न्युदिते नारकोऽपि ॥८॥

---

नित्यदा सर्वकालं उद्विग्नधिया विशिष्टः । यदेव पानाद्यवस्थासु ददर्श । तदेवाप फलम्, फलकीर्त्तनस्य च प्रकरणपर्य्यन्ते समुचितत्वेऽपि भीरुभक्तेषु कंसस्यैव मुख्यत्वादत्रैव तत् कृतम् ॥ १०।४४।३९ (६)

स इति । स दुर्वासाः । अजितस्य शस्त्रं चक्रम् । विष्णुनाह्यम्बरीषरक्षार्थं स्व चक्रं प्रहितम् । तस्याजितस्य पादमूले स वेपथुः स कम्पः । कृतागसं कृतापराधम् । मा मां अव रक्ष । हे विश्वभावन । विश्वं भावयसि सत्तां (तां) लम्भयसि । तथा (यद्वा) भावयसि रक्षयसीति ॥ ९।४।६१ (७)

अजानतेति । अघं दुःखं । कृत्योत्पादनरूपां । प्रियाणां ह्यम्बरीषादीनाम् । बहुवचनमत्राम्बरीषस्य पुत्रकलत्रादिविवक्षया । तेऽपि ह्यम्बरीषसम्बन्धाद् भगवत्प्रियाः । अपचितिं निस्तारम् । यस्य

पाहि पाहि महायोगिन् देव देव जगत्पते ! ।
नान्यं त्वदभयं पश्ये यत्र मृत्यु: परस्परम् ॥९॥

कुन्ती ।

यथा हृषीकेश खलेन देवकी,
कंसेन रुद्धाति चिरं शुचार्पिता ।
विमोचिताऽहञ्च सहात्मजा विभो !
त्वयैव नाथेन मुहुर्विपद्गणात् ॥१०॥
अप्यद्य नस्त्वं स्वकृते हित प्रभो !
जिहाससि स्वित् सुहृदोऽनुजीविन: ।
येषां न चान्यद् भवत: पदाम्बुजात्,
परायणं राजसु योजितांऽसाम् ॥११॥

तव नाम्न उदिते किं पुनस्त्वयि(पि) दृष्ट इत्यर्थ:। अत्र दुर्वाससः स्ववधाद्भयं स्थायी भाव:। दह्यमानत्वमुद्दीपनविभाव:। पादपतनं वेपथुरच्युतेत्याक्रन्दनं चानुभाव: ॥ ९।४।६२ (८)

पाहीति। अथ स्वजनवधशङ्का-विभावं भयमाह। उत्तरेत्यादि। हे देव कृष्ण ! यत्र यस्मिन्। अत्र पाहि पाहीत्यनेन स्वपुत्रवधदर्शन-मुत्तरयाव्यक्तोक्तम् ॥ १।८।९ (९)

यथेति। यथा-यथावच्चकारेणैवोपमार्थस्य लब्धत्वात्। मुहु-र्विपद् गणादित्यतिरेक: ॥ १।८।२३ (१०)

अपीति। कृष्णप्रयाणं निषेधयति। अपि अहो जिहा-ससि त्यक्तुमिच्छसि। किञ्च वयं हि सुहृदोऽनुजीविनश्च। त्वं स्वकृते हित: स्वस्मिन् आत्मीये कृतमोहितमभिलषितं येन स तथा।

प्रह्लादः ।

त्रस्तोऽस्म्यहं कृपण वत्सल दुःसहोग्र-
संसार चक्रकदनाद् ग्रसतां प्रणीतः ।
बद्धः स्वकर्म्मभिरुशत्तम तेऽङ्घ्रि मूलम्,
प्रीतोऽपवर्ग शरणं ह्वयसे कदानु ॥१२॥

यस्मात् प्रिया प्रियवियोगसयोग जन्म-
शोकाग्निना सकल योनिषु दह्यमानः ।
दुःखौषधं तदपि दुःखमतद्धियाहम्,
भुमन् भ्रमामि वद मे तवदास्य योगम् ॥१३॥

सोऽहं परस्य सुहृदः परदेवताया-
लीलाकथा स्तव नृसिंहविरिञ्चगीताः ।

---

स्वजनस्य कामान् पूरयसीत्यर्थः । राजसु क्षत्रियेषु सुयोजितं सुष्ठु योगं नीतम् । अंहः पापं कर्म्म यैस्ते तथा । कुन्ती श्रीकृष्णम् ॥ १।८।३७ (११)

त्रस्तोऽस्मीत्यादि । हे उशत्तमनृसिंह ! कदनं दुःखम् । असतां मध्ये प्रणीतः प्रक्षिप्तोऽहं स्वकर्म्मभिः । ते अङ्घ्रिमूलम् प्रति कदा आह्वयसे आह्वयसि ॥ किम्भूतं अपवर्गं मुक्तिरूपम् । शरणं शरणम् । हे भुमन्, अस्मिन् प्रपञ्चोपाधौ तयाऽहं भ्रमामि । अतस्त्वदास्य-योगं वद ॥ ७।८।१६ (१२)

यस्मादिति । प्रिय विप्रयोगजन्मना अप्रिय संयोगजन्मनाच शोकाग्निना दह्यमानः यद् दुःखौषधम् । तदपि दुःखं तत् सम्पादनस्य दुःखात्मकत्वात् ॥ ७।८।१७ (१३)

अञ्जःस्तितर्म्यनु गृणन्गुणविप्रयुक्तो-
दुर्गाणि ते पदयुगालय हंस सङ्गः ॥१४॥
बालस्य नेह शरणं पितरौ नृसिंह-
नार्त्तस्य चागद मुदन्वति मज्जतोनौः।
तप्तस्य तत्प्रति विधिर्य इहाञ्जसेष्ट-
स्तावद्विभो तनुभृतां त्वदुपेक्षितानाम् ॥१५॥
कुत्राशिषः श्रुतिसुखामृगतृष्णि रूपाः
क्वेदं कलेवर मशेष रुजां विरोहः।

---

ननु दास्ययोगस्य किं फलं तत्राह। सोहमिति। हे नृसिंह! गुणैर्ज्ञानादिभिर्विप्रयुक्तो हीनस्तवकथाः। पुनः पुनर्गृणन्नञ्जसा दुर्गाणि तितर्म्मि तरामि प्रियत्नात् सुखसेव्यत्वम्। सुष्ठुत्वा दुपकर्त्तृकत्वं देवतात्वादुपकारसमर्थत्वम्। विरिञ्चिगीता इति सदनुष्ठितोऽयं मार्ग इत्युक्तम्। ते पदयुगलमालयः आश्रयो येषां हंसानां योगिनां तेषां सङ्गो यस्य स तथा। तत्सङ्गाद्धि कथा निर्वाहः॥ ७।८।१८ (१४)

ननु दुःखस्य प्रतीकारः क्रियताम् किन्दास्येनेयत आह। बालस्येति। हे नृसिंह! इहलोके यः पदार्थ इहदुःखे शरणम् रक्षिता इष्टः सम्मतः सत्व (तु)दुपेक्षितानां अञ्जः(ञ्जः)निश्चितं न भवत्येव। तावदवधारणे तस्यत्र प्रपञ्चः। बालस्येत्यादि। आर्त्तौ रोगो। अगदमौषधम्। तत्प्रतिविधि स्तत्प्रतीकारः॥ ७।८।१९ (१५)

ननु विरक्तं दुःखं न बाधते ऽतो विरक्तेन भवितव्यमिति चेत्तत्राह। कुत्रेति। आशिषो विषया मृगतृष्णिकारूपाः। मरीचिकावभासाः। यथाहि—मृगतृष्णारविरश्मिरूपापि जलरूपाव-

निर्विद्यते न तु जनो यदपीति विद्वान्,
कामानलं मधुलवैः शमयन् दुरापैः ॥१६॥
क्वाहं रजःप्रभव ईश तमोऽधिकेऽस्मिन्,
जातः सुरेतर कुले क्व तवानुकम्पा ।
न ब्रह्मणो न तु भवस्य न वै रमाया-
यन्मेऽर्पितः शिरसि पद्मकरः प्रसादः ॥१७॥
नैषा परावरमतिर्भवतो ननु स्याज्-
जन्तोर्यथात्म सुहृदो जगतस्तथापि ।
संसेवया सुरतरोरिव ते प्रसादः,
सेवानुरूप मुदयो न परावरत्वम् ॥१८॥

---

भासते। तथा विषयाद्दुःखरूपा अपि सुखरूपा इव दृश्यन्त इति भावः। विरोहः प्ररोहः स्थानम्। यदपि यद्यपि इति विद्वान् एवश्चेति। तथापि न निर्विद्यते न विरज्यते। कामानलमिच्छाग्निं मधुतुल्यत्वाद् मधुसुखम् तस्य लवैर्लेशैः॥ ७।९।२५ (१६)

क्वयत्न वत्सल इत्युक्तम् तदेव दर्शयति। क्वाहमिति। रजः प्रभवो रजोऽधिकारः। सुरेतरा दैत्याः। क्वासाऽनुकम्पा यन्मे शिरसि पद्मकरूप प्रसादोऽर्पितः। ब्रह्मादिभि स्त्रिभिः षष्ठयन्तैः। पुत्रमित्रकलत्रेष्वपि प्रेमपात्रेष्वपि नेवंविधं प्रसादः कृतः पूर्व्वो भवतीति उक्तम्॥ ७।९।२६ (१७)

ननु कृपालुश्चेत् कथं फलवैषम्यं तत्राह। नैषेति। हे भगवन्! एषा परावरमतिः अयमुत्तमः अयमध्यम इति बुद्धिर्जन्तोर्यथा क्लेश-कर्म्माद्यु पेतस्य त्वं हि जगत आत्मना स्वेनैव सुहृत्। न तु निमित्त-

एवं जनं निपतितं प्रभवाहि कूपे,
कामाभिकाम मनुयः प्रपतन् प्रसङ्गात्।
कृत्वात्मसात् सुरर्षिणा भगवन् गृहीतः,
सोऽहं कथं नु विसृजे तव भृत्यसेवाम् ॥१९॥
मत् प्राणरक्षण मनन्त पितुर्वधश्च,
मन्ये स्वभृत्य ऋषिवाक्य मृतंविधातुम्।
खड्गं प्रगृह्य यदवोचदसद्विधित्सु-
स्त्वामीश्वरोमदपरोऽवतु कं हरामि ॥२०॥
नैतन्मन स्तव कथासु विकुण्ठनाथ!
संप्रीयते दुरित दुष्ट मसाधु तीव्रम्।

---

वशात्। तथापि सेवकस्यैव तत्फलम्। तच्च सेवानुरूपम्। न तु परावरत्वमुदये फले कारणम्। एतच्च सुरतरौ दृष्टम्। स हि पक्ष-पातहीनोऽप्युपसर्पतामेव यथाफलं प्रसूते न तु दूरस्थानाम्। सेवाकृतं वैषम्यम् फलतीति कृपालुत्वं अतो न विरोध इत्यर्थः॥ ७।९।२७ (१८)

तत्र (दु)र्लसेवापि फलदेत्याह एवमिति। प्रभवाहि कूपे संसारे कालसर्पकूपे पतितं जनमनुजनेन सहप्रसङ्गात्। प्रयतम् सुरर्षिणा नारदेन। उद्धृतः कामाभिकामं विषयाभिलाषिणाम्॥ ७।९।२८ (१९)

यदिति। स्वभृत्यो हिरण्यकशिपुः स एव ऋषिः तस्य वाक्यं ऋतं सत्यं सत्यं कर्त्तुं इति प्रकृतिभावः। किन्तद्वाक्यं यदसद्विधित्सुर्मां जिघांसुरवोचत्। अहन्ते कथं शिरोहरामि। यदन्योय ईश्वरोऽस्ति सत्वामवत्विति॥ ७।९।२९ (२०)

कामातुरं हरष शोकभयैषणार्त्तम्,

तस्मिन् कथं तव गतिं विमृषामि दीनः ॥२१॥

जिह्वैकतोऽच्युत विकर्षति मावितृप्ता,

शिश्नोऽन्यतस्त्वगुदरं श्रवणं कुतश्चित् ।

घ्राणोऽन्यतश्चपलदृक् क्व च कर्मशक्ति-

र्बह्व्यः सपत्न्य इव गेह पतिं लुनन्ति ॥२२॥

एवं स्वकर्म पतितं भववैतरण्या-

मन्योन्य जन्म मरणाशन भीत भीतम् ।

पश्यन् जनं स्वपर विग्रह वैरमैत्रम्,

हन्तेति पारचर पीपृहि मूढमद्य ॥२३॥

---

ननु तथापि किन्द्रास्येन मत्स्वरूपमात्मनि विमृश्य त्वां तत्राह । नैतदिति । तव कथासु नप्रीयते नतु तुष्यति । यतो दुरितैः पापैर्दुष्टम् अतएव तीव्रम् । यथा तथा असाधु एषणाः पुत्त्रैषणाद्या अतस्तस्मिन् कथं तवगतिं स्वरूपम् विमृषामि ॥ ७।९।३९ (२१)

एषणार्त्ततामेवाह । जिह्वेति । मामां अतृप्ता क्षुधिता । घ्राणो नासाग्रसञ्चारीवायुः । अन्यतो गन्धः दृक्चक्षुः । कर्मशक्तिः कर्मेन्द्रियाणि ॥ ७।९।४० (२२)

इदानीं सर्वार्थं प्रार्थयते श्लोकद्वयेन । एवमिति । हे पारचर ! परतीरस्थ भववैतरण्यां संसारप्रवाहे पतितं जनमित्येवं पश्य । यथा मां कृपया पश्यसि तथेत्यर्थः । पिपृहि कृपावलोकेन पालयेत्यर्थः ॥ ७।९।४१ (२३)

कोऽन्वत्र तेऽखिल गुरो भगवन् प्रयास-
उत्तारणेऽस्य भव संभव लोपहेतोः।
मूढ़ेषु वै महदनुग्रह आर्त्त बन्धो!
किन्तेन ते प्रियजनाननु सेवतां नः ॥२४॥

श्रीसदस्याः।

उत्पत्त्यध्वन्यशरण उरुक्लेशदुर्गेऽन्तकोग्र-
व्यालान्विष्टे विषय मृगतृष्णात्मगेहोरु भारः।
द्वन्द्व श्वभ्रे खल मृगभये शोक दावेऽज्ञसार्थः,
पादौकस्ते शरणद कदा याति कामोपसृष्टः ॥२५॥

---

कोऽन्वत्रेति। अन्योऽन्यं परस्परम्। जन्मादिभ्यो भीतं कालाच्च भीतं स्वपरविग्रहयोः शरीरयोर्यथासम्भवं वैरमेव यस्य तम्। अस्य जगतः भवसम्भवलोपाः सृष्टिस्थितिलया महतामनुग्रहश्च मूढ़ेषु। ननु किमन्यप्रसङ्गेन त्वां तावदुत्तारयिष्यामीति चेत्तत्राह। तेन मोचनेण किं न किमपीत्यर्थः। वयं तद्भृत्यसेवयैव कृतार्था इत्यभिप्रायः। तत्र च त्रस्तोऽस्मीत्येतदारभ्य प्रकरणे एव भयानको रसः। प्रह्लादो नृसिंहम् ॥७।९।४२ (२४)

उत्पत्तीति। उत्पत्तिः संसारः। अशरणे रक्षकहीने। व्यालाः। अन्विष्टो दृष्टः (दृष्टः) मृगतृड् मृगतृष्णा। आत्मा देहो गेहञ्च। उरुभारोयस्य द्वन्द्वानि हर्षविषादादीनि। श्वभ्रंगर्त्तः। मृगाः सिंहादयः। ज्ञाः पण्डितम्मन्याः। तेषां सार्थे सङ्घः उपसृष्ट उपद्रुतः। कदा याति कोऽपिकदापि न याति। मार्गान्तरयति तत्त्वादित्यर्थः। अत्र च घोर संसार दर्शनात्। सदस्येषु भयमुत्पन्नमिति शरण-

मुचुकुन्दः ।

चिर मिह वृजिनार्त्तस्तप्य मानोऽनुतापै-
रवितृषषडमित्रोलब्ध शान्तिः कथञ्चित् ।
शरणद समुपेत स्त्वत् पदाब्जं परात्मन् !
अभयमृतमशोकं पाहिमापन्नमीश ! ॥२६॥

रुद्रज्वरः ।

तप्तोऽहं ते तेजसा दुःसहेन,
शान्तोग्रेणात्युल्बणेन ज्वरेण ।
तावत् तापो देहिनां तेऽङ्घ्रि मूलम्,
नो सेवेरन् यावदाशानुबद्धाः ॥२७॥

नारदः ।

दृष्टं तवाङ्घ्रि युगलं जनतापवर्गम्,
ब्रह्मादिभिर्हृदि विचिन्त्य मगाधबोधैः ।

इत्यनेन व्यञ्जितम् । भीतानां हि शरणेच्छा । सदस्या भगवन्तम् ॥४।७।२८ (२५)

— चिरमिति । वृजिनं दुःखम् । अनुतापैः पश्चातापैः । अवितृषः षट् इन्द्रियाण्यमित्राणि यस्य शंसुखरूपम् । अभयमद्वितीयत्वात् । ऋतमबाध्यत्वात् । अशोकमानन्दघनत्वात् । आपन्नं शरणागतम् । मुचुकुन्दः श्रीकृष्णम् ॥१०।५१।५७ (२६)

तप्तोऽमिति । शान्तः सन्नुग्रः शान्तोग्रः तेन शीतेनेत्यर्थः । रुद्रज्वरः श्रीकृष्णम् ॥१०।६३।२८ (२७)

एवं भयानक रसेन भजतोऽनिष्टहानि रिष्टाप्तिश्च स्यादित्याह ।

संसारकूपपतितोत्तरणावलम्बम्,
ध्यायं स्मराम्यनुग्रहेण यथा स्मृतिः स्यात् ॥२८॥

इति श्रीवोपदेवकृते मुक्ताफले विष्णुभक्तानां
भयानकरसो नाम पञ्चदशोऽध्यायः ।

दृष्टमिति । यत्त्वदङ्घ्रियुगलं ध्यायेत् प्राप्नोमीत्यतोऽन्यत् किं प्रार्थनीय मस्तीत्यभिप्रायः । जनानां सम्भूता जनता । तस्यापवर्गं कैवल्यम् । ब्रह्मानन्दादपि सुतरामभिलषणीयमित्याह । ब्रह्मादिभिरिति । मुक्तानां स्पृहणीयत्व मुक्त्वा मुमुक्षूणामत्याह । अगाधेति । यद्यपि मदङ्घ्रि दर्शनं परमपुरुषार्थजातञ्च तत्तथापि किञ्चिदाद्रियतामिति चेत्तत्राहानुग्रहेणेति । स्मृतेर्विपरिलोपोमाभूदित्यर्थः । फलकीर्त्तनार्थमेवा स्यश्लोकस्येहपाठः । अन्यथा भयशङ्काया अभावादनर्थकः पाठः स्यान्नारदः श्रीकृष्णम् ॥१०।६९।१८ (२८)

इति हेमाद्रि विरचितायां कैवल्यदीपिकायां विष्णुभक्तानां
भयानकरसो नाम पञ्चदशोऽध्यायः समाप्तः ॥

---

## षोड़शोऽध्यायः ।

### वीभत्सरसे पुरुरवाः ।

क्वायं मलीमसः कायो दौर्गन्ध्यप्रद्यात्मकोऽशुचिः ।
क्वगुणाः सौमनस्याद्याह्यध्यासोऽविद्ययाकृतः ॥१॥
पित्रोः किं स्वंनु भार्य्यायाः स्वामिनोऽग्नेः श्वगृध्रयोः ।
किमात्मनः किंसुहृदामिति योनावसीयते २॥
तस्मिन् कलेवरेऽमेध्ये तुच्छनिष्ठे विषज्जते ।
अहो सुभद्रं सुनसं सुस्मितञ्च मुखं स्त्रियाः ॥३॥

अथ हृद्यव्रण पूतिगन्ध क्रमिकीटानां दर्शन श्रवणादिभावं अङ्ग संकोचहृल्लास नासा मुख विविक्त पानाच्छादन निष्ठीवनाद्यनुभावम् अपस्मारौग्र्यमोहमदादि व्यभिचारिणं जुगुप्सा स्थायिभावं विभत्स-समाह । विभत्सेति । क्वायमित्यादि । मलीमसो मलिनः । सौमनस्यं पुष्पतुल्यत्वम् । तच्चगन्धेन दौर्गन्ध्यादि व्यतिरेकात् । अध्यासः अतद्रूपे तद्रूप बुद्धिः (१) ॥११।२६।१८ (१)

पित्रोरिति । नावसीयते न निष्ठीयते । अत्र पित्रादीनां क्रमाज्जननीप क्रमादाह । भक्षणाधिष्ठानो दोष योगाः स्वत्वहेतवः ॥११।२६।१७ (२)

तस्मिन्निति । तस्मिन्निश्चिते अमेध्ये अपवित्रे तुच्छेन अल्पेन

---

(१) "कोऽयमध्यासोनामिति स्मृतिरूपः परत्र पूर्व दृष्टावभासः अतस्मिं स्तद्बुद्धि रित्यवोचाम" शारीरकभाष्यम् ।१।१।१। भाध्यासोमिथ्याभ्रमः अविद्या अज्ञानमिति यावत् ।

त्वङ्मांस रुधिर स्नायु मेदोमज्जास्थिसंहतौ।
विण्मूत्र पूये रमतां कृमीणां कियदन्तरम् ॥४॥
पुंश्चल्यापहृतं चित्तं कोऽन्वन्यो मोचितुं प्रभुः।
आत्मारामेश्वरमृते भगवन्त मधोक्षजम् ॥५॥

अवधूतः।

देहो गुरुर्मम विरक्ति विवेक हेतुः,
विभ्रत् स्म सत्त्व निधनं सततार्त्युदर्कम्।
तत्त्वान्यनेन विमृशामि यथा तथापि,
पारक्यमित्यवसितो विचराम्यसङ्गः ॥६॥

---

निष्ठानाशोऽस्येति तुच्छ निष्ठम्। विषज्जते विशेषात्सङ्गं करोति तदाह ॥११।२६।२० (३)

त्वगिति। अहो इत्यादि। विड़ादीनां त्रयाणां द्वन्द्वैकत्वम्। त्वगादीनां सप्तानां संहतिः सङ्घातो यस्मिन् विण्मूत्रपूये। तत्र रमतां प्राणिनाञ्च कृमीनाञ्च कियदन्तरं न कियदपीत्यर्थः ॥११।२६।२१ (४)

पुंश्चली उर्व्वशी। नु अहो। आत्मनि स्वस्वरूपे सदानन्द घने। आरमन्ति सर्व्वकाल मभिव्याप्य क्रीड़न्ति मनोव्यापारयन्ति ये ते तथा। जीवन्मुक्ता इत्यर्थः। तेषामीश्वरं नित्यमुक्तत्वात्। अत्रै कायमिति चेपार्थेण जुगुप्सा गम्यते। तस्या देहदोषा-उद्दीपन विभावाः। सञ्चारिणस्तूह्याः। जगुप्सायुक्तस्य चेतसो भगवद्विषयत्वाद् भक्तिरसत्वम्। ऐलः श्लोकषाम् ॥११।२३।१५ (५)

देह इत्यादि। कुतोगुरुः यतो विरक्ति हेतुः। विरक्तिहेतुत्वं कुतः यतः सत्त्वनिधनम्। जन्मनाशौ विभ्रदिति। उदर्क उत्तर-कालफलम्। विवेकहेतुत्वमाह तत्त्वानीति। तत्त्वानि पुरुषादीनि

जायात्मजार्थं पशु भृत्य गृहाप्तवर्गान्,
पुष्णाति यत्प्रिय चिकीर्षया वितन्वन् ।
स्वान्ते सकृच्छ्रमवरुद्ध धनः सदेहः,
सृष्ट्वास्य बीज मवसीदति वृक्ष धर्म्मा ॥७॥
लब्ध्वा सुदुर्लभमिदं बहु सम्भवान्ते,
मानुष्यमर्थदमनित्य मपीह धीरः ।
तूर्णं यतेत न पतेदनुमृत्यु यावत्-
निःश्रेयसाय विषयः खलु सर्व्वतः स्यात् ॥८॥

यथा यथावत् । यद्यप्येवं यथापि पारोक्यम् श्वसृगालादिभक्ष्यमिद-मिति निश्चितोऽयम् । अतोऽसङ्गोममत्वहीनोऽहं विचरामि ॥११।९।
२५ (६)

जन्मनाशवत्तामेवाह । जायेति । यस्य देहाभिमानेन आत्मनः प्रियचिकीर्षया वितन्वन् सम्पादयन् सन् पुष्णाति सकृच्छ्रं यथास्या-त्तथा । अवरुद्ध मुपार्ज्जितं धनं येन । पुण्यपापे । अवसीदति क्लिश्यति । वृक्षधर्म्मः यथा वृक्षान्तर जनकं वीजं प्रसूय नश्यति । तथाऽयमित्यर्थः ॥११।९।२६ (७)

विवेकहेतुत्वं पुनराह लब्ध्वेति । मानुष्यं मनुष्यत्वम् । बहूनां-जन्मनामन्ते यद्यप्यनित्यं तथाप्यर्थदं मोक्षदं मोक्षादन्यस्यानर्थत्वात् । निःश्रेयसाय यतेत । अनुमृत्युः मृत्योः सम्मुखम् । ननु विषयार्थ-मेव प्रयततां किमन्येन अत्राह विषया इति । सर्व्वतो नरकादावपि सुलभत्वात् अत्र विभावादि (अलङ्कार) विवेक प्राग्वत् । अवधूत यदुम् ।११।९।२९ (८)

पिङ्गला।

सन्तं समीपे रमणं रतिप्रदम्
वित्तप्रदं नित्य मिमं विहाय।
अकामदं दुःख भयाधि शोक-
मोहप्रदं तुच्छ महं भजेऽज्ञा॥९॥
अहो मयात्मा परितापितो वृथा,
साङ्केत्य वृत्त्यातिविगर्ह्य वार्त्तया।
स्त्रैणान्नराद्यार्थतृषोऽनुशोच्यात्,
क्रीतेन वित्तं रतिमात्मनेच्छता॥१०॥

---

सन्तमिति। अहमज्ञा इममात्मानं विहाय। अन्यं रमणं भजामि। सेव्यासेव्यत्व कीर्तनाय द्वयोर्विशेषणानि। वित्तं विचारः "विद् विचारणे" *(२) इत्यस्य भावे निष्ठायां रूपम्। 'नुद विदेति' वा णत्वम्। मोहः भोगासक्त्याद्विवेकाभावः अज्ञ मेवाह अहो इत्यादि। चित्तम् पिङ्गला॥११।८।३१ (९)

अहो इति। धर्म्मेण अति विगर्ह्यया वार्त्तया जीविकया दुर्लभस्य वस्तुनः प्राप्तौ सुखं भवति तदपि नास्तीत्याह। स्त्रैणा-दिति। स्त्रीणां वश्यान्नरान्न तु देवादित्यर्थः। न च वित्तमयी-अर्थेति। अर्थतृष्णायुक्तात् कृपणादित्यर्थः। न चैवं विधेनापि सह सदैव सम्भोगोऽस्तीत्याह। अनुशोच्यादिति। मृत्युग्रस्तादित्यर्थः।

---

(२) पाणिनीय गणपाठे। धातु प्रदीपकारस्य,—

वेत्तिरूपं विज्ञाने।वत्ते विंद विचारणे।

विद्यते विद्सत्तायां लाभे विन्दति विन्दते॥

यदस्थिभिर्निर्म्मित वंश वंश्य-
स्थूणं त्वचारोम नखैः पिनद्धम् ।
क्षरन्नवद्वार मगारमेतद्-
विन्मूत्रपूर्णं मदुपैति कान्या ॥११॥

मुचुकुन्दः ।

विमोहितोऽयं जन ईशमायया,
त्वदीयया त्वां न भजत्यनर्थदृक् ।
सुखाय दुःख प्रभवेषु सज्जते,
गृहेषु योषित् पुरुषश्च वञ्चितः ॥१२॥
लब्ध्वा जनो दुर्लभमत्र मानुषम्,
कथञ्चिदव्यङ्गमयत्नतोऽनघ ।

---

क्रीतेन विक्रीतेन आत्मना देहेन रतिं वित्तञ्चेच्छति। याऽहं त्वयेत्यर्थः ॥११।८।३३ (१०)

यदिति। यत्र विवेकात् पूर्वं वस्तुबुद्धिः तस्यैव विचार्य्यमाणत्वे वीभत्सतेत्याह यदित्यादि। एतदागारं गृहं त्वदन्या का उपैति न कापोत्यर्थः। एतत् किं यद् यदित्यादि। वंशा वेणवः वंश्यं तदाधारभूतं काष्ठं स्थूणाः स्तम्भाः। पिनद्धं बद्धम्। क्षरन्ति नव द्वाराणि यस्मिन् तत्। पिङ्गला स्वात्मानम् ॥११।८।३३ (११)

विमोहित इति। जनो योषित् पुरुषश्च निविविशेजनैः तदीयया मायया विमोहितो वञ्चितश्च विमोहितत्वादुचिते न प्रवर्त्तते। वञ्चितत्वादनुचिते प्रवर्त्तते च पदद्वयेनाह। अनर्थे प्रपञ्चे दृग् यस्य स तथा। दुःखस्य प्रभवो जन्म येषु तेषु ॥१०।५१।४५ (१२)

पादारविन्दं न भजत्यसन्मति-
र्गृहान्धकूपे पतितो यथा पशुः ॥१३॥
ममैषकालोऽजित निस्फलोगता-
राज्यश्रियोन्नद्धमदस्य भूपतेः।
मर्त्यात्मबुद्धेः सुतदार कोशभु-
ष्वासज्जमानस्य दुरन्तचिन्तया ॥१४॥
कलेवरेऽस्मिन् घटकुद्य सन्निभे,
निरूढ़मानो नरदेवइत्यहम्।
वृतोरथेभाश्व पदात्यनीकपैः-
र्गांपर्य्यटं स्त्वागणयन् सु दुर्म्मदः ॥१५॥
प्रमत्तमुच्चैरिति कृत्य चिन्तया-
प्रवृद्धलोभं विषयेषु लालसम्।

---

विमोहितत्वमेव पुनः प्रपञ्चयति लब्ध्वेति। कथञ्चित् कुतश्चित् पुण्याद्व्यङ्गं अविकलं असति विषये मतिर्यस्य अहमपि तथेति द्वाभ्यामाह ॥१०।५१।४६ (१३)

ममेति। उन्नद्ध उत्कटः मदोगर्वः मर्त्ये देहे आत्मबुद्धिर्यस्य। कोशोऽर्थसञ्चयः। चिन्तया आसज्जमानस्यासङ्गंप्राप्यमानस्य ॥ १०।५१।४७.(१४)

कलेवर इति। अहमिति नरदेव इति च निरूढ़ाभिमानो गां भुवं पर्य्यटन् त्वा त्वां अगणयत् दुर्म्मदोस्मीत्यर्थः दुर्म्मदानाञ्च कामभगं द्वाभ्यामाह ॥१०।५१।४८ (१५)

त्वमप्रमत्त सहसाभिपद्यसे,
क्षुल्लेलिहानोऽहि रिवाखुमन्तकः ॥१६॥
पुरा रथैर्हेम परिष्कृतै श्चरण्,
मतङ्गजैर्वानरदेव संज्ञितः ।
सएव कालेन दुरत्ययेन ते,
कलेवरोविट् क्रमि भस्म संज्ञितः ॥१७॥
निर्ज्जित्य दिक्चक्रमभूतविग्रहा-
वरासनस्थः समराजवन्दितः ।
गृहेषु मैथुन्य सुखेषु योषिताम्
क्रीड़ामृगः पुरुष ईशानीयते ॥१८॥
करोति कर्म्माणि तपः सुनिष्ठितो-
निवृत्तभोगस्तदपेक्षयाददत् ।

प्रमत्तेति इदं कृत्वेदं करिष्यामीति चिन्तया प्रमादिनं उच्चैरत्यर्थं लालसं कामिनं सावधानस्त्वं सहसा वेगेन । क्षुधालेलिहानः सृक्कभागम् अभिपद्यसे प्राप्नोसि ॥ १०।५१।४८ (१६)

परिष्कृतैर्भूषितैः । मतङ्गजा हस्तिनः । त्वया कालेन श्वादि भक्षिते विट्संज्ञा दग्धे भस्म संज्ञा, संज्ञित इति "तारकादित्वा" दितच् वा ॥१०।५१।५० (१७)

मनुष्यत्वेऽपि स्त्रोप्रसङ्गः काम्यधर्म्मानुष्ठानं वा जुगुप्सितमित्याह निर्ज्जित्यदिगितिद्वाभ्याम् । मैथुन्यं मिथुनस्य कर्म्म । नीयते नितरां इयते प्राप्यत इत्यर्थः ॥१०।५१।५१ (१८)

पुनश्च भूयास महं स्वराडिति,
प्रवृद्धतर्षो न सुखाय कल्पते ॥१९॥

जरासन्धबद्धराजानः ।

त एव कृष्णाद्य गभीर रंहसा,
दुरन्तवीर्य्येण विचालिताःश्रियः ।
कालेनतन्वा भवतोऽनुकम्पया,
विनष्टदर्पा श्चरणौ स्मराति ते ॥२०॥
अथो न राज्यं मृगतृष्णिरूपितम्,
देहेन शश्वत् पतता रुजां भुवा ।

करोतीति । तपः सुनिष्ठितो निष्ठां प्राप्त । तदपेक्षणं विना भोगापेक्षया निवृत्तभोगोदरद् दानञ्च करोति । पुनर्ज्जन्मान्तरे महान् स्वराट् भूयासम् भवेयमिति । प्रवृद्धाभिलाषो न सुखाय-कल्पते । मुचुकुन्दः श्रीकृष्णाम् ॥१०।५१।५२। (१९)

एवं वीभत्सरूपेण भक्तिरसमनुभवतो भगवत् स्मृति रन्यास्मृतिश्च स्यादिति क्रमाद्द्वाभ्यामाह । तएवेति । हे श्रीकृष्ण ! ये प्रागैश्वर्य्य-मदान्धा अभूम त एव वयं अद्य ते चरणौ स्मरामः । यतो विनष्ट दर्पा स्तदेव कुतो यतस्तवतन्वा कालेन श्रियः सकाशाद् विचालिताः ॥१०।७३।१३.(२०)

अथ इति । अथस्त्वच्चरणस्मरणानन्तरं मृगतृषा मरीचिकया निरूपितं व्याख्यातम् । तत्तुल्यमित्यर्थः । रुजां रोगाणां भुवा-

उपासितव्यं स्पृहयामहे विभो !
क्रियाफलं प्रेत्य च कर्णरोचनम् ॥२१॥

इति श्रीबोपदेवकृते मुक्ताफले विष्णुभक्तानां
बीभत्सरसो नाम षोडशोऽध्यायः ॥

आश्रयेण अनेन भोज्यभोजकयोरन्यनिरासत्वमुक्तम्। उपासितव्यं न स्पृहयामहे। सेव्य बुद्ध्या न गृह्णीम इत्यर्थः। यच्च प्रेत्य परलोकं क्रियाया ज्योतिष्टोमादेः फलम् तदपि न स्पृहयामहे। यत स्तत्कर्णरोचनं केवलं श्रवणमात्रेण प्रीतिजनकं न तु भोगक्षमम्। अविशुद्धिः क्षयादिदोष (१) दूषितत्वादिति भावः राजानः श्रीकृष्णम् ॥१०।७३।१४ (२१)

इति हेमाद्रिविरचितायां कैवल्यदीपिकायां विष्णुभक्तानां
बीभत्सरसो नाम षोडशोऽध्यायः ॥

(१) "दृष्टवदानुश्रविकः सह्यविशुद्धिक्षयातिशययुक्तः" "स्यादिति पञ्चशिखाचार्यैरुक्तत्वात् स्वल्पः सङ्करः सपरिहारः सप्रत्यवमर्षः।" योगदर्शनम्, २—१३।—

## सप्तदशोऽध्यायः ।

शान्तरसे नारदः ।

तत्रान्वहं कृष्णकथाः प्रगायता-
मनुग्रहेणाशृणवं मनोहराः ।
ताः श्रद्धया मेऽनुपदं विशृण्वतः,
प्रियश्रवस्यङ्ग ममाभवद्रतिः ॥१॥
तस्मिंस्तदालब्ध रुचेर्महामते !
प्रियश्रवस्यस्खलिता मतिर्मम ।

---

अथ वैराग्य संसार भीरुता तत्त्वज्ञान वीतराग परिशीलन परमेश्वरानुग्रह तपोवन विविक्त सेवादि विभावं यम नियमाध्यात्मशास्त्र चिन्तन सर्वभूत समत्व दर्शन परार्थकारित्वाद्यनुभावं धृति स्मृतिमति निर्वेद हर्षादि व्यभिचारिणं शमस्थायिभावं शान्तिरसमारभते। शान्तेति। तत्रेत्यादि। तत्र मुनि समीपे अशृणवं श्रुतवानहम् अनुपदं पदे पदे। पदार्थोऽपि न तिरोहित इत्यर्थः। प्रियश्रवसि श्रीकृष्णेरतिर्भक्तिः। अस्यामिरतिर्ममेत्यक्षचिमतार्थम्। ... भगो व्यासः ॥१।५।२६ (१)

यथाह मेतत् सदसत् स्वमायया,
पश्येमयि ब्रह्मणि कल्पितं परे ॥२॥
इत्थं शरत् प्रावृषिकावृतू हरे
र्विशृन्वतोमेऽनुसवं यशोऽमलम् ।

ननु किंरत्येतिचेत्तत्राह। तस्मिन्निति। तस्मिन् श्रोत्रयो प्रियश्रवसि अस्खलितामतिः निःसंशयं ज्ञानं यत्रैवरतिस्तत्रैव-मति रित्यर्थः। ययामत्या सदसत् स्थूल सूक्ष्मम् रूपद्वयं ममैव मायया मय्येव ब्रह्मरूपे कल्पितम् आरोपितम् रज्जुभुजङ्गवत् (१)। पश्ये पश्यापि पश्यामि। एतदिदमिति पदद्वयेन यथाऽन्यत्र सत्यो भुजङ्गो रज्जवमारोपितः न तथा अत्यत्र सत्यं रूप (मिदं) द्वयं ब्रह्मण्यारोपितम्। किन्त्विदमिदमेव-इत्युक्तम्। अनिर्व्वाच्य-मित्यर्थः ॥१।५।२७ (२)

महानुभाव प्रसङ्गादचिरेनैव तत्त्वज्ञानमुत्पद्यते इत्याह इत्थमिति इत्थं अनुसवं अनुसरविसारि किम्भूता भक्तिः आत्मनोऽन्तःकरणस्य रजस्तमसी अपहन्तीति। तथा शुद्ध सत्त्वात्मिकेतर्थः। ज्ञानस्यैव पराकाष्टा। "यस्यामभ्युदितायां प्रत्युदितख्याति रेवं मन्यते प्राप्तं मे प्रापणीयं क्षीणाः क्षेतव्याः क्लेशा इति (२)। (छिन्नः श्लिष्टोऽभव-संक्रमो यस्यामविच्छेदाज्जनित्वा म्रियते" मृत्वाच पुनर्ज्जायत इति) अत्रच "ते मय्यपेताखिल चापल" (३) इति पूर्वश्लोकेन सकल

(१) ब्रह्मातिरिक्त वस्तुनोऽयाथार्थ्यात् मायातु ब्रह्मण्येव। रज्जुरिति यथा रज्ज्वामयं सर्प-इति ज्ञानं नायं सर्प इति ज्ञानेनोत्तर कालीनेन बाधकेन बाध्यत्व पूर्वज्ञानस्यारोपितत्वं तद्वत् इति।

(२) पातञ्जलदर्शन-भाष्यम् ।२।११।२२।१२ सूत्रम्।

(३) भागवतम् ।१।५।२४ श्लोकः।

संकीर्त्त्यमानं मुनिभिर्महात्मभि-
र्भक्तिः प्रवृत्तात्मरजस्तमोपहा ॥३॥

चापल त्यागादात्मा शमःस्थायी उक्तः। मुक्त (क्ति) सङ्गः अस्या कथा श्रवणश्चेतुद्दीपन विभावाः भगवानालम्बनम्। सर्वत्रात्मैक्य कथन मनुभावः। अस्खलिता मतिर्व्यभिचारी। एवमेव विभावानुभाव-व्यभिचारिसम्प्रयोगाद्रसः शान्तो निष्पद्यते। न च शमस्य सर्व्वे चित्तवृत्त्युपरमात्मकत्वेन रत्याद्यभावरूपत्वाद्भावत्वं विप्रतिषिद्ध-मिति शङ्क्यम् प्रशान्तत्वाश्रिताकारपवृत्तिरूपत्वेन भावत्वोपपत्तेः। प्रशान्तमेव हि चित्तं तत्तत्कारणवशाद्रति हासादिपरिणाम मनु भवतीति रत्यादीनां मूलभूतत्वादस्य नानाभाव रूपत्वम् न हि शक्य' वक्तुम्। घटाभावो मृत्तिका पटाभावस्तन्तव इति। निरतिशया-नन्दहेतुत्वेन चास्य रसेषु श्रेष्ठत्वम्। यदाहुः "यच्च काम सुखं लोके यच्च दिव्यं महत् सुखम्। तृष्णाक्षय सुखस्यैते नार्हतः षोड़शीं कलाम् (१) इति। (२) ननु "एतेह्यष्टौ रसाः प्रोक्ता द्रुहिणेन महात्मना" इति वदतोभरतस्य शृङ्गारादावष्टरसकैरसत्वमभिप्रेतम्। तत्कथमयमवमे नतुकथमुच्यते। सत्यं किन्तु नाट्यविषयेऽष्टानामेव रसत्वं नान्य-त्रेति तस्याभिप्रायः। अतएव (३) "अष्टौ नाट्यरसाः स्मृताः" इति तेनैवोक्तम्। सर्व्वस्यैव शान्तापलाप इति तु तद्व्याख्याने "तुष्यन्ति तरुणाः कामे मोक्षेचापिविरागिणः (४)। धर्म्मोधर्म्मे प्रवृत्तानां कामः कामोपसेविनाम्" इत्यादि तस्यैव वचनं विरुध्येत।

---

(१) शब्दार्थ चिन्तामणिः।

(२) भरतमुनेर्नाट्य सूत्रम्।

(३) 　　"　　　　"

(४) नाट्यसूत्र व्याख्यानेऽभिनवगुप्त पादाचार्य्य कृते।

कपिलः ।

सतां प्रसङ्गान् मम वीर्य्य संविदो
भवन्ति हृत्कर्ण रसायनाः कथाः ।

अनएवाभिनवगुप्तपादैरेष शान्तरसेन प्रतिष्टापितः । महाभारतादौ चास्यैव साम्राज्यम् । (१) ननु तथाप्यस्य विषय जगुप्सारूपत्वात् वीभत्सान्तर्भावायुक्तो । इतिचेन्न । इह जगुप्सायाः सञ्चारित्वेनानस्थायित्वात् । पर्य्यन्तनिर्व्वाहे तस्य मूलतएव विच्छेदात् । यत्तु वीभत्सो नो विरज्यते । तत्र वीभत्सएव यथा "लालं वक्त्रासवंवेत्ति मांसपिण्डौ पयोधरौ । मांसास्थिपिण्डे जघने जनः कामग्रहातुरः ।" तथा उत्तानोच्छून मण्डूक पाटितोदर सन्निभे । क्लेदिनि स्त्रीव्रणेसक्तिरक्रमेः कस्य जायते इति । नाप्यस्य धर्म्मवीरेऽन्तर्भावः । तस्याभिमानमयत्वेन व्यवस्थानात् । अस्य चाहङ्कार प्रशमैकरूपत्वात् । तथापितयोरेकत्वं परिकल्पने वीररौद्रयोरपि तथात्व प्रसङ्गः धर्म्मवीरादीनां चित्तवृत्ति विशेषानां सर्व्वाकाराणां अहङ्कार रहितत्वे शान्तरसभेदत्वमिति व्यवस्थाप्यमाने न कश्चिद्विरोधः । तस्माद्वीभत्सादिभ्यः पृथग्भूत प्रशमस्थायिभाव उत्तम प्रकृतिरहङ्कार शैथिल्यात्मकोऽस्तु शान्तनामारस इत्यभिच्छताऽप्यवश्यमाश्यु पेतव्यम् । नारदोव्यासम् ॥१।५।२८। (२)

सतामित्यादि । वीर्य्यं महिमानं सम्यग्वेदयन्तीति वीर्य्यसम्विदः "वान्तिपदं झषोवाता" इति वदन्त्यभीविततिनिजर्थोऽत्रविदि रसायना अमृतीभूताः । तज्जोषणात् कथाश्रवणात् अपवर्गस्य मोक्षस्य वर्त्मनि मार्गे मयिसाकारे प्रथमं श्रद्धा प्रसन्नचित्तम् । 'ततोरिति-

(१) भरतमुनेर्नाट्य सूत्रव्याख्याता अभिनवगुप्तपादाचार्य्यः, तेन तदभावि ।
केषाञ्चिन्मते नाट्यसूत्र प्रणेता दुष्मन्तराजतनय भरत इति ।
नैव भरतमुनिरन्यः ।

तज्जोषणादाश्वपवर्गवर्त्मनि
श्रद्धा रतिर्भक्तिरनुक्रमिष्यति ॥४॥
भक्त्या पुमान् जातविराग ऐन्द्रियाद्
दृष्टश्रुतान्मद्रचनानुचिन्तया।
चित्तस्य यत्तो ग्रहणे योगयुक्तो-
यतिष्यते ऋजुभिर्योगमार्गैः ॥५॥
पुंसां किलैकान्तधियां स्वकानां
याः सम्पदो दिवि भूमौ रसायाम्।
नराति यद्वेश (ष) उद्वेग आधि-
र्मदः कलिर्व्यसनं सम्प्रयासः ॥६॥

रासक्तिः। ततो भक्तिः परमप्रेमात्मिका। यल्लाभेन ब्रह्मादिपदान्यपि तृणायमन्यत इत्यनुक्रमः ॥३।२५।२५ (४)

तदेवाह। भक्त्येत्यादि। ऐन्द्रियं इन्द्रियजन्यं सुखम्। दृष्टं ऐहिकं श्रुतं पारलौकिकं। मद्रचनायाः सर्गविसर्गादेः अनुचिन्ता यस्यां भक्तौ। ऋजुभिर्योगमार्गैर्यमादिभिश्चित्तस्य वशीकरणे यत्तः सावधानः सन् यतिष्यते। ततो योगयुक्तः समाधिसम्पन्नो भवतीत्यर्थः। कपिलो देवहूतिम् ॥३।२५।२६ (५)

पुंसामित्यादि एकस्मिन्नीश्वरे एवान्तोऽवसानं यस्याः साधीर्येषां ते तथा। (१) रसायां पातालादौ। भगवन्निष्ठानामित्यर्थः। रसाः पातालान्ताः तेषां नराति न ददाति। यत्र यासु सम्पत्सु स्मयो गर्वः कस्मिंश्चिदैश्वर्यावलिप्तादन्येषामनादरः। उद्वेग-

(१) पाणिनीय धातुपाठः रा दाने इत्यस्य (भ्वादिगणस्थ).

त्रैवर्गिकायासविघातमस्मत्
पतिर्विधत्ते पुरुषस्य शक्र ।
ततोऽनुमेयो भगवत् प्रसादो
योदुर्लभोऽकिञ्चन गोचरोऽन्यैः ॥७॥
अहं हरे तव पादैकमूल-
दासानुदासो भवितास्मि भूयः ।
मनः स्मरेतासुपतेर्गुणानां-
गृणीत वाक् कर्म्म करोतु कायः ॥८॥

---

चिन्ताऽनवस्थितिः । आधिश्चिन्ता (१) मदोहङ्कारः । कलिर्विरोधः । व्यसनं चित्तस्यतत्परत्वम् संप्रयासः सम्यक् क्लेशः ॥६।११।२२ (६)

तदेवाह । त्रैवर्गिकेति । त्रिवर्गः प्रयोजनं यस्यायासस्य । तस्य विधानं । अस्मत्पतिर्विष्णुः हे शक्र ततोविघातात् । अन्यैर्द्दनाद्यासक्तैः ॥६।११।२३। (७)

तस्मात्स्मयादिदुष्टत्वात् सम्पदस्त्यक्त्वा भगवद्दास्यमभ्यर्थय इत्याह अहमित्यादि । तवपादएकोमूलमाश्रयो येषां दासानामनुदासो भवितास्मि भविष्यामि । भूयः पुनः प्राक् एकवारं चित्रकेतुत्वेन भूतत्वात् । असुपतेः प्राणाधिष्ठातुः । कर्म्म तद्गृह मार्ज्जनादि । आद्या कर्म्मणि षष्ठी । अन्या सम्बन्धे ॥६।११।२४ (८)

---

(१) 'आधिर्म्मनस'मिति हेमचन्द्रः आधिर्मानसी व्यथा इत्यमरः ।

न नाक पृष्ठं नच पारमेष्ठ्यम्,
नसार्व्वभौमं न रसाधिपत्यम् ।
न योगसिद्धिरपुनर्भवं वा,
समञ्जसत्वाविरहय्य काङ्क्षे ॥९॥

अजातपक्षाइव मातरं खगाः
स्तन्यं यथा वत्सतराः क्षुधार्त्ताः ।
प्रियं प्रियेव व्युषितं विषन्ना-
मनोऽरविन्दाक्षदिदृक्षते त्वाम् ॥१०॥

---

ननु किंमहास्येन स्वाराज्यादिष्वन्यतमोऽङ्गीयतामिति चेत्तत्राह। ननाकेति। नाकपृष्ठं ऐन्द्रं स्थानम्। सार्व्वभौमं सर्व्वस्याभूमेरीश्वरत्वं। पारमेष्ठ्यं ब्राह्मं पदम्। योगसिद्धिरणिमाद्याः। अपुनर्भवोमोक्षः। समञ्जसत्वमिति हेतुगर्भविशेषणम्। व्युत्क्रमनिर्द्देशोऽपि अर्थक्रमस्य बलीयस्त्वात् सार्व्वभौम-नाकपृष्ठ-पाताल परमैश्वर्य्य योगसिद्धि पारमेष्ठ्या पुनर्भवेषूत्तरोत्तर प्रकर्षो विवक्षितः। अत्र च नाकपृष्ठादीनां पञ्चानां कालकलितत्वेन मोक्षस्य च नित्यत्वेन निरतिशय सुखैकरूपत्वेन तदनुभवाभावात्। असमञ्जसतयाऽनाकाङ्क्षत्वम्। त्वां काङ्क्ष इत्युक्तम्। ६।११।२५ (९)

तदेव प्रपञ्चयति। अजातेति। व्युषितं दीर्घप्रवासिनम्। अजातपक्षादिभिस्त्रिभिरुपमानैर्यथोत्तरम् ज्ञानप्रकर्षात् सुषुप्त्याद्यवस्थात्रयं क्रमाल्लक्षितम्। तत्तदवस्थात्रयेऽपि तां मनोदिदृक्षत इत्यर्थः। यद्वोपमात्रयेण क्रमादुत्कण्ठया मन्द-मध्य-मोत्तमरूपावस्थात्रयमुक्तम् ॥६।११।२६ (१०)

ममोत्तमःश्लोकजनेषु सौख्यं-
संसारचक्रे भ्रमतः स्वकर्मभिः ।
त्वन्माययात्मात्मज दारगेहे-
ष्वासक्तचित्तस्य न नाथ भूयात् ॥११॥

अक्रूरः ।

किं मया चरितं भद्रं किं तप्तं परमंतपः ।
किंवाथाप्यर्हते दत्तं यद्‌द्रक्ष्याम्यद्य केशवम् ॥१२॥
ममैतद् दुर्लभं मन्ये उत्तमः, श्लोक दर्शनम् ।
विषयात्मना यथा ब्रह्म कीर्त्तनं शूद्रजन्मनः ॥१३॥
मैवं ममाधमस्यापि स्याद्वेवाच्युत दर्शनम् ।
ह्रियमाणः कालनद्या क्वचित्तरति कश्चनः ॥१४॥
ममाद्यामङ्गलं नष्टं फलवांश्चैव मेभवः ।
यन्नमस्ये भगवतो योगिध्येयाङ्घ्रि, पङ्कजम्॥१५॥

---

ननु प्राचीनकर्मक्षपणार्थं त्वया तत्रैव स्थेयं कुतोमद्दर्शनमिति चेत् तथापि संसृतौ भ्रमता मयापि किञ्चिदभ्यर्थ्यमस्ति इत्याह । ममेति । हे उत्तमःश्लोक आत्मजादिष्वासक्तचित्तेषुजनेषु मे सख्यं न भूयात् । आत्मा देहः द्वन्दो हरिम् ॥६।११।२६ (११)

किमित्यादि । अर्हते सत्पात्राय ॥१०।३८।३ (१२)

ममेति । आत्मामनः । ब्रह्म वेदः १०।३८।४ (१३)

अथवा दुर्लभमिति मैवेति ॥१०।३८।५ (१४)

मेवम् । किन्तु सुलभम् ॥१०।३८।६ (१५)

कंसोवताद्याक्रूत मेऽत्यनुग्रहम्,
द्रक्ष्येऽङ्घ्रि पद्मं प्रहितोऽमुनाहरेः।
कृतावतारस्य दुरत्ययं तमः,
पूर्व्वेऽतरन्यन्नखमण्डलत्विषा ॥१६॥
यदर्च्चितं ब्रह्मभवादिभिः सुरैः,
श्रियाच देव्या मुनिभिः स सात्वतैः।
गोचारणायानुचरैश्चरद्वने-
यद्गोपिकानां कुच कुङ्कुमाङ्कितम् ॥१७॥

---

ममेति कंस इति भवोजन्म। वतेति विस्मये। अमुना कंसेन प्रहितः प्रस्थापितः। ननु किमङ्घ्रिपद्मे दृष्टेऽपि तत्राह। दुरत्ययमिति। पूर्व्वे सनन्दनादि योगिनः यस्याङ्घ्रि पद्मस्य हृत्पद्म कर्णिकायामर्पितस्य त्विषा तमः पञ्चपर्व्वाविद्यां (१) अतरन् तीर्णवन्तः नचेदमङ्घ्रि पद्मं मुक्तिमात्रफलम्। किन्तुचतुवर्गमपिप्रसूते इत्यभिप्रेत्याह ॥१०।३८।७ (१६)

यदिति। यदङ्घ्रि पद्ममनुचरैर्गोपैःसह ब्रह्मादिभिरर्च्चितम्। नैजैश्वर्य्यनिर्व्वाहायेत्यर्थं सिद्धिरुक्ता। श्रियेति। कामस्य मुनिभिरिति मुक्तेः सात्वतैरिति धर्म्मस्य सत्सत्त्वं विद्यते यस्मिन् ससत्त्वानुविष्णुः। सभक्तिभिर्भजनीयो येषान्ते तथा वैष्णावा इत्यर्थः। गोचारणायेति त्रिभिर्विशेषणैः पशुपामर (स्त्रिया) स्त्र्यादिष्वपि सानुग्रहत्वात् सुप्रसन्नत्वमुक्तम् ॥१०।३८।८ (१७)

---

(१) "अविद्याऽस्मितारागद्वेषाऽभिनिवेशाः"। योगदर्शनं २।३ सूत्रम्।

यदाह भगवान् वार्षगण्यः—अविद्या पञ्चपर्व्वैषा प्रादुर्भूता महात्मनः।

इति भामती योगवार्त्तिकयोः।

द्रक्ष्यामि नूनं सुकपोल नासिकम्,
स्मितावलोकारुण कञ्जलोचनम् ।
मुखं मुकुन्दस्यगुडालकावृतम्,
प्रदक्षिणं मे प्रचरन्तिवैमृगाः ॥१८॥
अप्यद्य विष्णोर्मनुजत्वमीयुषो-
भारावताराय भुवोनिजेच्छया ।
लावण्य धाम्नो भवितोपलम्भनम्,
मह्यंननस्यात्फलमञ्जसादृशः ॥१९॥

द्रक्ष्यामीति। स्मित-युक्त अवलोको यस्मिन् तथा अरुणंकञ्जवत् पद्मवत्लोचने यस्मिन्। पश्चादनयोः कर्मधारयः। कञ्जं पद्मम्। गुडावक्रा अलकाश्च केशाः तै वक्रकेशैरावृत मित्यर्थः। कुतोनूनं तद्रक्ष्यसि तत्राह। प्रदक्षिणमिति। वै यस्माद् मृगा इत्यत्र विशेषोक्तावप्ययुग्मसंख्या गौराश्चेति ज्ञेयम्। तथाचोक्तम् शाकुन-तन्त्रे (१) "पुण्ये नगत्यागमयोरयुग्माः प्रदक्षिणं गौरमृगाः प्रयान्ति। समान शस्ता न च वाम याताः कृष्णैर्विमिश्रा न भवन्ति दुष्टाः" इति ॥१०।३८।८ (१८)

अप्यद्येति अपि अद्यो ईयुषः प्राप्तस्य भविता भविष्यति। उपलम्भनं दर्शनम्। तेन च मह्यं मम दृशः दृष्टेः फलं नस्यादिति। न किन्तु द्वौ नञौ प्रकृतमर्थं सातिशयं गमयतः स्यादेवेत्यर्थः ॥१०।३८।१० (१९)

---

(१) शाकुन तन्त्रे यात्राकाले अङ्गस्पन्दनादौशुभाशुभ निर्णायक ग्रन्थः। शाकुन दीपिका, वसन्तराजशाकुनम् पद्यपद्येत्यादि। अन्यशाकुनतन्त्रं, अन्यत् वृहत्संहितायां छान्दोग्य ६ ३।४। ४६।७२।७१ च।

यदृच्छिताहं रहितोऽप्यसत् सतोः-
स्वतेजसापास्त तमोभिदाभ्रमः।
स्वमाययात्मन् रचितैस्तदीक्षया,
प्राणाक्षधीभिः सदनेष्वभीयते ॥२०॥

---

कोऽसौ विष्णुरिति चेत्तत्राह य इति। यः सदनेषु देहेषु अभीयते चेतनतया प्रतीयते। किम्भूतेषु देहेषु प्राणाक्षधीभिर्विशिष्टे-ष्वित्यर्थः। प्रान्ति पूरयति स्थापयति प्राणः। स्थूल सूक्ष्माणि दशभूतानि प्रतिगन्धादि तु प्रत्ययेरूपम्। अक्षाणि दशेन्द्रियाणि धियश्चत्वार्य्यन्तःकरणानि च चतुर्विंशतितत्त्वरूपेष्वित्यर्थः। तत् किं एतान्यथात्मन्नित्यानि ..... नेत्याह। आत्मनिति। अधिष्ठाने। रचितैः रचिताभिरित्यर्थः। नन्वद्वितीयत्वादसहायस्य कुतः कर्त्तृत्वं तत्राह स्वेति। स्वशक्ति मायाद्वारेण रचितैरित्यर्थः। तथापि मायायाजड़त्वान्नोकर्त्तृत्वमिति चेत्तत्राह। तदीक्षयेति "स (तद्) ऐक्षतबहुस्यां प्रजायेये" त्यादि श्रुतिप्रसिद्धं चादर्शनं यस्यां मायायां सा तथा। अयमर्थः। अचेतनापि माया चैतन्यच्छाया पतितमात्राद्‌द्रापिपर्त्ति। अयस्कान्तमणिसन्निधानादिवलौहम्। मायासम्बन्धानन्तरभावीदमुक्तम्। ततः प्रागभावरूपमाह। असत्-सतोः कार्य्यकारणयोः। ईच्छिता द्रष्टा। अहं रहितोऽपि इद-महं पश्यामीत्यभिमानहीनोऽपि अहंकाररहित्ये हेतुमाह। स्वतेज-सेति। स्वेन तेजसाचित् प्रकाशेन अपास्तं दूरीकृतं तमोऽज्ञानं भिदातत्कार्य्यं विपर्य्ययो वा भ्रमः। तत् संस्कारः संशयोवा येन सतथा। अज्ञानादि संसर्गशून्य इत्यर्थः ॥१०।२८।११ (२०)

यस्याखिलामीवहभिःसुमङ्गलैः,
वाचोविमिश्रा गुणकर्म्म जन्मभिः।
प्राणन्ति शुम्भन्ति पुनन्ति वैजगत्,
यास्तद्विरक्ताः शवशोभना मताः ॥२१॥
सचावतीर्णःकिल सात्वतान्वये,
स्वसेतुपालामरवर्य्यशर्म्मकृत्।
यशोवितन्वन् व्रज आस्तईश्वरो-
गायन्तिदेवा यदशेषमङ्गलम् ॥२२॥
तन्त्वद्यनूनं महतां गतिं गुरुम्,
त्रैलोक्यकान्तं दृशिमन्महोत्सवम्।
रूपं दधानं श्रियमीप्सितास्पदम्,
द्रक्ष्ये ममासन्नुषसः सुदर्शनाः ॥२३॥

यस्येति। अमीवं पापं घ्नन्तीत्यमीवहानि तैः प्राणन्ति जीवयन्ति शुम्भन्ति शोभयन्ति। अन्तर्भावितनिजर्थोत्तत्र प्राणि शुम्भती ... तद्विरक्ताः विष्णुगुणादिहीनाः। शवशोभनाः शवालङ्करणानि ॥१०।३८।१२ (२१)

स इति। स विष्णुः। सात्वतान्वये यदुवंशे किल प्रसिद्धौ यद् यशः अशेषाणि मङ्गलानि यस्मिन् यशसि ॥१०।३८।१३ (२२)

तमिति। गुरुमुपदेष्टारम्। गतिं प्राप्यम्। दृशिमतांविशाल-दृष्टीनाम्। महानुत्सवोयस्माद्रूपात्। उषसः प्रातःकालस्य सम्बन्धिनः सुप्रशस्तदर्शनाः दध्याज्यदूर्व्वादयः। उषसि मयैते दृष्टा इत्यर्थः ॥१०।३८।१४ (२३)

अथावरूढ़: सपदीशयोरथात्,
प्रधान पुंसोञ्चरणं स्वलब्धये ;
धियाधृतं योगिभिरप्यहंध्रुवम्,
नमस्य आभ्याञ्च सखीन् वनौकस: ॥२४॥
अप्यङ्घ्रिमूले पतितस्य मे विभु:,
शिरस्यधास्यन्निजहस्त पङ्कजम् ।
दत्ताभयं काल भुजङ्गरंहसा,
प्रोद्वेजितानां शरणैषिनां नृणाम् ॥२५॥
समर्हणं यत्र निधाय कौशिक-
स्तथाबलिश्चाप जगत्त्रयेन्द्रताम् ।
यद्वाविहारे ब्रजयोषितांश्रमम्,
स्पर्शैनसौगन्धिक गन्धमपानुदत् ॥२६॥

---

अथेति । अथ दर्शनानन्तरम् । ईशौ रामकृष्णौ, प्रधान पुंसो: प्रकृतिपुरुषयो: स्वलब्धये आत्मप्राप्तेय । आभ्यामनयो: ॥ १०।३८।१५ (२४)

अपीति । अधास्यत् धास्यति । किमिति काकागम्यते ॥१०।३८।१६(२५)

समिति । यत्र हस्तपङ्कजे । कौशिक इन्द्र: । विहारेरास-क्रीड़ायां सौगन्धिकंकल्हारं तद्वद्गन्धोयस्य तत्तथा । अपानुदद् अपाचकार ॥१०।३८।१७ (२६)

न मय्युपैष्यत्यरिबुद्धिमच्युतः,
कंसस्य दूतः प्रहितोऽपि विश्वदृक्।
योऽन्तर्बहिश्चेतस एतदीहितम्,
क्षेत्रज्ञ ईक्षत्यमलेन चक्षुषा ॥२७॥
अप्यङ्घ्रिमूलेऽवहितं कृताञ्जलिम्,
मामीक्षिता सस्मितमार्द्रया दृशा।
सपद्यपध्वस्तसमस्तकिल्बिषो-
वोढा मुदं वीतविशङ्क ऊर्जिताम् ॥२८॥
सुहृत्तमं ज्ञातिमनन्यदैवतम्,
दोर्भ्यां बृहद्भ्यां परिरप्स्यतेऽथमाम्।
आत्माहितीर्थीक्रियते तदैवमे-
बन्धश्च कर्म्मात्मक उच्छ्वसित्यतः ॥२९॥

---

नमयीति। उपैष्यत्। उपैष्यति। यद्यपि कंसस्यदूतः प्रहितस्तेनैवाहम्। यतोविश्वदृक्। तदेवाह योऽन्तरिति एतस्य जनस्येहितं चेष्टाम्। अमलेन चक्षुषा प्रज्ञानदृष्ट्या ॥१०।३८।१८ (२७)

अपीति। अवहितं अङ्घ्रिमूलं विषयीकृतावधानं ईक्षिष्यते। वोढाहं भविष्यामि। वहे स्त्रोणिरूपम्। नतुलुटि वोढाऽस्मीति हितन्न स्यात् ॥१०।३८।१९ (२८)

सुहृत्तममिति। सुहृत्तममतिमित्रम्। ज्ञातिं सम्बन्धिनम्। अनन्यदैवतं भक्तम्। परिरप्स्यते। आलिङ्गिष्यति। आत्माशरीरम्। तीर्थीक्रियते सर्व्वपावनार्थत्वात्। कर्म्मात्मकोबन्धः पुण्य पापग्रन्थि उच्छ्वसिति शिथिलोभवति। अतः परिरम्भात् ॥१०।३८।२० (२९)

लब्धाङ्ग सङ्गं प्रणतं कृताञ्जलिं
मां वक्ष्यतेऽक्रूर ततेत्युरुश्रवाः।
तदा वयं जन्मभृतो महीयसा
नैवादृतो यो धिगमुष्य जन्म तत् ॥३०॥
न तस्य कश्चिद्दयितः सुहृत्तमो
न चाप्रियो द्वेष्य उपेक्ष्य एव वा।
तथापि भक्तान् भजते यथा तथा
सुरद्रुमो यद्वदुपाश्रितोऽर्थदः ॥३१॥
किन्त्वाग्रजोमावनतंयदूत्तमः
स्मयन् परिष्वज्य गृहीत मञ्जलौ।

लब्धाङ्गेति। हे अक्रूर! हे तात! सत्युरुश्रवाः ख्यातकीर्त्तिः ततस्तत्कर्त्तृकं सम्भाषणमपेक्षतेत्यर्थः। जन्मभृतः श्लाघ्यजन्मानः। योहि महीयसा नादृतः। तस्यतत्तथाविध मपि जन्म धिक्निन्दित मित्यर्थान्तरन्यासः ॥१०।३८।२१ (३०)

नन्वस्य कुतोमहीयस्त्वम्? मित्रामित्र विकल्पवत्त्वात्। अत-आह। न तस्येति। दयितोनिरुपाधिः स्नेहस्यास्पदं सुहृत्तमः सोपाधिकस्याप्रिय अरुचिमात्रस्य द्वेष्यः। अपकारस्यापि उपेक्ष्यः औदासीन्यस्यापि। कथन्तर्हिं भक्तेषु वत्सलत्वम् तत्राह। तथेति। यथायथावत् यद्वत्। सुरद्रुम उपाश्रित एवार्थदः। तथातेन प्रकारेणायमित्यर्थः। सेवाकृतं वैषम्यं नतु। सम्प्रज्ञातम् इति प्रागुक्तम् ॥१०।३८।२२ (३१)

शिवाः ।

अयं त्वत् कथा-ृष्ट पीयूष नद्यां
मनो वारणः ेशदावाग्नि दग्धः ।
ाता ऽवगा ेनसस्मार दावं
न निष्क्रामति ब्रह्म सम्पन्नवन्न ॥२६॥

मुचुकुन्दः ।

भवापवर्गो भ्रमतो यदा भवे-
ज्जनस्य त ्युत सत् समागमः ।
सत् सङ्गमोयर्हि तदैव सद्गतौ-
परावरेशे त्वयिजायते मतिः ॥२७॥
मन्ये ममानुग्रह ईश ते कृतो-
राज्यानुब ापगमा यदृच्छया ।

---

शिवाः । अयमिति । मृष्टं निर्मलं मन एव वारणोगजः । क्लेशाः अविद्यादयः पञ्च अवगाढोमग्नः । दावं प्रागजातम् । ब्रह्म सम्पन्नवत् समाधिस्थवत् । शिवा भगवन्तम् ॥४।७।३५ (२६)॥

मुचुकुन्दः । एवं ......ण भक्तिरसमनुभवतः सर्व्वानर्थ निवृत्तिरर्थप्राप्तिश्च स्यादित्याशयवानभ्यर्हितत्वादर्थप्राप्तिमेवा ह । भवेति । भवापवर्गः संसारनिवृत्तिः । तर्हितदा यर्हियदा परे सत्साधवः । अपरे जीवाः ॥१०।५१।५२ (२७)

नर्थनिवृत्तिमाह । मन्य इति । ते त्वया अनुबन्धः सम्बन्धः ।

यः प्राप्तैति साधुभिर्विचिन्त्य या
वनं विविक्तद्धि रखण्ड भूमिपे ॥३८॥

इति श्रीवोपदेव कृते मुक्ताफले विष्णुभक्तानां
शान्तरसो नाम सप्तदशोऽध्यायः ॥

---

यदृच्छया अकस्मात्। विविक्तद्धि वेष्टुमिच्छद्भिः। अखण्डभूमिपैः सार्व्वभौमैः। एकचर्य्यया एकाकित्वेन। मुचुकुन्दः श्रीकृष्णम् ॥१०।५१।५४ (३८)

इति हेमाद्रिविरचितायां कैवल्यदीपिकायां विष्णुभक्तानां
शान्तरसो नाम सप्तदशोऽध्यायः ॥

## अष्टादशोऽध्यायः ।



### अद्भुतरसे श्रीदामा ।

नूनं बतैतन्मम दुर्भगस्य

शश्वद्दरिद्रस्य समृद्धि हेतुः ।

महाविभूतेरवलोकतोऽन्यो

नैवोपपद्येत यदूत्तमस्य ॥१॥

नन्वब्रुवाणो दिशते समक्षं

याचिष्णवे भूर्य्यपि भूरिभोजः ।

अथ दिव्यदर्शनोत्थित मनोरथावाप्त्युपवन देवकुलादिगमनसभा-विमान माहेन्द्रजालातिशायि शिल्पकर्म्मादि विभावं नयन विस्तारा निमिषेक्षण रोमाञ्चाश्रु स्वेद साधुवाद दान हाहाकरण वेलाङ्गुलि भ्रमणाद्यनुभावं हर्षावेग जडतादि सञ्चारिणम् चित्तविस्तारात्म-विस्मय-स्थायिभावं अद्भुतरसं प्रस्तौति। अद्भुतेति। श्रीदामेति। नाममूलेऽप्रयुक्तमपि (१) "श्रीदामारङ्गभक्तार्थं भूम्यांनीतेन्द्र वैभवम्" इति पद्मपुराणस्थ सहस्रनाम दृष्टेः प्रयुक्तम्। नूनमित्यादि। बतेति विस्मयद्योतकोनिपातः। एतन्नूनं एतत् (किं) यद् यदूत्तमस्याव-लोकादन्यो मम समृद्धे र्हेतुर्नोपपद्येत न घटेतैव। विभूतिरैश्वर्य्यम्। अन्यस्य समृद्धि-हेतुत्वाभावे कारणमाह। दुर्भगस्येति। भगो-भाग्यम् अतएव दरिद्रः ॥१०।८०।३३ (१)

नन्वेवञ्च तस्येदस्यावलोकस्तर्हि किमिति विद्याभ्याससमये

---

(१) पद्मपुराणे श्रीविष्णोः सहस्रनाम्नि ।

पर्ज्जन्य वत्तत्स्वयमी ~ माणो-
दाशार्हकाणा ऋषभः सखा मे ॥२॥
किं [illegible]ल्व्वपि यत् स्वदत्तं
सुहृत् कृतं फल्ग्वपि भूरिकारी ।
मयोपनीतं पृथुकैकमुष्टिं
प्रत्यग्रहीत् प्रीतियुतो महात्मा ॥३॥
तस्यैवमे सौहृदसौख्य मैत्री-
दास्यं पुनर्ज्जन्मनि जन्मनि स्यात् ।

---

तव सम्पन्नाभूत् इत्यत् आह । नन्विति । भोजवंश्यत्वाद्भोजः (१) श्रीकृष्णः । अभूरि अल्पमपि याचिष्यावे याचमानाय । समर्थं-दत्वाप्रीत्यद्गुणागोऽर्थात् परोक्षं भूरि मनुजंदिश्यते ददाति । यथा पर्ज्जन्यः लोकमभ्यर्थितोमहाशयतया भूय्येव प्रयच्छति । तथाऽयं यत् याचनं स्वयमेव याचकं प्रतीक्षमाण इत्यर्थः । दाशार्हकाः यादव विशेषाः ऋषभः श्रीकृष्णम् ॥१०।८०।३४ (२)

इष्टान्तव्यंजितां महाशयतां एव पुनराह किञ्चिदिति । अथ बहुपि स्वदत्तं किञ्चित्त्वं करोति । सुहृत्कृतं स्वत्कृतं फल्ग्वपि भूरिकारी भूरिकरिष्यामीत्येवं शील । यतो मयोपनीत मानीतं पृथुकानां चिपिटकानां एकमुष्टिं स्वीकृतवान् ॥१०।८०।३५ (३)

तस्मादयमिदं भूतस्तस्मादिदमस्तीत्याह । तस्येति । सौहृदा-दीनां द्वन्द्वैक्यम् । सौहृदं शरीरसम्बन्धः । सख्यं सद्भावः ।

---

(१) भागवतम् १०।२।१८ इत्यत्रिम् श्लोके भोजेन्द्र पदेन कंस एवोद्दिष्टः । तत्रैव राजेन्द्रात्मपतित्वं भोजवंश्यत्वमनुमीयते । अतएव भगवतोऽपि भोजवंश्यत्वं । इचिवंशस्य शाखा-भूतोभोजवंशः । इचि यादव भोज यदुरिति पर्यायः ।

महानुभावेन गुणालयेन
विषज्जतस्तत् पुरुषप्रसङ्गः ॥४॥
भक्ताय चित्रा भगवान् हि सम्पदो
राज्यं विभूतीर्नसमर्थयत्यजः ।
अदीर्घबोधाय विचक्षणः स्वयं
पश्यन् निपातं धनिनां मदोद्भवम् ॥५॥

शुकः ।

इत्थं सतां ब्रह्म सुखानुभूत्या
दास्यं गतानां परदैवतेन ।

---

मैत्री परस्परोपकार कर्त्तृत्वम् । गुणालयः प्रधानम् । महानुभावो महदादिकार्य्यरूपः प्रभावोयस्यतेन । विषज्जतः उच्चावच योनिं गच्छतः । प्रकृतिवशात् संसरत इत्यर्थः । तत्पुरुषा वैष्णवाः ॥१०।८०।२६ (४)

ननु भक्तवत्सलस्येदयं तर्हिस्वयमेव सम्पदः किंभक्तेभ्यो न वितरतीत्यत आह भक्तायेति । सम्पदोगजतुरगादयः । राज्यं राज्ञः कर्म्म निग्रहादि । पाटवं विभूतिमणिमाद्यैश्वर्य्याणि । न समर्थयति । अदीर्घबोधायापक्वज्ञानाय भक्ताय । पक्वज्ञानस्य तु इच्छैव नास्ति । यदृच्छया चागताः सम्पद स्तंनाभिभवितुं समर्थाः । स्वयं विचक्षणः प्राज्ञः । सम्पत्सङ्गादेवतस्य विमुखो माभूदिति विमर्शवत्त्वात् विचक्षणत्वम् । अत्र (अतएव) वतेति द्योतितो विस्मयः । स्थायी मनोचितोऽवाप्तिर्विभावः । साधुवादोऽनुभावः । सञ्चारिणः ऊह्या एव मन्यव ॥१०।८०।२७ (५)

मायाश्रितानां नरदारकेण

साकं विजह्रुः कृत पुण्यपुञ्जाः ॥६॥

यत् पादपांशुर्बहुजन्म कृच्छ्रतो-

धृतात्मभिर्योगिभिरप्यगम्यः ।

स एव यद्दृग् विषयः स्वयं स्थितः

किं वर्ण्यते दिष्टमतोव्रजौकसाम् ॥७॥

नैतद्विचित्रं मनुजार्भमायिनः

परावराणां परमस्य वेधसः ।

अघोऽपि यत् स्पर्शनधौत पातकः

प्रापात्मसाम्यं त्वसतां सुदुर्लभम् ॥८॥

सकृद्यदङ्गप्रतिमान्तराहिता

मनोमयी भागवतीं ददौगतिम् ।

---

इत्थमिति। गोपाः श्रीकृष्णेण सार्द्धं विजह्रुः। इत्थं अङ्ग स्पर्शनादिभिः। सतां ब्रह्मविदाम्। ब्रह्मसुखानुभूत्या ब्रह्माख्य-सुखानुभवरूपेण। नरदारको नन्दनन्दनः॥१०।१२।११ (६)

यदिति। बहुषु जन्मसु यत्कृच्छ्रन्तपः प्रभृतिः तेन धृतात्मभिः जितेन्द्रियैः। यत्पादपांशु यत्पादरजः स एव यद्दृग्विषयः। न तु पांशुःदिष्टं (अदृष्टम्) दैवं। अहो आश्चर्य्यं॥१०।१२।१२ (७)

नैतदिति। एतद्गोपैः सहक्रीड़नम्। मनुजार्भमायिनः मनुष्यबालरूपाः मायाः स्वीकृतवन्तः। परावराणां कारण कार्य्याणां। वेधसः कर्त्तुः। परमस्य कर्त्रन्तररहितस्य। अघो अघासुरः साम्यमित्येवोक्ते सारूप्यंस्यादत उक्तं प्रापेति॥१०।१२।१८ (८)

स एव नित्यात्म सुखानुभूत्यभि-
व्युदस्तमायोऽन्तर्गतो हि किंपुनः ॥९॥

ब्रह्मा।

तदस्तु मे नाथ स भूरिभागो
भवेऽत्र वान्यत्र तु वा तिरश्चाम्।
येनाहमेकोऽपि भवज्जनानां
भूत्वा निषेवे तव पादपल्लवम् ॥१०॥
अहोऽतिधन्या व्रजगोरमण्यः
स्तन्यामृतं पीतमतीव ते मुदा।

सकृदिति। यदङ्ग प्रतिमा यत् स्वरूप प्रकृतिः। भागवतीं स्थितिं ददाति। स एव साक्षात् दृष्टो ददातीति किंपुनः अन्तर्हृदये आहिता निक्षिप्ता। मनोमय्यपि मनः परिणाम रूपापि। नित्यस्यात्मसुखस्यानुभूत्या अभितो व्युदस्ता यया पुनर्नोदिति। तथा हिंसिता माया येन स तथा। अत्र च गोपानामलौकिकेन भगवता सह विहारेणाघासुरस्य भगवत्सायुज्येन विभावेन जातविस्मयः। शुकेनानुभूतस्तत् साधुवाद स्तवानुभावः। शुकः ॥१०।१२।३९ (९)

तदिति। तत् तस्मात् यस्माद्भक्त्या सुलभत्वं (त्वम्) भूरिभागो बहुभाग्यः भवोजन्म। अत्र गोकुले येन भवेन तिरश्चां तिर्य्यग् जातीयानां भवज्जनानां मध्ये अहमप्येकोभूत्वा तव पादपल्लवम् निषेवे ॥१०।१४।३० (१०)

अहोइति। रमण्यो गोप्यः। गवां वत्सरूपेण रमणीनामात्मरूपेण यस्य तव हृप्तये अध्वरा अद्यापिनालं समर्थाः ॥१०।१४।३१(११)

यासां विभो वत्सतरात्मजात्मना
यत्तृप्तयेऽद्यापि न चालमध्वराः ॥११॥
अहो भाग्यमहोभाग्यं नन्दगोपव्रजौकसाम् ।
यन्मित्रं परमानन्दं पूर्णं ब्रह्म सनातनम् ॥१२॥
एषान्तु भाग्यमहिमाच्युत तावदास्ता
मेकादशैव हि वयं वत भूरिभागाः ।
एतद्धृषीकचषकैरसकृत्पिबामः
शर्वादयोऽङ्घ्र्युदजमध्वमृतासवं ते ॥१३॥
तद्भूरिभाग्यमिह जन्म किमप्यटव्यां
यद्गोकुलेऽपि कतमाङ्घ्रिरजोऽभिषेकं ।

---

अहो इत्यादि वीप्सा आदरार्थः। यत् येषां पूर्णं व्यापकम् ॥ १०।१४।३२ (१२)

एषामिति। एषां व्रजौकसां। महिमा महत्त्वम्। शर्वादयो वयम्। वत आश्चर्ये। भूरिभागाः बहुभाग्याः। शर्वो रुद्रः। कुतो भूरिभागाः। हि यस्मात् वयं एकादश साहङ्कारेन्द्रिय देवताः। ताश्च "दिग्वातार्क प्रचेतोऽश्वि वह्नीन्द्रोपेन्द्रमित्रकाः"। अहङ्कारो रुद्रः। एतद्धृषीकचषकैः एषामिन्द्रियैरेव पानपात्रैः। असकृत्सदा अङ्घ्र्युदजं मधु, अङ्घ्रिकमले मकरन्द एवामृतं निर्वृतिहेतुत्वात्। आसवो मद्यं अवस्थान्तरजनकत्वात् ॥१०।१४।३३ (१३)

तदिति। इहाटव्यां यत्किमपि तर्व्वादिरूपेण जन्म तद्भूरिभाग्यम्। किम्भूतं यत्कतमस्य किंजातीयस्य कस्यापि गोकुलवासिनः। अङ्घ्रिरजसोऽभिषेको यस्मिन् तर्व्वादिजन्मनि। किम्भूतः

यज्जीवितन्तु निखिलं भगवान् मुकुन्द-
स्त्वद्यापि यत् पदरजः श्रुतिमृग्यमेव ॥१४॥
एषां घोषनिवासिनामुत भवान् किन्देव रातेति नः,
चेतो विश्वफलात् फलं तदपरं कुत्राप्ययं मुह्यति।
सद्वेषादिव पुतनापि सकुला त्वामेव देवापिता,
यद्धामार्थसुहृत्प्रियात्मतनयप्राणाशयास्त्वत्कृते ॥१५॥

---

कतमः यस्य जीवितं मुकुन्दः। जीवितवन्मुकुन्दोयस्य प्रियतमः इत्यर्थः। किम्भूतोमुकुन्दः यस्य पादरजः श्रुतिभिर्वेदैर्मृग्यमेव। अत्रैवशब्दोहि सन्दिग्धार्थवाचि एव शब्दान्न तु कदामृगितमित्यर्थः॥ १०।१४।३४ (१४)

एषामिति। उत अहो। देवघोषे गोकुले। किं फलं एतद्दास्यत्यस्मिन्नर्थे। अस्माकं चेतोमुह्यति। यतोविश्वस्य फलभूतात् त्वद्भवतः सकाशादपरं फलम् अयत् (न) गत्यर्थानां धातूनां ज्ञानार्थत्वादजानादित्यर्थः। इनः शतरिरूपम्। आत्मानमेवदास्यामीति चेत्तत्राह। सदिति। सतः प्रशस्तात् सम्पूर्णात् द्वेषात् विरोधादिति यावत्। एवशब्दोऽप्यर्थे। पूतनात्वामेवापिता प्राप्ता अपिः चुरादौ (दिः)। भादीपव्यमानोच्छिसेट् (धातुः) किं एकाकिन्येव प्राप्ता नेत्याह। अपि सकुलेति। कुलंवकोऽघासुरस्य येषां घोषनिवासिनाम्। धामाद्यास्त्वत्कृते त्वदर्थम्। धामगृहम् अर्थः पश्वादि। ततः सुहृत् पिताऽनेन माताऽप्युपलक्षिता। आत्माजीवः प्राणा इन्द्रियाणि प्राप्नोतिव्युत्पत्त्या। आशया अन्तःकरणानि। य एवात्मादिषड्गो दीयते स एवानुरक्तेभ्यो दीयत इत्यनुचितमित्यर्थः॥१०।१४।३५ (१५)

तावद्रागादयःस्तेना स्तावत् कारागृहं गृहम्।
तावन्मोहोऽङ्घ्रिनिगड़ो यावत् कृष्ण न ते जनाः ॥१६॥

उद्धवः।

एताः परं तनुभृतो भुवि गोपवध्वो,
गोविन्द एव निखिलात्मनि रूढ़भावाः।
वाञ्छन्ति यत् भवभियो मुनयो वयञ्च
किं ब्रह्मजन्मभिरनन्तकथारसस्य ॥१७॥
क्वेमाः स्त्रियो वनचरीर्व्यभिचारदुष्टाः
कृष्णे क्वचैष परमात्मनि रूढ़भावः।

---

तावदिति। रागादीनां स्तेनत्वादिकं तावदेव। यावत् त्वत्-कथा नास्ति प्रवृत्तायां कथायान्तु तत्रास्तीत्यर्थं कारागृहं बन्धन स्थानम्। जना भो जनाम्। अत्राङ्गतहेतुः ताव्वत् ॥१०।१४।३६ (१६)

एता इति। परं केवलं भुवि एतास्तनुभृतो नान्ये शरीरधारणा मामामेव सफलमित्यर्थं यतो गोविन्द एव रूढ़भावाः। मुनयोवाचं यमत्वादिगुणयुक्ताः। वाञ्छन्ति परं न सहसा प्राप्नुवन्ति। भवभियः संसारभीरवः। वयञ्चमुनयोऽपि दास्यभावनिष्ठाः। ननु मुनीनां ब्राह्मणत्वादिना युज्यते रूढ़भावो ननु तद्रहितस्य तव गोपीनां चेत्यत आह किमिति। ब्रह्मजन्मभिर्ब्राह्मणजातिभिः। बहुवचनेन वेदा (ध्य.)ध्ययनादि ब्राह्मण गुणैरपि किमित्युक्तम्। नाग्नि-होत्रादिरद्भक्तो विप्रादिरेवाधिकारी किन्तु सर्व्वोऽपीति भावः अत-एवोक्तम् "नालं द्विजत्वं देवत्व" मित्यादि ॥१०।४७।५८ (१७)

तदेवाह क्वेमा इति। नन्वहो अनुवृत्त्या भजत अविदुषोऽपि

नन्वीश्वरोऽनुभजतोऽविदुषोऽपि साक्षात्
श्रेयस्तनोत्यगदराज इवोपयुक्तः ॥१८॥
नायं श्रियोऽङ्ग उ नितान्तरतेः प्रसादः
स्वर्योषितां नलिनगन्धरुचां कुतोऽन्याः।
रासोत्सवेऽस्य भुजदण्डगृहीतकण्ठ-
लब्धाशिषां य उदगाद् व्रजवल्लभीनाम् ॥१९॥
आसामहो चरणरेणुजुषामहं स्यां
वृन्दावने किमपि गुल्मलतौषधीनाम्।
या दुस्त्यजं स्वजनमार्य्यपथञ्च हित्वा
भेजुर्मुकुन्दपदवीं श्रुतिभिर्विमृग्याम् ॥२०॥

---

प्रभावमजानतोऽपि गतानुगतिकतया सेवमानस्यापि साक्षाच्छ्रेयः कैवल्यम्। यथाह्यगदराजो रस रसायनादिरुपयुक्तो गृहीतः सुष्ठु-विदुषोऽपि श्रेयः पुष्ट्यारोग्यादि तनोति। तथैवायं वस्तुशक्तिरेवे-हशोतिभावः ॥१०।४७।५८ (१८)

नायमिति। उरसि नितान्तमत्यर्थम्। रतिः रमणं यस्याः। श्रियः व्यतयय स्मरणात् रहिताः। नलिनवद्गन्धः परिमलोरुचिः कान्तिश्च यासां पद्मिनीनामित्यर्थः। रासोत्सवे रासक्रीडायाम्(इत्यर्थः) अस्य श्रीकृष्णस्य यः प्रसादो व्रजवल्लभीनां गोपीनामुदगादुदितः। भुजदण्डैर्गृहीता आश्लिष्टाः कण्ठायासां अतएव लब्धाशिषः प्राप्त मनोरथ फलाः ॥१०।४७।६० (१९)

आत्मनो गोपीतुल्यत्वं दुर्लभं मत्वा तत्पादरजः सम्पर्कं मप्या-शास्ते। आसामिति। गुल्मादीनां मध्ये किमपिस्यां भवेयमिति

याऽवै श्रियार्च्चितमजादिभिराप्तकामै-
र्योगेश्वरैरपि यदात्मनि रासगोष्ठ्याम् ।
कृष्णस्य तद्भगवतश्चरणारविन्दं
न्यस्तं स्तनेषु विजहुः परिरभ्य तापम् ॥२१॥
वन्दे नन्दव्रजस्त्रीणां पादरेणुमभीक्ष्णशः ।
यासां हरिकथोद्गीतं पुनाति भुवनत्रयम् ॥२२॥

प्रह्लादः ।

नेमं विरिञ्चो लभते प्रसादं
न श्रीर्न शर्व्वः किमुतापरेऽन्ये ।
यन्नोऽसुराणामसि दुर्गपालो
विश्वाभिवन्द्यैरभिवन्दिताङ्घ्रिः ॥२३॥

---

प्रार्थनायांलिङ् । गुल्मादयो हि गोपीनां चरणरेणून् जुषन्ते । अहमपि तथा भविष्यामीत्यर्थः । गुल्मः स्तम्बः । याः गोप्यः । आर्यपथं साधुमार्गम् ॥ १०।४७।६१ (२०)

अजो ब्रह्मा आत्मनि बुद्धितल्पे योगीश्वरैरर्च्चितं ध्यातमित्यर्थः । चरणारविन्दस्य कामार्थमोक्षदातृत्वमस्तीति क्रमात् श्रियादिभिस्त्रिभिस्तु तीयान्तैरुक्तम् । आप्तकामा अपि प्राप्तैश्वर्य्यस्य निर्व्वाहार्थं भजन्ते । तत्तथाविधं स्तनेषु न्यस्तं संलग्नं यथास्यात्तथा परिरभ्य गाढमालिङ्ग्येत्यर्थः ॥१०।४७।६२ (२१)

किं बहुनेदमत्र युक्तमित्याह वन्द इति । अभीक्ष्णशः वारंवारम् । उद्गीतं (थं) उद्गानम् ॥ १०।४७।६३ (२२)

नेममिति । ते तव प्रसादं अपर इन्द्रादयः । विरिञ्च्यादिभि-

यत् पादपद्ममकरन्द निषेवणेन
ब्रह्मादयः शरणदाश्नुवते विभूतीः।
कस्माद्वयं कुसृतयः खलयोनयस्ते
दाक्षिण्य दृष्टि पदवीं भवतः प्रणीताः ॥२४॥
चित्रंतवेहित मिहोऽमित योगमाया-
लीलाविसृष्ट भुवनस्य विशारदस्य।
सर्व्वात्मनः समदृशो विषमः स्वभावो
भक्तप्रियोयदसि कल्पतरुस्वभावः ॥२५॥

---

त्रिभिः प्रथमान्तैः पुत्र मित्र कलत्रेषु अपि तेनैवंविधं प्रसाद इत्युक्तम्॥ ८।२३।६ (२३)

विश्वामि (त्रि) वन्यतामेवाह यत्पादेति। हे शरणद। अश्नुवते प्राप्नुवन्ति। वभुतीरैश्वर्य्याणि। खलयोनयः कुजन्मानः। कुसृतयो दुराचाराः। एवं भूता अपि वयं ते त्वया॥ ८।२३।७ (२४)

चित्रमिति। अहोदेव एतत्तवेहितं वेष्टितं चित्रं यत् समदृशोऽपि तव विषमः स्वभावः। कुतः समदृक्त्वम् यतः सर्वात्मा। तदेव कुतः यतोऽऽमितत्वत्त्वत्तो भेदादिभिरणिरुक्ता यायोगमाया तया लीलार्थम् क्रीड़ार्थं विसृष्टं भुवनं एव येन सतथा। तव मायया-ऽभिभूतत्वात् वैषम्य माचरसि (जीवा यथाभिभूता आचरन्ति तथा न च मायया) यतो विशारदः अविलुप्त (लुप्त) ज्ञानः। किन्तु वैषम्यम्? यत् सर्व्वमयत्वेऽपि भक्तेषु प्रीतिर्न चैतद्दोषाय यतः कल्प-

अक्रूरः ।

अद्येशनो वसतयः खलुभूरि भागाः
य: सर्व्वदेव पितृभूत नृदेवमूर्त्तिः ।
यत् पादशौच सलिलं त्रिजगत् पुनाति
स त्वं जगद्गुरुरधोक्षज याः प्रविष्टः ॥२६॥

कः पण्डितस्त्वदपरं शरणं समीयाद्
भक्तप्रियादृतगिरः सुहृदः कृतज्ञात् ।
सर्व्वान् ददाति सुहृदो भजतोऽभिकामा-
नात्मानमप्युपचयापचयौ न यस्य ॥२७॥

---

तत्स्वभावः त्वं सहि सेवकस्येव (कस्यच) फलं ददानोऽपि न विषमः । प्रह्लादो भगवन्तम् ॥८।२३।८ (२५)

अद्येति । हे ईश ! अद्यनो वसतयोगृहाः । खलु निश्चितं न श्रुतिमात्रम् । नरोमनुष्यः । तव प्रवेशात् पञ्च महायज्ञ निर्वाप-श्रेयोऽस्माभिर्लब्धं । इति वेदादिभिः पञ्चभिरुक्तम् । त्रिजगत्त्रि-भुवनम् । जगतोगुरुः पिता । नो वसनोः ॥१०।४८।२५ (२६)

कः इति । त्वत्तः (त्वत्) भगवतः सकाशात् अपरं पुरुषं शरणं रक्षकं पण्डितोभूत्वा कः समीयाद् गच्छेत् न कोऽपीत्यर्थः । त्वं हि भक्तप्रियः सेवकवत्सलः न तद्गुण्यः न च स्नेहलोपिभूत्वा सेवा-तारतम्यं नवेत्सि । यतः कृतज्ञः । न च कृतज्ञोऽपि प्रतिश्रुतं न प्रयच्छति । यत ऋतगीः सत्यवाक् । न च कलुषितेन मनसा ददासि । यत. सुहृत् । नचासमृद्धः यतो भवान् सुहृदः शुद्धहृदयस्य भजतः सर्व्वान् कामान् ददाति (सा) आत्मानञ्च यस्यात्मनः उपचयापचयौ वृद्धिनाशौ नस्तः तं कूटस्थमित्यर्थः ॥१०।४८।२६ (२७)

दिष्ट्या जनार्द्दन भवानिह नः प्रतीतो
योगेश्वरैरपि दुरापगतिः सुरेशैः ।
छिन्ध्याशु नः सुत कलत्र धनाप्तगेह-
देहादिमोहरशनां भवदीय मायाम् ॥२८॥

अक्रूरः ।

नैवम्विधः पुरुषकार उरुक्रमस्य
पुंसां तदङ्घ्रिरजसा जितषड्गुणानाम् ।
चित्रं विदूर विगतः सकृदाददीत
यन्नामधेयमधुना सजहाति बन्धम् ॥२९॥

इति श्रीवोपदेवकृते मुक्ताफले विष्णुभक्तानां
अद्भुतरसोनामाष्टादशोध्यायः ॥

---

दिष्ट्येति दिष्ट्यादैवेन इह जन्मिनः । अस्मान् प्रति इतः आगतः प्रकटीभूत इत्यर्थः । कुतोदिष्ट्या यतो योगेश्वरैरपि सुरेशैरपि दूरापगतिः । समाधि सम्पन्नै देवैरपि दुर्व्विज्ञातः कावार्त्ताऽन्येषाम् आशु शीघ्रं । जन्मान्तरे सुतादि मोह एव रसनारज्जुः । तां सान्धि भवदीया माया त्वदायत्ता । त्वञ्च जनार्द्दनः । जनमुत्पत्तिं आर्द्दयसि मोचयसि मोक्षद इत्यर्थः । जनेऽर्थज् "जनिबध्योश्चे त्यप्रत्ययः ॥१०।४८।२७ (२८)

अक्रूरः भगवन्तम् ।

एवम्भूतरसेन भजतो वैराग्यादिगुणा भवन्तीत्याह । नैवमिति ।

उरुक्रमस्य सम्बन्धिनां पुंसाम्। प्रियव्रतादिनामिवम्बिधोरजन्या अपि दिनत्वकरणादिः पुरुषकारः सामर्थ्यं न चित्रं जिताः यथा-मिन्द्रियाणां गुणाः विषयाः शब्दादयो यैस्ते तथा। कुतो न चित्रम्। यतो यस्य उरुक्रमस्य नामधेयम्। यः सकृदाददीत। स विदूर विगतो जात्यपकर्षं प्राप्तः। अन्त्यजोऽपि स्वस्यान्येषां बन्धं (वान्धवम्) अधुना कलिकालेऽपि किंपुनः कृतादौ जहातीत्यस्य चित्रतमत्वात् न पूर्व्वस्य चित्रत्वमिति भावः। शुकः ॥५।१।३५ (२८)

इति हेमाद्रिकृतायां कैवल्यदीपिकायां विष्णुभक्तानाम्
अद्भुतरसोनामाष्टदशोऽध्यायः।

## ऊनविंशोऽध्यायः ।



### वीररसे वलिः ।

मनस्विनः कारुणिकस्य शोभनं
यदर्थि कामोपनयेन दुर्गतिः ।
कुतः पुनर्ब्रह्मविदां भवादृशां
ततो वटोरस्य ददामि वाञ्छितम् ॥१॥

एवं हास्यादि भक्ति भिन्न भक्तिरसानुभवावच्छेदादष्टौ भक्तान् अभिधाय सम्प्रति नवमं भक्तमभिधातुमुत्साहस्थायिनं प्रति नायक-वर्त्तिनयविनया सम्मोहाध्यवसाय वलशक्ति प्रताप-प्रभाव विक्रमा-धिक्षेपादि विभावं स्थैर्य्य धैर्य्य-शौर्य्य-गाम्भीर्य्य त्याग वैशारद्याद्यनुभावं धृति स्मृत्यौग्रगर्व्वामर्षमत्यावेग-हर्षादि सञ्चारिणं महेन्द्र देवतं गौरदेहं सत्त्व प्रधानं वीररसमारभते। वीरेति। नरादि लक्षणं तु अभिनव गुप्तपादौ (१)। स च वीरस्त्रेधा युद्ध-दान-धर्म्म-भेदात्। तत्र युद्धवीरोयथा "एतां पश्यपुरस्थलीं मिहकिल क्रीड़ा-किरातो हरः, कोदण्डेन किरीटिना सरभसं चूड़ान्तरे ताड़ितः। इत्याकर्ण्य कथाद्भुतं हिमनिधावद्रौ सुभद्रायते। मन्दं मन्द मकारि येन निजयोर्दोर्दण्डयोर्मण्डनम्।" दानवीरोद्विधा। यत्र स्थिता एव सकल सम्पदः कीर्त्त्याद्यनुसन्धानेन स्वयमर्थिसात्क्रियन्ते। स एकः। यथा "दधिक्षीर घृताम्भोधि व्यञ्जने स्पृहनीयया। मुक्ता-

(१) भरतमुनेर्नाट्य शास्त्रीयव्याख्याकारोऽभिनवगुप्तपादाः।

दानोत्सवे यस्य हुन्तकारायितं भुवा"। य एतु परितुष्टे र्दिवादिभि र्दीयमाना: साम्राज्यादि विभूतय:। सत्व प्रकर्षात् परिक्रियन्ते स उप (रि) स्थित परिहार नामा द्वितीय:। यथा सन्तुष्टेतिसृषां पुरामपिरिपौ कण्डूलदोर्मण्डलम्। क्रीड़ाक्रान्त: पुन: प्ररूढ़शिरसो वीरस्य लिप्सोर्व्वरान्। याच्चादैन्यपरान्वित यस्य कलहायन्ते मिथस्त्वंवृणु। त्वं वृणित्यभितोमुखानि सदृश ग्रीव: कथंवर्ण्यते।" धर्म्मवीरोऽपिधर्म्मस्य सकाम निष्काम भेदात् द्वेधा। यथा "अजित्वा सार्णवामुर्व्वी मनिष्ट्वा विविधैर्मखे:। अदत्वाचार्थमर्थिभ्योभवेयं पार्थिव: कथम्। इत्यत्रमखैरनिष्ट्वेति। यत्तु राज्ञा वीरस्य दया-वीराख्यमपरं भेदं ब्रुवता (१) "सत्वं मदीयेन शरीरवृत्तिं, देहेन निर्व्वर्त्तयितुं प्रसीद। दिनावसानोत्सुकबालवत्सा, विमुच्यतां धेनुरियं महर्षे" इत्युदाहृतम्। तत्तु न सम्यक् तत्र हि वत्सान्तर-वद्देहस्यापि देयत्वेन प्रसञ्जनाद्दानवीर एवायं। अ.एवायं प्रकारो दानवीर एवान्त्येनपदर्शित:। यथा "कर्णस्त्वक् [illegible] जीवं जीमूतवाहन:। ददौदधोचिरस्थोनि किमदेयं महात्मना" मिति। दयाया: कृपात्वेन करुणात्वात्। करुण प्रभेद एवाय मित्येके। तस्मादस्योक्तं भेद त्रयं एवरम्यम्। अतएवेदं सावधारणमुक्तं भरतेन। "दानवीरं धर्म्मवीरं युद्धवीरं तथैवच। रसवीरमपि प्राह ब्रह्मा त्रिविध मेवहोति (२) युद्धवीरे ("आपत्पङ्कनिमग्नानां सत्व सन्तोष मिथ्या ज्ञानं च यस्य।" य (स) स्तत्वनिश्चयरूपोऽसंमोहा-ध्यवसाय: स एव प्रधानतयोत्साह हेतु:। रौद्रे तु ममता प्राधान्या दृप्तास्त्वान्वितानुचितयुद्धाद्यपीति मोहविस्मय (प्राधान्य) मिति तयोर्व्विविक्त: पन्था:। मनस्विन इति। तदेवम्भूतान् वीर प्रभेदान्

(१) रघुवंशे द्वितीय सर्गे ४५ श्लोक:।

(२) विश्वनाथीय दर्पणे वीराया लक्षणानि सन्ति ३।२३४।

यजन्ति यज्वं क्रतुभिर्यमाहता
भवन्त आम्नाय विधान कोविदाः।
स एव विष्णुर्वरदोस्तु वा परो
दास्याम्यमुष्मै क्षितिमीप्सितां मुने!॥२॥

मनसिकृत्वा तत्र युद्धवीरदर्पेण भक्तिरसानुभवमशक्यं मन्यमानो दानवीरं दर्शयन् तस्य प्रथमभेदे त्वाले भक्तमाह। वलिरिति। अर्थिनां कुयाचकानां कामोऽभिलाषः। तस्योपनयेन पूरणेन या दुर्गतिः दारिद्र्यम् तदपि शोभनं श्लाघ्यं। अर्थीति कुत्सायामिनिः यदाहुः "भूमनिन्दा प्रशंसायां नित्ययोगेऽतिशायने। संसर्गेऽस्ति विवक्षायां भवन्तिमतुवादयः" इति। कारुणिकस्य परदुःखेन व्यथितस्य। मनस्विनः धीरस्य। महान्तमर्थराशिं दत्वाप्यनुग्रहीतमस्येत्यर्थं। यदर्थिमात्रस्यापि कामपूरणेन दुर्गतिः श्लाघ्यते तदाकिमु वेदविदामित्याह। कुतः पुनरिति। भवादृशामित्यनेन त्वत्तुल्योयंवटुरिति उक्तम्। ततोदारिद्र्यस्य श्लाघ्यत्वादस्य वटोर्वामनस्य वाञ्छितं पदत्रयम्॥ ८।२०।१०। (१)

नायमर्थी किन्तु वटुवेषच्छन्नो विष्णुरिति चेत्तत्राह। यजन्तीति। क्रतवः प्रसिद्धाः ज्योतिष्टोमादयः। ससोमा यज्ञाः पाकयज्ञादयः प्रसिद्धाः। निःसोमाइतिहि (१) क्रतुयज्ञेभ्यश्चेति सूत्रवृत्तिकारादिभिर्विवृतम्। भवन्तो भवादृशाः। आम्नायस्यविधाने इतिकर्त्तव्यतायां। कोविदाः वरं श्रेष्ठं ददातीति वरद उपकर्त्ताऽपरोऽपकर्त्ता हे मुने शुक्र! अत्रवलेर्ददामीत्यसंमोहाध्यवसायो ब्रह्मविदामित्युपलक्षिताः। पात्रगुणास्तमनस्वितया सूचितास्यात्साऽस्य विभावाः दुर्गतावति श्लाघ्यत्वबुद्धिरित्युपलक्षिताः। धैर्यादयोऽनुभावाः। एवमिति हर्षादिकाः सञ्चारिणो ज्ञेयाः। वलिः शुक्रम्॥८।२०।११। (२)

(१) पाणिनिः ४।२।६८ सूत्रम्।

पृथुः ।

वरान् विभो त्वद्वरदेश्वराद्बुधः
कथं वृणीते गुण विक्रियात्मनाम् ।
ये नारकानामपि सन्ति देहिनां
तानीश कैवल्यपते वृणे नच ॥३॥
न कामये नाथ तदप्यहं क्वचित्
न यत्र युष्मच्चरणाम्बुजासवः ।
महत्तमान्तर्हृदयान्मुखच्युतो
विधत्स्व कर्णायुतमेष मेवरः ॥४॥

---

वरानिति द्वितीयेऽस्मिन् दानवीर प्रभेदे पृथुर्भक्तः इत्यभिप्रेत्याह पृथुरिति । (१) "वरञ्च मत्कञ्चन मानवेन्द्र) वृणोष्वतेहं गुणशील यन्त्रित" इति भगवदुक्तिं निशम्याह वरानिति । गुणविक्रियात्मनां गुणविकाररूपाणां ब्रह्मादीनां वरान् वरदेश्वरतयात्वत्तः कथं वृणीते । ब्रह्मपदादीणां विषय सुखात्मकत्वात् । विषय सुखानि च नारकानां नरक निवासिनामपि सन्ति । अतस्तान् ब्रह्मपदादिरूपान् वरान् नैव वृणेऽहम् यत स्त्वमीशः समर्थः । कैवल्यपतिश्च कैवल्यस्य-तवाधीनम् । तर्हि कैवल्य मेववृणोष्वेति चेत्तत्राह ॥४।२०।२३ (३)

न कामये इति । तदपि न कामये यत्र कैवल्ये युष्मच्चरणाम्बुजस्यासवो मकरन्दः । क्वचिदेकदेशेऽपि नास्ति भक्ति सुखं नास्तीत्यर्थः । महिमहत्तमानां अन्तर्हृदय अतति सततं गच्छतीति महत्तमान्तर्हृदयात् । अत औरूपम् । तद्धृदयान्तवर्त्ती

(१) श्रीमद्भागवत ४।२०।१६ श्लोकः ।

स उत्तमःश्लोक महन्मुखच्युतो
भवत्पदाम्भोज सुधाकणानिलः ।
स्मृतिं पुनर्विस्मृततत्त्ववर्त्मनां
कुयोगिनां नो वितरत्यलं वरैः ॥५॥
यशः शिव सुश्रव आर्य्यसङ्गमे
यदृच्छया चोपशृणोति ते सकृत् ।
कथं गुणज्ञो विरमेद्विना पशुं
श्रीर्यत् प्रवव्रे गुणसङ्ग्रहेच्छया ॥६॥

तन्मुखच्युतं चास्वाद्यन्तेऽन्यैः अतो बहुभ्योयुगपत् तदाकर्णनार्थं कर्णायुत मेव मेमह्यं विधत्स्व एष एव वरः ॥४।२०।२४ (४)

मुक्ति सुखे भक्तिसुखाभावात् भक्ति सुखे मुक्तिसुखाभावो नास्तीत्याह। स उत्तमेति। सुधाकणानां अमृतविन्दुनामनिलो दूरादपि श्रवणमित्यर्थः। विस्मृतं तत्त्ववर्त्म यैः तेषां कुयोगिनामस्माकं तत्स्मृतिं वितरति स्वरूपानुभवसुखरूपां मुक्तिन्ददातीत्यर्थः। विषेय सङ्गेऽपि मोक्षकामत्वात् कुयोगित्वम्। मुक्ति सुखेन सह भक्तिसुखं स्वभक्ताना मस्तीत्यर्थः ॥४।२०।२५ (५)

श्रवणस्य दुःसंपादकत्वात् सुसंपादकत्वेपि परिणति विरसत्वात् भक्तिसुखं दुर्लभमिति चेत्तत्राह यश इति। हे सुश्रवः सुकीर्त्ते। यदृच्छया गुरु शिष्यभावं विनापि उपशृणोति। उपश्राहतयाप्यव-धारयति। (अवध्यायति)। किम्पुनः श्रोतृतयाऽसकृद्वारम्बारम् च शब्दस्य दर्थं पशुं विनाऽन्यः कथं विरमेत् यतो गुणज्ञः। मुक्ति सुखेऽपि गुणाः सन्तीति चेत्तत्राह। श्रीरिति। श्रीः भूतिः (भक्ति) सुख स्वामिनी यद्भक्ति सुखं प्रकर्षेण वव्रे। भक्तिगुणान् संग्रह

अथाभजेत्वाखिलपुरुषोत्तमं
गुणात्तयं पद्मकरेव लालसः ।
अथावयो रेक पतिस्पृधोः कलि-
र्नस्यात् कृतत्वच्चरणैकतानयोः ॥७॥
जगज्जनन्यां जगदीशवैशसं
स्यादेव यत् कर्म्मणि नः समीहितम् ।

मुक्तिगुणेष्वाधातुमिच्छया। अत्र यशतः शिवत्वात् निर्विघ्नत्वम्। सुश्रव इति निर्द्देशस्य सम्बोधनपरत्वेऽपि विशेषणप्रधानत्वात् शोभनत्वेन सुखग्राह्यत्वं। आद्यं सङ्गमहेतुत्वात् सुलभत्वमुक्तम् ॥ ४।२०।२६ (६)

शतक्रतुत्वे शक्रस्य स्पर्द्धावत् विष्णुभक्तत्वे लक्ष्मीस्पर्द्धादोषोऽस्ति त्याह अथेति। अथशब्दः प्रश्ने। अथ कलिर्न स्यात्। अभजमिति। भजनारम्भभूतत्वाल्लट् प्रयोगः। लालस उत्कण्ठाधान्। पद्मकरेति विशेषणप्रधानो निर्द्देशः भगवदुपायनार्थं लीलाकमलधारिणीत्यर्थः। सा यथा अभजत्। त्वं हि प्रकृत्या सर्व्वपुरुषेषु उत्तमः गुणाश्च गुणाः सौन्दर्य्यादयः। अपि अहो। अहञ्च सा चावामिति विरूपत्वेऽपि त्वदादेर्मिथोद्वन्द्वे यद् यत् परं तत् स्वस्य इति वार्त्तिकादस्मच्छब्दः शिष्यते। यतः आवामेकस्मिन् वस्तौ सस्पृहौ एकपति स्पृहत्वेऽपि स्पृहायाः भिन्नप्रदेशविषयत्वेन नविरोध इति चेत् तदपि नास्तीत्याह ॥ कृतेति एकतानत्वमनन्यवृत्तित्वम्। एवं कलिविषये संशय्य स्वयमेव निश्चिनोति ॥ ४।२०।२७ (७)

जगदित्यादि। जगतो जनन्यां मातरि लक्ष्म्याम्। वैशसं चित्तक्षतः विशसनतुल्यत्वात्। यस्याः कर्म्मणि चरणसेवायां समीहितम्। सम्यग्वाञ्छा। ननु स्वस्यात्मकत्वं मत्वा वलवद्विरोधात् विभेषि-

करोषि फल्गु पृथु दीनवत्सलः
स एव धिष्णोऽभिरतस्य किं तया ॥८॥
भजन्त्यथ त्वामत एव साधवो
व्युदस्त माया गुणविभ्रमोदयम् ।
भवत् पदानुस्मरणादृते सतां
निमित्तमन्यत् भगवन् न विद्महे ॥९॥
मन्ये गिरं ते जगतां विमोहिनीं
वरं वृणीष्वेति भजन्त मात्थयत ।

चेत्तर्हि विरम्यतां अस्मादिति चेत्तत्राह । करोषीति । त्वं हि दीनेषु पक्षपातित्वात् प्रगल्भमपि सेवकं स्व संसर्गात् ( स्वसर्गात् ) पृथक् करोषि । श्रीरेवात्र निदर्शनमिति भावः । तथापि तस्याः प्रेममात्रत्वे नात्यन्त सुखसाधनत्वात् । तव च (नच) भृत्यमात्रत्वेन बहिरङ्गत्वादयुक्तः । तया सह विरोध इति चेत्तत्राह । स एवेति । स्त्रीप्रमाणेष्वन्यपुरुषेष्वेषा वार्त्ता । न तु नित्यनिरतिशयानन्दघन-ब्रह्मस्वरूपसुखसन्तुष्टे त्वयीति भावः । धिष्ण्य पदम् ॥ ४।२०। २८ (८)

अतएव देवतान्तरं हित्वा महान्त त्वामेव सेवन्त इत्याह । भजन्तीति भज्याभज्य निर्धारणानन्तरम् । अतएवेति दीनवत्सलत्वात् स्वरूपसुखसन्तुष्टत्वाच्च तदेवाह । व्युदस्तेति । व्युदस्तो दूरीकृतो माया गुणानां रजःप्रभृतीनां विभ्रमो विलासो हि । कार्य्यं रागद्वषादि । तस्योदयोह्याविर्भावो येन तम् । किमर्थं भजन्तीति चेत्तत्राह । भवत्पदेति । भवत्पदानुस्मरणमेव सतां निमित्तम् नान्यत् किञ्चित् । नित्य निरतिशयानन्दानुभवरूपत्वात् तस्येति भावः ॥ ४।२०।२९ (९)

वाचानुतन्त्या यदि ते जनोऽसितः
कथं पुनः कर्म्म करोति मोहितः ॥१०॥
त्वन्मायया ऽद्धा जन ईश खण्डितो
यदन्यदाशास्त ऋतात्मनोऽबुधः ।
यथाचरेद् बालहितं पिता स्वयं
तथा त्वमेवार्हसि नः समीहितुम् ॥११॥

सनकः ।

नात्यन्तिकं विगणयन्त्यपि ते प्रसादं
किम्वन्यदर्पित भयं भ्रुव उन्नयैस्ते !

एवं प्रसक्तोऽनुप्रसक्त्या निरूप्य प्रकृतमनुसन्धत्ते । मन्ये गिरमिति । भजन्त' भजनादेवलब्धसर्व्वोत्कर्षम् । नु अहो ते तव वाचां तन्त्या पशुबन्धनीतुल्यया जनो यद्यसितः अबद्धः स्यात् । तर्हि कथं पुनः पुनः कर्म्मकरोति ? दृष्ट रिपवो हि तद्भजनम् विहाय ॥ ४।२०।१० (१०)

यत एवं दृष्टवाग् विलासो भवान् अतो भवता भक्तान् प्रत्येवं न वाच्यं किन्तु पितृवद्धितमेव वाच्यमित्याह । त्वन्माययेति । अद्धा तत्त्वतः । खण्डितः पृथक्कृतः । ऋतात्मनः सन् परात्मरूपादबुधः देहेऽहं बुद्धिः सन्नान्यद्विषयसुखमाशास्ते वाञ्छति । अतः स्वहितं न वेत्ति । अतः स्वयमेव समीहितु' स्वहिते चेष्टयितु' भवानर्हति । सोऽयं प्रसङ्गेन भगवतादीयमाने स्वर्गापवर्गादावपि सर्व्वंस्वलत्वादनभिरुचेः पृथोरूत्साहस्थायिभावः प्रकरणेनावगम्यते । नहि क्षोवचेतसा तथाविधा वराः परिहर्त्तुं शक्याः । पृथु भंगवन्तम् । ४।२०।२१ (११)

येऽङ्गस्त्वदङ्घ्रि शरणा भवतः कथायाः
कीर्त्तन्य तीर्थयशसः कुशला रसज्ञाः ॥१२॥
कामं भवः स्ववृजिनैर्निरयेषु नस्ता
च्चेतोऽलिवद् यदि नु ते पदयोरमेत ।
वाचश्च न स्तुलसि वद् यदि तेऽङ्घ्रिशोभाः
पूर्य्येत ते गुणगुणैर्यदि कर्णरन्ध्रः ॥१३॥
नोत्तमःश्लोकवार्त्तानां जुषतां त्वत् कथामृतम् ।

---

नात्यन्ति केति। ये भवतः कथायां रसज्ञाः ते आत्यन्तिकमपि तव प्रसादं मोक्षाख्यं न गणयन्ति। किन्तु किमुतान्यत् ब्रह्मादि स्थानम् यतो (ते) भ्रुवश्च उद्भेर्भ्रुवोः कालाख्यैरर्पितभयं अर्पित भयं। कीर्त्तन्यं कीर्त्तनीयम्। रम्यत्वात् कृतार्थैं कृत्यार्थैं तवैकेन केन्य त्वनः इति कृत्यप्रत्ययः। तीर्थं पावनत्वाद्यशोयस्य। अतएव कथा श्रवणं परिणामे च सुखदा। तदङ्घ्रि शरणत्वान्नकालभयम्॥ कुशलत्वाच्चासारग्रहणम् ॥३।१५।४८ (१२)

काममिति। कामं यथेष्टं निरयेषु भवस्त्वात्। अवस्थानस्तु स्ववृजिनैरस्मत् पापे र्यदि ते पद्मवत् पदयोरलिवत् चेतोरमेत यदि तुलसीवद्वाचः तदङ्घ्रि सङ्गजनित शोभाः। यदि च कर्णरन्ध्रं तव गुणगणैः पूर्य्येत एवं सतिनरकोऽपि सुखदः। अन्यथा स्वर्गोऽपि दुःखद इत्यर्थः। काममित्यनेन कापिशूरता गम्यते। कुमारा भगवन्तं ॥३।१५।४९ (१३)

नोत्तम इति। उत्तमः श्लोको वार्त्ताभिर्र्येषां ते तथा। अतएव तत् कथामृतं सेवनेनैवाजरामरत्वम्। अतएवान्तकालेऽपि नोसम्भ्रमः

स्यात् सम्भ्रमोऽन्तकालेऽपि स्मरतां त्वत्पदाम्बुजम् ॥१४

ध्रुवः ।

भक्तिं मुहुः प्रवहतां त्वयि मे प्रसङ्गो
भूयादनन्त महतामलाशयानाम् ।
येनाञ्जसोल्वण मुरुव्यसनं भवाब्धिं
नेष्ये भवद्गुणकथामृतपानमत्तः ॥१५॥

मैत्रेयः ।

तस्मिन् प्रसन्ने सकलाशिषां प्रभौ
किं दुर्लभं ताभिरलं लवात्मभिः ।

---

न व्याकुलत्वं देहस्यानात्मत्वात् कुत्सित देहान्तर लाभ इति । चेतसा स्मरतां तत् पदाम्बुजम् । तत् स्मरणस्यान्तकालेऽपि लोपात् । तदुक्तं गीतासु (२) "यं यंवापीति" सूत: ॥१।१८।४ (१४)

भक्तिमिति । प्रशस्त: सङ्ग: प्रसङ्ग: । भक्तत्वाद्विष्णु कथाश्रावक (श्रोतृ) त्वं महत्त्वादाश्रित वत्सलत्वं अमलाशयत्वाद्बोधकत्वम् । नेष्ये अतिक्रमिष्यामि ॥४।८।११ (१५)

तस्मिन्निति । तस्मिन्विष्णौ ताभिराशीभिः अणिकाभिः यद्यपि भक्तस्याशिषः सुलभाः तथापितानकर्त्तव्या इत्यर्थः । यतो-भजनादन्यत्र फलकामनायां दृष्टिं विहाय भजतां स्वयमप्रार्थित एव स्वगतिं स्वपदप्राप्तिं विधत्ते साच परा सर्व्वेभ्यः फलेभ्यः । सर्व्वेपरः सर्वेभ्यः फलप्रदेभ्यः । न च शुद्धां अशुद्धां वा भक्तिं न जानाति

अनन्यवृत्त्या भजतां गुहाशयं
स्वयं विधत्ते स्वगतिं पर: पराम् ॥१६॥
नवैमुकुन्दस्य पदारविन्दयो
रजो जुष: तात भवादृशा जना: ।
वाञ्छन्ति तद्दास्य मृतेऽर्थमात्मनो
यदृच्छया लब्धमन: समृद्धय: ॥१७॥
भक्तिं हरौ भगवतिप्रवहन्नजस्र-
मानन्दवाष्पकलया मुहुरर्द्यमान: ।
विक्लिद्यमानहृदय: पुलकाचिताङ्गो
नात्मानमस्मरदसाविंतिमुक्तलिङ्ग: ॥१८॥

कवि: ।

शृण्वन् शुभद्राणि रथाङ्गपाणे

---

यतोगुहाशय: । सर्व्वान्त:करणस्थ । मैत्रेयो विदुरम् ॥३।१३।४८ (१६)

नवैइति । रजोरेणु: भवादृशा विदुरादय: । आत्मनोऽर्थे आत्मन: सुख साधनं ते दास्यन्ति विष्णुदास्यं मन: समृद्धीनां मनस: सुख साधनानां यदृच्छयालब्धत्वात् तान् (न) वाञ्छन्ति । निर्धन-स्यात्मभोग्यं हि निर्विषयं सुखं । तच्च विष्णुदास्यादेव ॥४।८।३६ (१७)

भक्तिमिति । असावहमित्यात्मानं नास्मरत् । यतोमुक्तलिङ्ग: तत्रलिङ्ग शरीराभिमान: ॥४।१२।१८ (१८)

जन्मानि कर्म्माणि च यानि लोके।
गौनानि नामानि तदर्थकानि
गायन्विलज्जो विचरेदसङ्गः ॥१८
एवं व्रतः स्वप्रियनामकीर्त्त्या
जातानुरागो द्रुतचित्त उच्चैः।
हसत्यथो रोदिति रौति गायः

---

शृण्वन्निति। एवं दानवीरं दर्शयित्वा (१) क्रमप्राप्तं धर्म्मवीरं दर्शयन्नभ्यर्हितत्वात् निस्कामधर्म्मवीरमेव पञ्चदशभिःपद्यै रुदाहरति। कविरित्यादिभिः। कविः। ऋषभ पुत्रे योगी हरिच रथाङ्गं-चक्रम् सरथाङ्गपाणि रथो वाच्यो येषां गीतानां नाम्नाञ्च तानि तथा। नाम्नां गानं कीर्त्तनं विचरेद्विचरति। सम्भावलेलिङ् असङ्गो विलज्ज इत्याभ्यां लोकापगणनया चित्तगतं किमप्यौदार्य्यमुक्तम्। तेनचात्रै थात्मक उत्साहोऽवगम्यते। भयमेवास्य शान्तात्भेदः। शान्तेहिमात्यन्तं लज्जादेस्तिरस्कारः। धर्म्मस्तुभगवज्जन्माद्यनुसन्धान रूपः ॥११।२।३८ (१८)

आविर्भूत धर्म्मवीरस्यानुभावानाह। एवमिति। स्वप्रियो विष्णुः। द्रुतं भक्तिरसेनक्लिन्नम्। निरीहस्य जगज्जननाद्यघटमान मिव पश्यन् हसति रोदित्वानन्दाश्रुणि मुञ्चन्ति। रौतीति भगवन्तं पुरःस्थितमिव मन्यमानो गोष्ठीं कुरुते। भक्त्यावेशाद् गायति उच्चैर्योऽस्मिभवाव्य धिमिति नृत्यति। तत् किंनटवत्ख्यापनाय नेत्याह उन्माद वदिति। (उन्माद इत्यर्थः)। उन्माद इत्यर्थ-

त्युन्मादवन् नृत्यति लोकवाह्यः ॥२०॥

खं वायुमग्निं सलिलं महीञ्च
ज्योतींषि सत्त्वानि दिशो द्रुमादीन्।
सरित् समुद्रांश्च हरेः शरीरं
यत्किञ्चभूतं प्रणमेदनन्यः ॥२१॥

शुकः।

योदुस्त्यान् क्षितिसुत स्वजनार्थदारान्
प्रार्थ्यां श्रियं सुरवरैः सदयावलोकान्।
नैच्छन्नृपस्तदुचितं महतां मधुद्विट्
सेवानुरक्तमनसामभवोऽपि फल्गुः ॥२२॥

यज्ञाय यज्ञपतये विधिनैपुणाय
योगाय सांख्यशिरसे प्रकृतीश्वराय।

---

ष्यच् प्रत्ययः (१)। लोकवाह्य इत्यनेनासङ्गादित्वमुक्तम् ॥११।२।४० (२०)

खमिति। ज्योतींषि नक्षत्राणि। सत्त्वाणि गवाश्वप्रभृतीणि। हरेः शरीरमिति बुध्वा यत्किञ्चभूतं प्रणमति अनन्य सर्व्वत्र हरि दृष्टा कविः निमिम् ॥११।२।४१ (२१)

य इति। या श्रीः सुरवरैः सदयावलोकं प्रार्थ्यते तां यो भरतः नैच्छत् तदुचितं यतोविष्णुभक्तानां मोक्षोऽपि फल्गुः श्रीशुकः ॥५।१४।४४ (२२)

यज्ञायेति। यज्ञ भरतो मृगत्वं हास्यन् त्यजन् इति समुदाजहार उच्चारितवान्। कर्म्मज्ञान—भक्तिभेदात् नमस्कारः। तत्र

नारायणाय हरये नम इत्युदारं
हास्यन् मृगत्वमपि यः समुदाजहार॥२३॥

गजेन्द्रः।

एकान्तिनो यस्य न कञ्चनार्थं
वाञ्छन्ति ये वै भगवत् प्रपन्नाः।

---

कर्म्मयोगे यज्ञाय उपासनारूपाय धर्म्मपतये उपास्यरूपाय विधौ नैपुण्यं यस्य तस्मै उपासकरूपाय प्रकृतीश्वराय उपास्यरूपाय (सांख्य शिरसि यस्यादरेण गृहीतत्वात् तस्मै उपासकरूपाय) भक्तियोगे। नारं नरसमूहः अयनं यस्य तस्मै। उपास्यरूपाय नररूपेणोपासकरूपाय नामोच्चारणे उपासनारूपाय हरये हृदये इति सर्व्वत्र विशेष्यम्। अपरः प्रकारः यज्ञाय श्रुत्यर्थरूपाय। धर्म्मपतये स्मृत्यर्थरूपाय। विधिनैपुणाय सदाचाररूपाय। एभिस्त्रिभिः त्रयीमार्गः उक्तः। योगाय योगेन समाधिना प्राप्याय क्लेशादि चतुष्टयाय परामृष्टाय पुरुषाय। योगाय इति साध्यसाधनयोरभेदोपचारादुक्तम्। सांख्येषु पुरुषप्रकृत्यादितत्त्वेषु शिरसि शिरोवत् प्रधानभूताय पुरुषाख्य तत्त्वरूपायेत्यर्थः। प्रकृत्या स्वभावेन न तूपाधिना ईश्वराय नियन्त्रे नितेशश्वर्य्याय। पशुपति सदाशिवादि शब्दवाच्यायेत्यर्थः। नारायणाय पञ्चरात्रादितन्त्रेषु निरूप्याय तदेवमार्गं पञ्चकेन प्राप्याय नम इत्यर्थः। शुकः॥५।१४।४५ (२३)

एकान्तिन इति। यस्यैकान्तिनः अव्यभिचारिणः सेवकाः ("यस्य") यस्मात्। कञ्चनमर्थं न वाञ्छन्ति। ये भगवद्भक्ताः (सर्व्वात्मना प्रयत्नेन भगवद्भक्ताः) अत्यद्भुतं तस्य विष्णोश्चरितं

अत्यद्भुतं तच्चरितं सुमङ्गलं
गायन्त आनन्दसमुद्रमग्नाः ॥२४॥

मुचुकुन्दः ।

न कामयेऽन्यं तवपादसेवना-
दकिञ्चन प्रार्थ्यतमाद्वरं विभो ।
आराध्य कस्त्वां ह्यपवर्गदं हरे
वृणीत आर्य्यो वरमात्मबन्धनम् ॥२५॥
तस्माद्विसृज्याशिष ईश सर्वतो
रजस्तमः सत्त्वगुणानुबन्धनाः ।
निरञ्जनं निर्गुणमद्वयं परं
त्वां ज्ञप्तिमात्रं पुरुषं व्रजाम्यहम् ॥२६॥

---

विश्वसृष्ट्यादिकरणं एकत्रस्थिता गायन्ते । गानफलमाह । आनन्द-समुद्रमग्ना इति । गजेन्द्रः भगवन्तम् ॥८।३।२० (२४)

नेति । क आर्य्यः ज्ञात्वा (नो) आत्मनो बन्धनं वरं वृणीतेनकोऽपीत्यर्थः । सर्व्वत्रचैतेषु श्लोकेषु अन्यान (न्या) पेक्षया भजन धर्म्मासक्त्या कोऽप्युत्साहः पुष्यतीति मन्तव्यम् ॥१०।५१।५१ (२५)

तस्मादिति । तदेवं सप्रभेदं वीररसं निरूप्य तदभङ्ग्या भक्तिरसानुभवितुः फलसम्बन्धं दर्शयन् उपसंहरति । तस्मादिति । तस्माद्वराणामनर्थरूपत्वात् । आशिषः आशास्यमानानि फलानि सर्व्वशः लोकत्रयवर्त्तिनीरपि । निर्गुणं त्वां व्रजामि । निर्गुणः कुतः यतो निरञ्जनः । अञ्जनं प्रकाशावरणं मायाख्यम् । सगुणोहि

नारदः ।

नामान्यनन्तस्य गतत्रपः पठन्
गुह्यानि भद्राणि कृतानि च स्मरन् ।
गां पर्य्यटन् तुष्टमना गतस्पृहः
कालं प्रतीक्षन् नमदो विमत्सरः ॥२७॥

कुन्ती ।

शृण्वन्ति गायन्ति गृणन्त्यभीक्ष्णशः
स्मरन्ति नन्दन्ति तवेहितं जनाः ।

---

मायासम्बन्धात्स्वं चाद्वयः । माया सम्बन्धो हि सद्वितीयत्वं स्यात् कुतोऽद्वयः । यतोऽस्मिमात्रः । (मायायाः) सत्ता सत्ताभ्यामनिर्व्वाच्यत्वादित्यर्थः (१) भक्तमहिमानुभक्तिमहिम्नि वोक्त ५ति भक्तनोक्तः । मुचुकुन्दः श्रीकृष्णम् ॥१०।५१।५६ (२६)

नामानीति । ईदृशस्य च कृतकृत्यतया प्रियातिथिवत् मृत्युं प्रतीक्षकत्वात् न किञ्चिदे (कृत्यं) कल्यमस्ति इत्याह । नामानीति । त्रपा लज्जा । कृतानि कर्म्माणि । कालं मृत्युम् । नमदः नम्रीकृत स्थानविशेषः । इत आरभ्य नारदः कुन्तीत्यादि शब्दौ वक्तृ निर्द्देशमात्र विवक्षया न तु भक्ति विवक्षयेति ज्ञेयं विष्णु ग्रहणस्य ज्ञापकत्वात् ॥१।५।११ (२७)

शृण्वन्तीति । एवं भक्तस्य मुख्यत्वाद् ब्रह्मसायुज्यमुक्ता तस्यैव भगवत् सामीप्यादि मुक्तिलिप्सोः स्तुः प्रदर्शयितुकामस्त्वाह । कुन्तीति । अभीक्ष्णशः पुनःपुनः । नन्दन्ति प्रशंसन्ति । ईहितं

(१) सांख्य भाष्य-धृतम् १।२६। "नामदूपानसद्रूपामायानैवोभयात्मिका । सदसद्भ्यामनिर्व्वाच्या मिथ्या भूता सनातनी ।

तदेवं पुनस्त्वचिरेण तावक-
भवप्रवाहोपरमं पदाम्बुजम् ॥२८॥

ब्रह्मा।

यच्च व्रजन्त्यनिमिषा मृषभानुवृत्त्या
दूरे यमाह्युपरि नः स्पृहणीयशीलाः।
भर्त्तुर्मिथः सुयशसः कथनानुरागः
वैक्लव्यवास्पकलया पुलकीकृताङ्गाः ॥२९॥

कर्द्दमः।

लोकांश्च लोकानुगतान् पशूंश्च
हित्वा श्रितास्ते चरणातपत्रम्।

---

कर्मात एव ये श्रवणादिरताः नान्ये। भवः सञ्चारः। सएव प्रवाहः। जलप्रवाहवत् पतितं नमुञ्चन्ति। उच्चावचेषु स्थानेषु पातयतीति प्रवाहः। तस्योपरमोविनाशो यत्र पदाम्बुजेतत्तथा। एतेन सामीप्यरूपा मुक्तिरुक्ता। कुन्ती श्रीभगवन्तम् ॥१।८।३६ (२८)

सालोक्यरूपामाह। यच्चेति। यद्वैकुण्ठं व्रजन्ति दूरेइमः (यमाः) दूरीकृताहङ्काराः। अनिमिषां देवानां ऋषभोविष्णुः। तस्यानुवृत्त्यानो अस्माकं उपरता एतावतस्तो यथापूर्व्वं मन्तरङ्गाः। एवं सार्ष्टि सारूप्येऽपिज्ञेये ॥३।१५।२५ (२९)

किञ्च खिन्नं पुरुषं भगवत्सालोक्यादि मुक्ति मासादयन्तं विभ्रं- शयिषवः सर्व्वाशिष एवमुपमन्त्रयन्ते। तथाहि "अहो अहोऽयतां स्वर्गं एते ते कल्प पादपाः। इमा अप्सरसः श्लाघ्याः सेवस्वेति पुनः पुन"रित्यादि। तत्रचैवमस्तीति चेतसा अज्ञोनकार्य्यः। नाप्युक्तं

परस्परं त्वद्गुणवादशीधु-
पीयूषनिर्यापितदेहधर्म्माः ॥३०॥

कविः।
गृहीत्वापीन्द्रियैरर्थान् यो न द्वेष्टि न हृष्यति।
विष्णोर्मायामिदं पश्यन् स वै भागवतोत्तमः ॥३१॥
देहेन्द्रियप्राणमनोधियां यो
जन्माप्ययक्षुद्भयतर्षकृच्छ्रैः।
संसारधर्मैरविमुह्यमानः

---

योग्य इति गर्व्वः। पुनर्दुःख प्रसङ्गात्। तथा च सूत्रम् "स्थान्युप-निमन्त्रणे सङ्गस्मयाकरणं पुनरनिष्टप्रसङ्गात्" (१) इति। तदेत-दभिप्रेत्याह। लोकानिति। लोका इन्द्रभवनादयः। लोकानु-गतास्तद्वासिनः। तेषां पशुवदाहार मैथुनमात्र वेदित्वात् पशुतुल्य-त्वम्। तान् हित्वा अर्थात् प्रार्थयमानानिति ये श्रिताः तवगुणवाद एव वासनान्तरोत्पादकत्वात्। शीधुर्मद्यम्। रुचिप्रदत्वात् पीयूषं। तेन निर्व्वापितो निष्कासितो देह धर्म्मो विषय वासना-रूपोऽसन्तोषरूपश्च यैः तेतथा। मुख्य' य एवं प्राप्नुवन्तः श्रिता इत्यादि (२) तदुक्त' गीतासु "मच्चित्ता" इत्यादि (ये एवं श्रितास्ते प्राप्नुवन्ते इत्यादि योज्यम्) कर्द्दमः कपिलम् ॥३।२१।१७ (३०)

गृहीत्वेति। एवं वैभजमानस्य विदेह कैवल्यमुक्त्वा सम्प्रत्यारब्ध कर्म्मवशात् देहेसत्यपि विष्णुपद प्राप्ति लक्षणां जीवन्मुक्तिं दर्शयितु मुत्तरग्रन्थ मारभते। कविः ॥११।२।४८ (३१)

स्पष्टं देहेति। इदं जगत् देहस्य जन्माप्ययौ इन्द्रियाणांतर्षौ

---

(१) योगदर्शने ३।५० सूत्रम्।
(२) श्रीमद्भगवद्गीता १०।९ श्लोकः।

स्मृत्यन् हरेर्भागवतप्रधानः ॥३२॥
नकामकर्म्मवीजानां यस्य चेतसि सम्भवः।
वासुदेवैकनिलयः सवैभागवतोत्तमः ॥३३॥
न यस्य जन्मकर्म्मभ्यां न वर्णाश्रम जातिभिः।
सज्जतेऽस्मिन्नहम्भावो देहे वैस हरेः प्रियः ॥३४॥
न यस्य स्वः पर इति वित्तेष्वात्मनि वा भिदा।
सर्व्वभूतसमः शान्तः सवैभागवतोत्तमः ॥३५॥
त्रिभुवनविभवहेतवेऽप्यकुण्ठ
स्मृतिरजितात्मसुरादिभिर्विमृग्यात्।
न चलति भगवत्पदारविन्दात्
लवनिमिषार्द्धमपि यः स वैष्णवाग्रः ॥३६॥

---

विषयलिप्सारूपः प्राणस्य क्षुत्मनसो भयं धियः कृच्छ्रम् खिन्नत्वम् विवेचनाशक्तिरित्यर्थः ॥११।२।४८ (३२)

न कामेति। कामा एव कर्म्म वीजानि। अथवा वीजं अविद्यादि (१) नित्यनिरतिशय सुखात्मकस्वरूपस्यान्यथा ग्रहणमिति यावत्। ततो वाह्य सुखाभिलाषः कामः। तत् सिद्धये व्यापारः कर्म्म ॥११।२।५० (३३)

नेति। जन्मनाकुलं लक्ष्यते। अहंभावो गर्व्वः ॥११।२।५१ (३४)

नेति। आत्मनि शरीरे स्वः अहं परः नाहमिति भिदा जातावेकवचनम्। स्वः मम परो नममेति ॥११।२।५२ (३५)

त्रिभुवनेति। त्रिभुवन विभुत्वञ्च। तद्धेतवे ब्रह्म पदार्थं

---

(१) "अतस्मिन् तद्बुद्धिरविद्या" आदिपदेन अस्मितादीनां ग्रहणम्। सा त्रिधा, पारमार्थिकी व्यवहारिकी, प्रातिभासिकी चेति।

भगवत उरुविक्रमाङ्घ्रि शाखा
नखमणिचन्द्रिकया निरस्ततापे ।
हृदि कथमुपसीदतां पुनः स
प्रभवति चन्द्र इवोदितेऽर्कतापः ॥३७॥

विसृजति हृदयं न यस्य साक्षात्
हरिरवशाभिहितोऽप्यघौघनाशः ।
प्रणयरशनया धृताङ्घ्रिपद्मः
स भवति भागवतप्रधान उक्तः ॥३८॥

श्रीविष्णुः

निष्किञ्चना मय्यनुरक्तचेतसः
शान्ता महान्तोऽखिललोकवत्सलाः ।
कामैरनालब्धधियो मजन्ति ते
यन्नैरपेक्ष्यं न विदुः सुखं मम ॥३९॥

मपि न चलति। यतो भगवत्पदं ब्रह्मपदादपि अधिकं तदाह। अजितेति। अजिते विष्णौ आत्मा मनो येषां तैः ॥११।२।५३ (३६)

भगवत इति। सन्तापस्य चलनं स्यादिति चेत्तत्राह। भगवत इति। उरुर्विक्रमो यस्याङ्घ्रि स्तस्य शाखाः अङ्गुलयः तासां तस्यां नखाएव उज्ज्वलत्वाद्वृत्तत्वाद्दा मणयः तेषां चन्द्रिका प्रभा उपसीदतां भजतां ससन्तापः ॥११।२।५४ (३७)

विसृजतीति। यस्य हृदयं साक्षादनाच्छन्नरूपोहरि र्न विसृजति यतः प्रणय रसनया प्रेमगुणेन धृताङ्घ्रि पद्मः। कविः निमिम् ॥११।२। ५५ (३८)

वाग् गद्गदा द्रवते यस्य चित्तं
रुदत्यभीक्ष्णं हसति क्वचित् क्वचित्।
विलज्ज उद्गायति नृत्यते च
मद्भक्तियुक्तो भुवनं पुनाति ॥४०॥

राजा।

पुनश्च भूयाद् भगवत्यनन्ते
रतिः प्रसङ्गश्च तदाश्रयेषु।
महत्सु यां यामुपयामि सृष्टिं
मैत्र्यस्तु सर्वत्र नमो द्विजेभ्यः ॥४१॥

ध्रुवः।

यानिर्वृतिस्तनुभृतां तव पादपद्म-
ध्यानाद्भवज्जनकथाश्रवणेन वा स्यात्।

निष्किञ्चना इति। अनालब्धाः अस्पृष्टाः नैरपेक्ष्यं निरपेक्षैर्लभ्यम्। श्रीकृष्णः उद्धवम् ॥११।१४।१७ (३८)

वागिति। गद्गदा स्खलिताक्षराः ॥११।१४।२४ (४०)

पुनश्चेति। एवं जीवन्मुक्तं लक्षयित्वा तन्माहात्म्यं ब्रुवाणः तत्सङ्गिनः पुरुषान् स्तौति। पुनश्चेति। पुनर्जन्मान्तरे तदाश्रयेषु भगवदाश्रयेषु। स्वकृष्टमङ्गीयां यां सृष्टिमुपयामि तत्र तत्र महत्सङ्गी भूयात्। तज्जन्मविशेषं प्रार्थयन् नमो द्विजेभ्य इति पुरःस्थितान् ऋषीन् राजानमपि। परीक्षित ऋषीन् प्रति ॥१।१९।१६ (४१)

येति। भगवज्जना जीवन्मुक्ताः। स्वमहिमन्यपि स्वाधीन

मा भ्रश्मणि स्व महिम्नापि नाथ माभूत् ।
किं वान्तकासिलुलितात् पततांविमानात् ॥४२॥
ते न स्मरन्त्यतितरां प्रियमीशमर्त्त्यं
येचान्वदः सुतसुहृद्गृहवित्तदाराः ।
येत्वब्जनाभ भवदीय-पदारविन्द
सौगन्ध्यलुब्धहृदयेषु कृतप्रसङ्गाः ॥४३॥

सूतः ।

तदोपसंहृत्यगिरः सहस्रणो-
र्विमुक्तसङ्ग' मन आदिपुरुषे ।
कृष्णे लसत्पीतपटे चतुर्भुजे
पुरःस्थितेऽमीलितदृगव्यधारयत् ॥४४॥

---

माऽगात्मरेऽपि किन्तु किंपुनः । अन्तकस्यासिनान्(तु) लिता द्विमानात् पततां पराधीन माहात्म्यानामित्यर्थः ॥४।८।१० (४२)

तेनेति । मर्त्त्यं शरीरं प्रियमपि नस्मरन्ति । ये च अदो मर्त्त्यं अनु अमुना देहेन सहस्थिताः । तत्सम्बन्धात् सम्बन्धिनः सुतादयः तानपि नस्मरन्ति । के ये भगवद्भक्तेषु कृत प्रसङ्गः ध्रुवो भगवन्तम् ॥४।८।१२ (४३)

एवं जीवन्मुक्तं लक्षयित्वा सुत्वा चेदानीं अवसिताधिकारस्य तस्य शरीर पातमाह । तदेति । तदा तस्यां दशायां सहस्रणीः (ईन्द्रियाणि) सहस्रेण व्यापाराणां लब्धबलाः गिरः उपसंहृत्यैतेन सर्व्वेन्द्रियोपरतिरुपलक्षिता । अतएव विमुक्त सङ्गं मीलिताद्दृगबुद्धी-

विशुद्धया धारणया हताशुभ-
स्तदीक्षयैवाशुगतायुधव्यथः।
निवृत्तसर्वेन्द्रियवृत्तिविभ्रम-
स्तुष्टाव जन्यं विसृजन् जनार्द्दनम् ॥४५॥

रुद्रः।

प्रत्युद्गमप्रश्रयणाभिवादनं
विधीयते साधुमिथः सुमध्यमे

न्द्रियवृत्तिः यस्मिन् मनसि निधाय मनः कृष्णे व्यधारयदित्यर्थः। अनेन प्रत्याहार पूर्व्वा धारणोक्ता (१) ॥१।८।३० (४४)

विशुद्धा निष्कामा: अशुभं पूर्व्वमघं तस्य श्रीकृष्णस्य ईक्षया साक्षात्कारेण गतानि आयुधव्यथानि यस्य सतया। आयुधवत् व्यथयन्ति इत्यायुधव्यथानि उत्तर पापानि। तथाचोक्तम् तदधिगम उत्तरपूर्व्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् (२)। श्रुतिश्च यथेषीका तूलमग्नौ प्रोतं प्रदूयते एवंह्यास्य सर्व्वे पाप्मानः प्रदूयन्ते (३) इति। विभ्रमो विविधं भ्रमणं। तच्च तत्रासन्तोषात्। तन्निवृत्तिरपूर्व्वं कृष्णाख्यं विषयलाभात् जन्यं शरीरं विसृजन् त्यजन्। जनार्द्दनं कैवल्यदातारं पुरुषमित्युचित पदप्रयोगः। सूतः शौनकम्। स्तुतिरिह मनसा भगवद्गतसाधुत्वानुसन्धानम्। वाचिकत्वंतु व्यवहारदशा विषयत्वात्तदेवाह ॥१।८।३१ (४५)

प्रत्युद्गमेति। प्रश्रयणं विनयः। प्रत्युद्गमादिकं सत्कारोपलक्षणम्। हे सुमध्यमे दाक्षायणि। ततसर्व्वैः प्राणैः प्रश्नाऽल-

(१) योगदर्शनम् "देशवन्धश्चित्तस्य धारणा" ३।१ सूत्रम्।
(२) वेदान्तदर्शनम् ।४।१।१३ सूत्रम्।
(३) छान्दोग्योपनिषत् ५।२४।३

प्राज्ञैः परस्मै पुरुषाय चेतसा
गुहाशयायैव न देहमानिने ॥४६॥
सत्त्वं विशुद्धं वसुदेवशब्दितं
यदीयते तत्र पुमानपावृतः ।
सत्वे च तस्मिन् भगवान् वासुदेवो
ह्यधोक्षजो मे नमसा विधीयते ॥४७॥

शुकः ।

उरुगायतीनामरविन्दलोचनं

---

ऋतम्भराख्या सास्ति येषां तैः। परस्मै तुरीयाय। चेतसैव विधीयते। अर्थादन्यैस्त्वन्यथेत्यर्थः। ऋतम्भरालक्षणन्तु (१) "बुद्ध्यभिव्यक्तं पुरुषं बुद्धिसङ्गविवर्जितम्, यादर्शयति बोधार्कसाम्येऽस्याहृतम्भरा" इति। एवमियता प्रबन्धेन विष्णवादि प्रकरण चतुष्टयीं साङ्गां सकलां च निरूप्याथपन्थकृत् प्रकरण प्रतिपाद्यामिष्ट देवतां प्रणमति। सत्त्वमित्यादि। मे मया भगवानधोक्षजो वासुदेवो हि (च) मनसाविधीयते। नमस्क्रियते। अधःकृतमक्षजमिन्द्रियजं ज्ञानं येन सतथा। निराकार इत्यर्थः। कथन्तर्हि वासुदेव स्तत्राह। सत्त्वेति। तस्मिन् वासुदेवाख्ये उपाधौ स (य) स्वसत्त्वे सद्भावे अधिष्ठाने स (इ) ति। अथ वासुदेवशब्दस्य कोऽर्थं स्तत्राह ॥४।३।२२ (४६)

सत्त्वमिति। यद् यस्मात्तत्र विशुद्धे सत्त्वे पुमान् विष्णुरपावृत ईयते। प्रत्यक्षः प्रतीयते। अनेन वसत्यस्मिन् रमणीयत्वादिति वसु। दीव्यतिद्योततेऽस्मिन् प्रकाशकत्वादिति देव इति शुद्धसत्त्वे

(१) पातञ्जले समाधिपादे ४७।४८ सूत्रे ऋतम्भरातत्र प्रज्ञा।

ग्रन्थोपसंहारः।

विद्वद्धनेश-शिष्येण भिषक् केशव सूनुना।
हेमाद्रिर्व्वोपदेवेन मुक्ताफल मचीकरत् ॥५४॥
स्वर्गे गीर्व्वाणनाथ्यैः सुरपतिमभितः शाल्मिकामां वरेण्यः
पाताले नागराजः फणिपतिसदृशो यस्यगायन्ति कीर्त्तिम्।
यस्तीर्णः शास्त्रपाथोनिधिमखिल मणो ग्रन्थरत्नं सुवृत्तम्,
चक्रे शिष्यैर्धनेशः कविकुलतिलकः केशविर्वोपदेवः ॥५५॥

---

हे एवेति। रामोदाशरथिर्देवशिरोमणिः। तस्य पुरा त्रेतायां चरित्रेषु मध्ये हे एव चरित्रे यत् सिन्धुः समुद्रो बद्धः। यच्च हेमाद्रिः मेरुः समुपानीतः स्वस्य निकटीकृतः। किम्भूतः सूर्य्यस्यरवेः आवृता व्यावृत्तिंगता प्रदक्षिणा परिभ्रमणा (णा) यस्मिन् मेरौ सतथा व्यधिकरण बहुव्रीहिस्तु प्रागुक्तम्। कार्य्यकारणयोरभेदोपचारेण ताटस्थ्य (तच्छब्द) विवक्षया हेमाद्रिशब्देन तज्जं सुवर्णं लक्ष्यते। अर्थिभ्यः प्रदातुं भूयान् सुवर्णराशिरानीत इत्यर्थः। अन्यत्रैवतस्य तु रामस्य अधुना यद्कुलेऽवतीर्णस्य हेएवचित्रे यत् सिन्धुर्गजमको-बद्धः। अत्र सिन्धुशब्देन तद्वन्तोगजालक्ष्यन्ते। सिन्धुरिति जाता-वेकवचनम्। प्रत्यर्थिनोराज्ञः पराभूय तत्सिन्धुराः स्वगृहे बद्धा इत्यर्थः। यच्च हेमाद्रिर्द्विजविशेषः। समुपानीतः समासाज्यस्य महामात्यस्य पदेऽधिकर्त्तुमित्यर्थः। कीदृशः सूरिषु पद वाक्य-प्रमाणादि प्रवीणेषु आवृताः सतशः क्रियमाणत्वादावृत्तिंगता। प्रकृष्टादक्षिणा दानं यस्य सतथा। कोहि नाम वृहस्पतिमपि प्रश्रवा प्रहसत स्तादृशस्यमन्त्रिशिरोमणे र्निजनिकटीकरणान्न चित्रीयते ॥५३॥

विद्वद्धनेश शिष्येणेति अतिरोहितार्थम् ॥५४॥

सकल विबुधमानः श्रीनिकेतं वदान्यः,
समद विबुध सिंहः श्रीनिवासाङ्घ्रि सेऽ(स्ने)हः ।
जयति विनयसिन्धु र्वामनेशः सुबन्धु,ः
प्रणत-सकल भूपः कृष्णवंशैकदीपः ॥५६॥

इति श्रीवोपदेव विरचितं मुक्ताफलं समाप्तम् ॥

इति ग्रन्थोपसंहारः ।

---

सकलान् विबुधान् मानयतीति तथा श्रीनिकेतं ऐश्वर्य्याधारं वदान्यः दानशौण्डः । समदा ये विबुधा स्तेषां सिंहः कवि-केशरी । भगवच्चरणारविन्दे स्नेहो भक्तिः तदयुक्तःवामनः ईशोयस्य श्रेष्ठावन्धवः ( सुशोभना वन्धवः वान्धवाः ) सभासदो यस्य एतादृशो देवगिरीश्वरो रामो यतिः ॥५५॥५६॥

योनित्य शुद्ध सुखबोध वपुर्गितान्तं,
जागर्त्ति चोमिति पदं यमिहापवर्ग्यम् ।
यो योगिनां हृदि चकास्ति विधूत पङ्के,
सोऽस्माकमस्तु शरणं पुरुषः पुराणः ॥१॥
यत्किञ्चिदत्र भवतः खलु वोपदेव,
सूरेः कृतिर्निजधिया परिचर्य्यते मे ।
उद्दिश्य कोविदजनोपकृतिं तदारात्,
आराधनं भगवतः परमेश्वरस्य ॥२॥
छायावतो मरुतदामपिनैकचित्राम्,
पुष्पप्रयामिव भुवि प्रथितां तदीयाम् ।

अजाङ्गनानां दिवमस्पृशध्वनिः।
दध्नश्च निर्मन्थनशब्दमिश्रितो
निरस्यति येन दिशाममङ्गलम् ॥४८॥
स्वस्त्यस्तु विश्वस्य खलः प्रसीदतां
ध्यायन्तु भूतानि शिवं मिथो धिया।
मनश्च भद्रं भजतादधोक्षजे
आविश्यतां नो मतिरप्यहैतुकी ॥४९॥

इति श्रीवोपदेव विरचिते मुक्ताफले विष्णुभक्तानां
वीररसो नामैकोनविंशोऽध्यायः।

---

वसुदेवशब्दस्य प्रवृत्तौ हेतुरुक्तः। तदेवं साकार निराकारे भगवतोऽद्वे रूपे नमस्कृते भवतः। रुद्रः उमाम् ॥४।१।२१ (४७)

अथास्य ग्रन्थस्यप्रचय परिपन्थि विघ्न विघाताय भगवद्गुणमाहात्म्यपरं पद्यमुदाहरति। उरुगायतीनामिति। दध्नश्चध्वनिश्च निर्मथ्यतेऽनेनेति निर्मन्थनं कुठरादि। कूट (ठ) रोमग्र विष्कम्भे तस्य शब्देनमिश्रितः। येन ध्वनिना निरस्यतेतिरस्क्रियते। अमङ्गल मित्येतन्निर्विघ्नत्वे द्योतकं शुकः ॥१०।४६।४६ (४८)

स्वस्तीति एवं जगदपवर्गहेतुं ग्रन्थं प्रणीय तज्जनित सुकृतवासनासनाय। तत्र तत्र भगवानाचार्य्यो विश्वस्य स्वस्य च समीहितमाशास्ते। स्वस्त्यस्तु इति। स्वस्तीति क्षेमवाचकमव्ययम्। ननु खलेषु सत्सु कुतः स्वस्ति तत्राह। खल इति। खलो दुर्ज्जनः। प्रसादः स्वच्छत्वम्। विश्वस्य स्वस्तिप्रतिज्ञाभङ्गभयात् खलस्य प्रसादमात्रं सुखम् न तु विनाशः। एवं योग्यतामुक्त्वा परस्परोपकारे प्रवृत्तिमाह

ध्यायन्तीति। शिवं मङ्गलम्। स्वागतमाशास्ते मनस्वेति। अ-
अस्माकं च मनो भद्रं सात्त्विकं अस्तु भजतात्। अपि शब्दः समुच्चये।
अधोक्षजे नो मतिरावेश्यताम् आवेशं प्राप्नोति आविशयतीति
"प्रातिपदिकात्वात् धात्वर्थे बहुलमिष्टवच्चेति" णिच्। अहैतुकी-
निष्कामा। प्रह्लादः नृसिंहम्॥ ५।१८।९ (४९)

इति हेमाद्रि विरचितायां कैवल्यदीपिकायां विष्णुभक्तानां

वीररसोनाम एकोनविंशोऽध्यायः।

चतुरेण चतुर्व्वर्ग चिन्तामणि वणिज्यया ।
हेमाद्रिणार्ज्जितं मुक्ताफलं पश्यत कौतुकात् ॥५०॥
निर्मथ्य पयसांराशिं मन्दरः कौस्तुभं न्यधात् ।
हेमाद्रिर्वचसां मुक्ताफलं रत्नं हृदि प्रभोः ॥५१॥

ग्रन्थोपसंहार वार्त्तादोनाम्। इहच सकर्त्तकेऽपि यदुराज महामन्त्रिणा हेमाद्रिणाऽभ्यर्थित आचार्य्य स्तत्कर्त्तृत्वं ख्यापितवानिति प्रागुक्तम्। तदेतत्पर्य्यन्तं तत्कीर्त्तिं ख्यापयन्नाह चतुरेणेति चतुर्व्वर्ग चिन्तामण्याख्य ग्रन्थमहोदधेर्वणिज्यतया चतुरेण विदित ग्रन्थरचनारीतिविशेषेण। यथाहि वणिज्यायां तत्तद्देशेभ्यस्तानि तानि प्रियवस्त्वन्याहृत्यपुमान् तत्तद्विषये चतुरोभवति। तथैतेन तत्तत्स्मृतीतिहास पुराणादिभ्य स्तानि निःशेष व्रत-दान-तीर्थ-मोक्षादि-प्रतिपादन पराणि वाक्यान्याहृत्य ग्रन्थरचनायां कौशलमासादितम्। तत स्तस्यैवरेखया भागवतस्य तत्तत्स्कन्धेभ्य स्तानितानि विष्णादि वस्तुचतुष्टय प्रतिपादन पराणि पद्यान्युद्धृत्य (आहृत्य) मुक्ताफलाख्यं प्रकरणं कृतम्। तदेतत् कौतुकात्पश्यत हे कुतूहलिनः इतिशेषः। अस्मिन् विलोकिते सकल कौतुकमवाप्स्यथेतिभावः। अन्यत्र चतुर्णांवर्गाः देशच्छायाः समूहास्तेषां चिन्तापरीक्षा तयोपलक्षिताः मणयो रत्नानि तेषां वणिज्या क्रय विक्रय स्थितिः। तया चतुरेण निपुणेन हेमाद्रिणा बहुसुवर्णेन वणिजा अर्ज्जितं मुक्ताफलम् मौक्तिकानि। जातावेकवचनम्। पश्यतेत्यर्थः। मुक्ताफलशब्दः पक्षद्वयेऽपि प्राग्व्याख्यातः ॥५०॥

एवं तस्य वणिग्रूपेण कुशलतांव्यक्त्वा सुमेरुसाम्येन स्थैर्य्यादिगुणान्व्यनक्ति। निर्मथ्येति। पयसांराशिम् क्षीरोदं मन्दरोमहाचलः

हेमाद्रि माद्रियत एव गुणेन येन
तेनैव पूरित मुखेन सुवद्ध मेतत् ।
मुक्ताफलं प्रतिफलज्जगदीशरूपं
यत्कर्णकण्ठ कुहरे सुषमास्य काचित् ॥५२॥
द्वे एव चित्रे रामस्य सिन्धुर्लब्ध: पुराधुना ।
हेमाद्रि: स्वमुपानीत: पुर्य्यावर्त्तं प्रदक्षिणः ॥५३॥

---

न्यथाविचिन्तितवान् । हेमाद्रिर्मेरुः कामदेवात्मजस्य वचसां राशिं ... नवतास्वंर निर्म्मर्थ्य मुक्ताफलाख्यं रत्नं ग्रन्थश्च प्रभोः श्रीकृष्णस्य ... टिन्यधादित्यर्थ: । विष्णोरयमलङ्कार इतिभाव: ॥५१॥

हेमाद्रि मित्यादि । येन सकल कथा कौशलरूपेण गुणेन हेमाद्रिंजन आद्रियते सत्कुरुते तेनैव गुणेन पूरितं तत्साधन सम्पादनादर्थिनां सुखं येन गुणेन । अर्थिजनेषु कल्पतरवोच्छितस्य गुणाः । एतत्प्रकरणं सुवद्धं सुघटितं प्रतिफलत् वुद्धिदर्पणे प्रतिविम्बोभवत् जगदीशस्य विष्णोः रूपं येन यस्मिन् ग्रन्थेन तत्तथा । तुल्याधिकरणाद्बहुव्रीहेः प्रशंसायां रूपप्रत्ययो वा सर्व्वथा राजालङ्करणमित्यर्थं । तदेतत् यस्य कर्णे श्रवणे कण्ठे घोषेण हृदये तदर्थचिन्तनेनाश्रु तस्य पुंसः काचित् स्वसम्वेद्याद्या सुषमा परमात्म प्रकाशरूपा परमशोभा भवतीत्यर्थ: अन्यत्रतु येन गुणेन सूत्रेण हेमाद्रेः सुमेरोर्मालक्ष्मीः शोभा आद्रियते । मेरुविकारस्य सुवर्णस्य निकटस्थतया स्वीक्रियते तेनपूरितं भृतं (सृतं) स्वप्रवेशेन सर्व्वं मौक्तिकवेध्यस्थानं येन गुणेन तेनैव एतद्ग्रन्थरत्नं सुवद्धं सुग्रन्थितं प्रतिफलत् निर्म्मलतया प्रतिविम्बो भवत् जगदेव ईशस्यरूपं यस्मिन् मौक्तिके । यद्वाप्रतिफलत् जगदीशस्य राज्ञोरूपं यस्मिन् तत्तथा ॥५२॥

टीकां प्रियां परमहंस जनस्य हृष्ट्वा,
ग्रन्थः कृतोऽत्र कृतिनां हृदां तु (ति) तोषम् ॥३॥
अतत्वे तत्वधीर्य्येषां तत्वेचातत्व धीर्नृणाम्।
नतानानन्दयन्त्वेता वोपदेवस्य सूक्तयः ॥४॥
यस्य व्याकरणे वरेण्य घटना स्फीताः प्रबन्धादश,
प्रख्यातानव वैद्यकेऽथतिथि निर्धारार्थ मेकोद्भुतः।
साहित्येत्रय एव भागवत तत्वोक्तरेक स्तथा,
भव्याद्वाणी शिरोमणेरिह गुणाः के के न लोकोत्तराः ॥५॥
टीकामुक्ताफलस्येमां नाम्ना कैवल्यदीपिकाम्।
हेमाद्रिः कण्ठके चक्रेरा (का) मराजस्य वेश्मनि ॥६॥

इति श्रीमत् प्रौढ़ प्रतापचक्रवर्त्ति— महाराजाधिराज
सोमयदुवंशोद्भव रामराज-मन्त्रिवर्य्य हेमाद्रि
विरचिता मुक्ताफलटीका समाप्ता ॥

